समस्तं तद्धिंसासंभवं ज्ञेयं ॥५०॥ ज्योतिश्चक्रस्य चंद्रो हरिरमृतभुजां चंडरोचिर्ग्रहाणां कल्पांगः पादपानां सलिलनि
धिरपां स्वर्णशैलो गिरीणां ॥ देवः श्रीवीतरागस्त्रिदशमुनिगणस्यात्र नाथो यथायं तद्वच्छीलव्रतानां प्रशमयमत
पसां विद्धि हिंसाप्रधानं ॥५१॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे अहिंसाप्रकरणम् ॥ ८ ॥
यः संयमधुरां धत्ते धैर्यमालंब्य संयमी ॥ स पालयति यत्नेन वाग्वने सत्यपादपं ॥१॥ अहिंसाव्रतरक्षार्थं यमजातं
जिनैर्मतं ॥ नारोहति परां कोटिं तद्विना सत्यदूषितं ॥२॥ असत्यमपि तत्सत्यं यत्सत्वाशंसकं वचः ॥ सावद्यं यच्च पुष्णा
ति तत्सत्यमपि गर्हितं ॥३॥ अनेकजन्मजक्लेशशुद्ध्यर्थं यस्तपस्यति ॥ सर्वसत्वहितं शश्वत्स ब्रूते सूनृतं वचः ॥४॥ सू
नृतं करुणाक्रांतमविरुद्धमनाकुलं ॥ अग्राम्यं गौरवाश्लिष्टं वचः शास्त्रे प्रशस्यते ॥५॥ मौनमेव हितं पुंसां शश्वत्सर्वार्थ

सिद्धये वचो वाचि प्रियं तथ्यं सर्वसत्वोपकारि यत् ॥६॥ यो जिनैर्जगतां मार्गः प्रणीतोऽत्यंतशाश्वतः ॥ असत्यबलतः
पि निर्दयैः कथ्यतेऽन्यथा ॥७॥ विचार्यासत्यसंदोहं खलैर्लोकः खलीकृतः ॥ कुशास्त्रैः स्वमुखोद्गीर्णैरित्याद्यं गहनं
तमः ॥८॥ जयंति ते जगद्वंद्याः यैः सत्यकरुणामयो अवंचकश्च लोकोऽयं पथि शाश्वत्प्रतिष्ठितः ॥९॥ असद्वदनव
के विपालविषसर्पिणी ॥ उद्वेजयति वागेवं जगदंतर्विषोल्वणा ॥१०॥ न सास्ति काचिद्व्यवहारवर्तिनी न यत्र वा
स्फुरति प्रवर्तिका ॥ ब्रुवन्नसत्यामिह तां हतात्मा प्रायः करोति विश्वव्यवहारविप्लवम् ॥११॥ पृष्टैरपि न वक्तव्यं न श्रो
वचः शंकाकुलं पापं दोषाढ्यं चाभ्यसूयकं ॥१२॥ मर्मच्छेदि मनःशल्यं च्युतस्थैर्यं विरोधकं ॥ निर्दयं
त्याज्यं प्राणैः कंठगतैरपि ॥१३॥ धन्यास्ते हृदये येषामुदीर्णः करुणाम्बुधिः ॥ वाग्वीचिसंचयोल्लासैर्निर्वापि

हिनः॥१४॥ धर्मनाशे क्रियाध्वंसे स्वसिद्धांतार्थविप्लवे। अपृष्टैरपि वक्तव्यं तत्स्वरूपप्रकाशने॥१५॥ यस्यां मुकुमोहयत्यै [?]

लग्ना … सर्पिणी … वाणी … विस्तारीतै

व विश्रांता कर्णयोर्जनं॥ विषमं विषमुत्सृज्य सा वप्पं पन्नगी नगी॥१६॥ असत्येनैव विक्रम्य चार्वाकद्विजकौलिकैः

मार्गे … स्थापित … नगरप्रणालसदृशं

सर्वाक्षपोषकं धूर्त्तैः पश्य पक्षं प्रतिष्ठितं॥१७॥ मन्ये पुरजलावर्त्तप्रतिमं तन्मुखोदरं। यतो वाचः प्रवर्त्तंते कश्मलाः

कार्यनिःफलाः॥ प्राप्नुवंत्यतिघोरेषु रौरवादिषु संभवं। तिर्यक्ष्वथ निगोदेषु मृषावाक्येन देहिनः॥१९॥ न तथा चंदनं

पुष्पमाला

चंद्रमणयो मालती स्रजः॥ कुर्वंति निर्वृतिं पुंसां यथा वाणी श्रुतिप्रिया॥२०॥ अपि दावानलप्लुष्टं साद्वं संजायते वनं

विषमानेअपि

न लोकः सुचिरेणापि जिह्वानलकदर्थितः॥२१॥ सर्वलोकप्रिये तथ्ये प्रसन्ने ललिताक्षरे। वाक्ये सत्यपि किं ब्रूते नि

अधमजन

कृष्टः परुषं वचः॥२२॥ सतां विज्ञाततत्त्वानां सत्यशीलावलंबिनां। चरणस्पर्शमात्रेण विशुध्यति धरातलं॥२३॥ यमक

णोपेतं सत्यश्रुतसमन्वितम्॥ ये जन्म सफलं नीतं ते धन्या धीमतां मताः॥२४॥ नृजन्मन्यपि यः सत्यप्रतिज्ञाप्र
तो धमः॥ स केन कर्मणा पश्चाज्जन्मपंकं तरिष्यति॥२५॥ अदयैः संप्रयुक्तानि वाक्शस्त्राणि हि भूतले सद्यो
णि कृंतंति शितास्त्राणि वदेहिनाम्॥२६॥ व्रतश्रुतयमस्थानं विद्याविनयभूषणं॥ चरणज्ञानयोर्बीजं सत्यसं
ज्ञं व्रतं मतं॥२७॥ न हि सत्यप्रतिज्ञस्य पुण्यकर्मावलंबिनः॥ प्रत्यूहकरणे (विघ्नं) शक्ता अपि दैत्योरगादयः॥२८॥ चंद्रमू
र्त्तिवाँनंदं वर्द्धयंत्री जगत्त्रये॥ स्वर्गे निर्गीयते मूर्द्धि कीर्तिः सत्योत्थिता नृणां॥२९॥ खंडितानां विरूपाणां दुर्वि
रोगिणां॥ कुलजात्यादिहीनानां सत्यमेकं विभूषणं॥३०॥ यस्तपस्वी जटी मुंडो नग्नो वा चीवरावृतः (वल्कला)॥ सोऽप्यसत्यं य
दि ब्रूते निंद्यः स्यादंत्यजादपि (चांडालात्)॥३१॥ कुटुंबं जीवितं वित्तं यद्यसत्येन वर्द्धते॥ तथापि युज्यते वक्तुं नासत्यं शीलशालि

३२॥ कृतः सकलं पापं असत्योच्चं तथान्यतः। साम्यमेव वदंत्यार्यास्तुलायां धृतयोस्तयोः॥३३॥ मूकतां मतिवैकल्यं

चांडाल घूघू मार्जार स्यालस्याल श्वान

मूर्खत्वं बोधिविच्युतिं। बाधिर्यं मुखरोगित्वं असत्याद्वदेहिनाम्॥३४॥ श्वपाकोलूकमार्जारवृकगोमायुमंडलं

स्वीक्रियंते द्विकचिंद्रोकैर्नरैरसत्यच्युतचेतसः॥३५॥ प्रसन्नोन्नतवृत्तानां गुणानां चंद्ररोचिषां। संघातं घातयत्येव सद्य

वदित असत्य

दप्युदितं मृषा॥३६॥ न हि स्वप्नेपि संसर्गं असत्यमलिनैः सह। कश्चित्करोति पुण्यात्मा दुरितोलूकपांकया॥३७॥ ज

गद्वंद्यैः सतां सेव्यैः भव्यव्यसनशुद्धिदैः। शुभैः कर्मणि योग्यः स्यान्नासत्यमलिनो जनः॥३८॥ महामतिभिर्निष्ठ्यूतं

उच्छीष्टं

देवदेवैर्निषेधितं। असत्यं पोषितं पापैः दुःशीलाधमनास्तिकैः॥३९॥ सुतस्वजनदारार्थं वित्तबंधुकृतेथवा।

आत्मार्थे न वचोऽसत्यं वाच्यं प्राणात्ययेपि वा॥४०॥ परोपरोधादपि निंदितं वचो ब्रुवन्नरो गच्छति नारकीं पुरीम्॥४१॥ अ

प्रगटं

निंद्यवृत्तोपि गुणी नरेश्वरो वसुर्यथागादिति लोकविश्रुतम् ॥४१॥ चंचन्मस्तकमौलिरत्नविकटज्योतिश्छटाडंबरैः देवाः पल्लवयंति यच्चरणयोः पीठं लुठंतोप्यमी ॥ कुर्वन्ति ग्रहलोकपालखचरा यत्प्रातिहार्यं नृणां प्राप्यंति ज्ञनना द्ययंश्च यदिदं तत्सत्यवाचः फलं ॥४२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे सत्यप्रकरणम् ॥छ॥

बहुधा

प्रनामाद्यव्रतं नाम तृतीयं गुणभूषणं ॥ नापवर्गपथि प्रायः क्वचिद्दत्ते मुनिः स्थितिम् ॥१॥ यः समीप्रतिजन्माब्धेः पारमाक्रामितुं सुधीः ॥ स त्रिशुद्ध्यातिनिःप्रोको नादत्ते कुरुते मतिम् ॥२॥ वित्तमेव मतं सूत्रे प्राणा बाह्याः शरीरिणाम् ॥ तस्यापहारमात्रेण स्युस्ते प्रागेव घातिताः ॥३॥

लघुत्वं

गुणा गौणत्वमायांति यांति विद्याः विडंबना ॥ चौर्येणाकीर्तयः पुंसां शिरस्यादधते पदं ॥४॥

समूहानि

पुण्यानुष्ठानजातानि प्रणश्यंती हदेहिनाम् ॥ परवित्तामिष

ग्रामलालसानां धरातले ॥ ४ ॥ परद्रव्यग्रहासक्तस्य तस्करस्येह निर्दया। गुरुबंधुसुतान् हंतुं प्रायः प्रज्ञा प्रवर्तते ॥ ६ ॥

चौरस्वभावं

हृदि यस्य पदं धत्ते परवित्तामिषस्पृहा। करोति किं न किं तस्य कंठलग्नेव सर्पिणी ॥ ७ ॥ चुराशीलं विनिश्चित्य परि-
त्यजति शंकिता। वित्तापहारदोषेण जनन्यपि सुतं निजं ॥ ८ ॥ भ्रातरः पितरः पुत्राः स्वकुल्या मित्रबांधवाः संसर्ग-

भिद्यात

मपि नेच्छंति क्षणार्द्धमिह तस्करैः ॥ ९ ॥ न जने न वने चेतः स्वस्थं चोरस्य जायते। मृगस्येवोद्धतव्याधादाशंकपव-
धमात्मनः ॥ १० ॥ मंत्रासोद्भ्रांतचेतस्कश्चोरो जागर्त्यहर्निशं। बध्येयात्रं ध्रियेयात्रं मार्येयात्रेति शंकितः ॥ ११ ॥ ना-
त्मरक्षां न दाक्षिण्यं नोपकारं न धर्मतां। न सतां शंसितं कर्म चोरः स्वप्नेपि बुध्यते ॥ १२ ॥ तृणांकुरमिवादाय घात-

संसर्गी

यंत्यविलंबितं। चोरं विज्ञाय निःशंका धीमंतोपि धरातले ॥ १३ ॥ गुरवो लाघवं नीता गुणिनोप्यत्र खंडिताः। चोरसं-

परलोके
अयं दोषेण यतयो निधनं गताः॥१४॥ विशंति नरकं घोरं दुःखज्वालाकरालितं॥ अमुत्र नियतं मूढ प्रा
नदी नगर पर्वत ग्राम वन घर
चर्चिता॥१५॥ सरित्पुरगिरिग्रामवनवेश्मजलादिषु॥ स्थापितं पतितं नष्टं परस्वं त्यज सर्वथा॥१६॥ चिद्रूप
वांछा
यत्परस्वमनेकधा॥ तत्त्याज्यं संयमोद्दामसीमासंरक्षणोद्यतैः॥१७॥ आस्तां परधनादित्सा कर्तुं स्वप्नेपि धी
चारित्र
तृणमात्रमपि ग्राह्यं नादत्तं दंतशुद्धये॥१८॥ अतुलसुखसिद्धिहेतोर्धर्म्मयशश्चरणरक्षणार्थं च॥ इहपरलोका
तार्थं कलय स्वचित्तेपि मा चौर्य्यम्॥१९॥ विषयविरतिमूलं संयमोद्दामशाखं यमदमशमपुष्पं ज्ञानलीला
म॥ विबुधजनशकुंतैः सेवितं धर्मवृक्षं दहति मुनिरपीह स्तेयतीव्रानलेन॥२०॥ इत्याचार्यश्रीशुभचंद्रविर
चिते ज्ञानार्णवे योगप्रदीपाधिकारे चौर्य्यपरिहारप्रकरणम्॥ छ॥ विदंति परमं ब्रह्म यत्समालंब्य योगिनः॥ तद्व्रतं

ह्मचर्यंस्याद्वीरधौरेयगोचरं।१।तत्प्रपंचंप्रवक्ष्यामिज्ञात्वेदंगहनंव्रतं।स्वल्पोपिनसतांलोकेप्रायःकार्योस्याल्लोकविस

रमः।२।एकमेवव्रतंश्लाघ्यंब्रह्मचर्यंजगत्त्रये।यद्विशुद्धिंसमापन्नाःपूज्यंतेपूजितैरपि।३।ब्रह्मव्रतमिदंजीयाच्चर

ब्रह्मचर्य

णस्यैवजीवितम्।स्युःसंतोपिगुणायेनविनाक्लेशायदेहिनाम्।४।नाल्पसत्त्वैर्ननिःशीलैर्नदीनैर्नाक्षनिर्जि

तैः।स्वप्नेपिचरितुंशक्यंब्रह्मचर्यमिदंनरैः।५।पर्यंतविरसंविद्धिदशधान्यच्चमैथुनं।योषित्संगाद्विरक्तेनत्याज

गीतनृत्यवाद्य

मेवंमनीषिणा।६।आद्यंशरीरसंस्कारोद्वितीयंवृष्यसेवनं।तौर्यत्रिकंतृतीयंस्यात्संसर्गस्तुर्यमिष्यते।७।योषि

द्विषयसंकल्पःपंचमंपरिकीर्तितं।तदंगवीक्षणंषष्ठंसत्कारःसप्तमंमतं।८।पूर्वानुभूतसंभोगस्मरणंस्यात्तद

विर्यनाशन　　विषफलसमानं　　प्रथमंसवनेरम्य

ष्टमं।नवमंभाविनीचिंतादशमंवस्तिमोक्षणं।९।किंपाकफलसंभोगसन्निभंतद्धिमैथुनं।आपातमात्ररम्यं

सेव्यते

स्याद्विपाकेऽत्यंतनिंदितं ॥१०॥ विरज्य कामभोगेषु ये ब्रह्म समुपासते ॥ ते दश महादोषास्तैः त्याज्या भावशुद्धये ॥
११॥ अपि च ॥ स्मरप्रकोपसंभूतान् स्त्रीकृतान्मैथुनोत्थितान् ॥ संसर्गप्रभवान् ज्ञात्वा दोषान् स्त्रीषु विरज्यताम् ॥१२॥
घृष्टा ॥ सिक्तोऽप्यंबुधरव्रातैः प्लावितोऽप्यंबुराशिभिः ॥ न हि त्यजति संतापं कामवह्निप्रदीपितः ॥१३॥ मूलं ज्येष्ठस्य
ध्याङ्गे विभ्रंनभसि भास्करः ॥ न प्रापतितथा लोकं यथा दीप्तस्मरानलः ॥१४॥ हृदि ज्वलति कामाग्निः पूर्वमेव श
रीणाम् ॥ भस्मसात्कुरुते पश्चादंगोपांगानि निर्दयं ॥१५॥ अचिंत्यकामभोगीन्द्रविषव्यापारमूर्छितं ॥ वीक्ष्य
श्वं विवेकाय यतंते योगिनः परम् ॥१६॥ स्मरव्यालविषोद्गारैर्वीक्ष्य विश्वं कदर्थितं ॥ यमिनः शरणं जग्मुर्विवे
वनितासुतं ॥१७॥ एक एव स्मरो वीरः स चैकोऽचिंत्यविक्रमः ॥ अवज्ञयैव येनेदं पादपीठीकृतं जगत् ॥१८॥ एकाकं ॥४

अतुलपराक्रमः

जयत्येष जीवलोकं चराचरं मनोभूर्नगमानीयस्त्वप्रातिव्याहतक्रमः ॥१९॥ अपीडयत्येव निःशंको मनोभूर्भुवन

त्रयं प्रतीकारप्रातेनापि यस्य भंगो न भूतले ॥२०॥ कालकूटादहं मन्ये स्मरसंगं महाविषं स्यात्पूर्वं सप्रतीकारं नि

स्त्रीशरीर कादौ

प्रतिकारमुत्तरं ॥२१॥ जंतुजातमिदं मन्ये स्मरवह्निप्रदीपितं मज्जत्यगाधमध्यस्य पुरंध्रीकायकर्दमम् ॥२२॥ अन

तव्यसनां सारदुर्गे भवमरुस्थले स्मरज्वरपिपासार्ता विपद्यंते शरीरिणः ॥२३॥ घृणास्पदमतिक्रूरं पापाढ्यं योगि

षितं जनोऽयं कुरुते कर्म स्मरशार्दूलचर्वितः ॥२४॥ दिग्मूढमथ विभ्रांतमुन्मत्तं शंकिताशयं ॥ विलक्षं कुरुते लो

कं स्मरवैरी विजृंभितः ॥२५॥ न हि क्षणमपि स्वस्थं चेतः स्वप्नेऽपि जायते मनोभवशरव्रातैर्भिद्यमानं शरीरिणाम् ॥२६॥

जानन्नपि न जानाति पश्यन्नपि न पश्यति लोकः कामानलज्वालाकलापकवलीकृतः ॥२७॥ भोगिदष्टस्य जायंते

वेगाः सप्तैव देहिनां। स्मरभोगीन्द्रदष्टानां दश स्युस्ते महाभयाः॥२८॥ तद्यथा॥ प्रथमे जायते चिंता द्वितीये द्रष्टुं
स्युंस्तृतीये तिनिःश्वासांश्चतुर्थे भजते ज्वरम्॥२९॥ पंचमे दह्यते गात्रं षष्ठे भुक्तं न रोचते। सप्तमे स्यान्म
छ्रा उन्मत्तत्वमष्टमे॥३०॥ नवमे प्राणसंदेहो दशमे मुच्यतेऽसुभिः॥ एतैर्वेगैः समाक्रांतो जीवस्तत्त्वं न पश्यति॥३१॥
संकल्पवशतस्तीव्रा वेगा मंदाश्च मध्यमाः॥ मोहज्वरप्रकोपेन प्रभवंतीह देहिनाम्॥३२॥ अपि मानसमुत्तुंगनग
शृंगाग्रवर्तिनाम्। स्मरवीरः क्षणार्द्धेन विधत्ते मानखंडनं॥३३॥ शीलशालमतिक्रम्य धीधनैरपि तन्यते (क्रियते)
त्वमंत्यजस्त्रीणां संभोगाय स्मराज्ञया॥३४॥ प्र वृद्धमपि चारित्रं ध्वंसयत्याशु देहिनाम्। निरुणद्धि श्रुतं सत्यं धत्ते
मदनव्यथा॥३५॥ नाशने शयने याने स्वजने भोजने स्थितम्। क्षणमात्रमपि प्राणी प्राप्नोति स्मरशल्यितः॥३

वित्तवृत्तबलस्यांतंस्वकुलस्यचलांछनं मरणंवासमीपस्थंनस्मरार्त्तःप्रपश्यति॥३७॥नपिशाचोरगारोगानदैत्य
ग्रहराक्षसाः॥पीडयंतितथालोकंयथायंमदनज्वरः॥३८॥प्रनासाद्यजनःकामी कामिनीहृदयप्रियां॥विषश
स्त्रानलोपायैःसद्यःस्वंहंतुमिच्छति॥३९॥दक्षोमूढःक्षमीक्षुद्रःशूरोभीरुर्गुरुर्लघुः॥तीक्ष्णःकुंठोवशीभ्रष्टोज
नःस्यात्स्मरवंचितः॥४०॥कुर्वंतिवनिताहेतोरचिंत्यमपिसाहसं॥नराःकामहठात्कारविधुरीकृतचेतसः॥४१॥उन्मू
लयतिविश्रांतंपूज्यंश्रीधर्मपादपं॥मनोभवमहादंतीमनुष्याणांनिरंकुशः॥४२॥प्रकुप्यतिनरःकामीबकुलंब्र
ह्मचारिणां॥जनायजाग्रतेचौरोरजन्यांसंचरन्निव॥४३॥स्नुषांश्वश्रूंसुतांधात्रींगुरुपत्नींतपस्विनीं॥तिरश्चीमपिक
मार्त्तोनरःस्त्रीभोक्तुमिच्छति॥४४॥किंचकामशरव्रातजर्जरेमनसिस्थितिं॥निमेषमपिबध्नातिनविवेकसुधारसः॥
॥४५॥

हरिहरपितामहाद्या बलिनोपि तथा स्मरेण विध्वस्ता ॥ त्यक्तत्रपाश्च तैस्त्वां कान्नारीं न मुंचंति ॥४८॥ धाय दिग्वातं त्वया
ढं नृत्वं जन्मोग्रसंक्रमे ॥ तदा तत्कुरु येनैयं स्मरज्वाला विलीयते ॥४९॥ स्मरदहनसुतीव्रानंतसंतापविद्धं भुवन
मिति समस्तं वीक्ष्य योगिप्रवीराः ॥ विगतविषयसंगाः प्रत्यहं संश्रयंते प्रशमजलधितीरं संयमारामरम्यं ॥५०॥ इत्या
(कर्म्म)
चार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे कामप्रकोपप्रकरणम् ॥ छ ॥ कुर्वंति यन्मदोद्रेकदर्प्पि
(कर्म्मण.)
ता भुवि योषितः ॥ प्राप्ताः प्राप्नोमि तस्यैहं न वक्तुं कश्चिदीश्वरः ॥१॥ धारयंत्यमृतं वाचि हृदि हालाहलं विषं ॥ निसर्गकु
टिला नार्यो न विद्मः केन निर्मिताः ॥२॥ वज्रज्वलनलेखेव भोगिदंष्ट्रेव केवलं ॥ वनितेयं मनुष्याणां संतापभयदा
(निकासयति)
यिनी ॥३॥ उद्वासयति निःशंका जगत्पूज्यं गुणव्रजं ॥ बध्नाति वसति चित्ते सतामपि नितंबिनी ॥४॥ वरमालिंगिता क्रुद्धा

चंपलजिन्हा
चलच्छोला त्रसर्पिणी॥ न पुनः कौतुकेनापि नारी नरकपद्धतिः॥५॥ हृदि दत्ते तथा दाहं स्पृष्टा कृतभुक्शिखा॥ वनितैव
यथा पुंसां मिंडियार्थप्रकोपिनी॥६॥ संध्येव क्षणरागाढ्या निम्नगेवाधरप्रिया॥ वक्रा बालेंदुलेखेव भवंति नियतं स्त्रि
यः॥७॥ धूमावल्य इवाशंकाः कुर्वंति मलिनं क्षणात्॥ मदनोन्मादसंभ्रांता योषितः स्वकुलं ग्रहं॥८॥ निर्दयत्वमनार्य
त्वं मूर्खत्वमतिचापलं॥ वंचकत्वं कुशीलत्वं स्त्रीणां दोषाः स्वभावजाः॥९॥ विचरंति कुशीलेषु लंघयंति कुलक्रमं॥
न स्मरंति गुरुं मित्रं पतिं पुत्रं च योषितः॥१०॥ वश्यांजनादितंत्राणि मंत्रयंत्राण्यनेकधा॥ व्यर्थीभवंति सर्वाणि वनि
तां राधनं प्रति॥११॥ अगाधक्रोधवेगांधाः कर्म कुर्वंति तत्स्त्रियः॥ सद्यः पतति येनैतद्भुवनं दुःखसागरे॥१२॥ स्वातंत्र्य
मभिवांछंताः कुलकल्पमहीरुहं॥ अविचार्यैव निघ्नंति स्त्रियोभीष्टफलप्रदम्॥१३॥ न दानेन न चमौजन्येन प्रतिष्ठां न

गोरवंनचपश्यंतिकामांधाःयोषितःस्वान्ययोर्हितं।१४।नतत्क्रुद्धाहरिव्याघ्रव्यालानलनरेश्वराः।कुर्वंतियत्करोत्ये
पुरुषे
रिनारीनिरंकुशा।१५।यामांसाद्यत्वयाकांतांसोढव्यानारकीव्यथा।तस्याःवार्तापिनश्लाघ्याकथमालिंगन
१६।सकोपिस्मर्यतांदेवोमंत्रोवालंब्यसाहसं।यतोंगनापिशाचीयंग्रसितुंनोपसर्पति।१७।एकैवववनिताव्याली
चिंत्यपराक्रमा।लीलयैववययामूढखंडितंजगतांत्रयं।१८।नतद्दृष्टंश्रुतंज्ञानंनतच्छास्त्रेषुचर्च्चितं।यत्कुर्वंति
एकीकृत्य
हापापंस्त्रियःकामकलंकिता।१९।यमजिह्वानलज्वालावज्रविद्युद्विषांकुरान्।समाहृत्यकृतामन्येवेधसेयंवि
सिनी।२०।मनस्यन्यद्वचस्यन्यद्वपुष्यन्यद्विचेष्टितं।यासांप्रकृतिदोषेणप्रेमतासांकियच्चिरम्।२१।अप्युत्तुंगाः
चंद्रमा सूर्य
तिष्ठंतिनरानार्यैर्गसंगता।यथावामितिलोकस्यस्तनाभ्यांप्रकटीकृतम्।२२।यदींदुस्तीव्रतांधत्तेचंडरोचिश्चशी

पुरुषे

ततो दैवात्तथापि नो धत्ते नरि नारी स्थिरं मनः॥२२॥ देवदैत्योरगव्यालग्रहचंद्रार्कचेष्टितम्॥ विदंति ये महाप्राज्ञास्तेपि वृ
त्तं न योषिताम्॥२३॥ सुखदुःखजयपराजयजीवितमरणानि ये विजानंति॥ मुह्यंति तेपि नूनं तत्त्वविदश्चेष्टिते स्त्रीणां
॥२४॥ जलधेर्यानपात्राणि ग्रहाद्या गगनस्य च॥ यांति पारं न तु स्त्रीणां दुश्चरित्रस्य केचन॥२५॥ आरोपयंति संदेहतु
लायां मतिनिर्दया॥ नार्यः पतिं च पुत्रं च पितरं च क्षणादपि॥२६॥ शृंगंति विपिने व्याघ्रं प्राकुं तं गगने स्थितं॥ सरि
उद्गतं मीनं न स्त्रीणां चपलं मनः॥२७॥ नांतरस्ति जगत्यस्मिन्मणिमंत्रौषधांजनं॥ विद्यांश्रयेन सद्भावं प्रयास्यंति

दासीपुत्रै. कामदेवांक

हयोषितः॥२८॥ मनोभवसमं शूरं कुलीनं भुवनेश्वरम्॥ हत्वा स्त्रियः पतिं सद्यो रमंते चेटकासुतैः॥२९॥ स्मरोत्संगमं
प्राप्य वांछंति पुरुषांतरं॥ नार्यः सर्वाः स्वभावेन वदंतीत्यमलाप्रया॥३०॥ विनांजनेन तंत्रेण मंत्रेण विनयेन च॥ वं

घ्नंति नरं नार्यः प्रज्ञाधनमपि क्षणात् ॥३१॥ कुलजातिगुणभ्रष्टं निकृष्टं दुष्टचेष्टितं ॥ प्रस्पृश्यमधमं प्रायो मन्ये

पुरुषैः महानपराक्रमैः

णां प्रियं नरं ॥३२॥ वैरिवारणदंताग्रे समारुह्य स्थिरीकृता ॥ वीरश्रीर्यैर्महासत्वैर्योषिद्भिस्तेपि खंडिताः ॥३३॥

स्थापिता

गौरवेषु प्रतिष्ठासु गुणेष्वाराध्यकोटिषु ॥ धृता अपि निमज्जंति दोषपंके स्वयं स्त्रियः ॥३४॥ कृत्वाप्यकार्यलक्षा

प्रत्यक्षमपि योषितः ॥ छादयंत्येव निःशंकाः विश्ववंचनपंडिताः ॥३५॥ दोषान्गुणेषु पश्यंति प्रियेकुर्वंति वि

अंजलीकरणादिकैः

यं सन्मानिताः प्रकुप्यंति निसर्गकुटिलाः स्त्रियः ॥३६॥ दानसन्मानसंभोगप्रणतिप्रतिपत्तिभिः ॥ अपि सेवा

रं नाथं घ्नंति नार्योतिनिर्दया ॥३७॥ विषमध्ये सुधास्पंदं सस्यजातं पुलोच्चये ॥ संभाव्यं न तु संभाव्यं चेतः स्त्री

निर्दोषं ने

मकन्मलं ॥३८॥ वंध्यां गजस्य राज्यश्रीः पुष्पश्रीर्गगनस्य च ॥ स्याद्दैवान्न तु नारीणां मनःशुद्धिर्मनागपि ॥३९॥ कुल

द्वयमहाकष्टं भस्मसात्कुरुते क्षणात् ॥ दुश्चारित्रसमीरालीप्रदीप्तो वनितानलः ॥४५॥ सुराचलइवाकंपा अगाधा
वार्द्धिवज्जुषां ॥ नीयंते त्र नराः स्त्रीभिः विधूतिं क्षणांतरे ॥४६॥ वित्तहीनो जरी रोगी दुर्बलः स्थानविच्युतः ॥ कुलीनाभि
र्पि स्त्रीभिः सद्यो भर्त्ता विमुच्यते ॥४७॥ भेत्तुं शूलमसिश्छेत्तुं कर्तितुं क्रकचं दृढं ॥ नरान्पीडयितुं यंत्रं वेधसा विहि
ताः स्त्रियः ॥४८॥ विधुर्वधूभिर्मन्येहं नभस्थो विप्रतारितः ॥ अथवा क्षीयते कस्मात्कलंकोपहतप्रभः ॥४९॥ यद्रा
गं संध्यया धत्ते यच्चमत्यं विलंबितं ॥ तन्मन्ये वनितामायैर्विप्रलब्धः खरद्युतिः ॥५०॥ प्रांतभून्यो भृगुरौति वेल
व्याजेन क्षेपते ॥ धीरोपि मथितो बद्धः स्त्रीनिमित्तं सरित्पतिः ॥५१॥ सुरेंद्रप्रतिमा धीरा अप्यचिंत्यपराक्रमाः ॥ द
शग्रीवादयो याताः कृते स्त्रीणां रसातलं ॥५२॥ दुःखखानिरगाधैयं कलेर्मूलं भयस्य च ॥ पापबीजं शुचां कंदः

श्वभ्रावनिर्नितंबिनी॥४९॥यदि मूर्त्ताः प्रजायेरन् स्त्रीणां दोषाः कथंचन॥पूरयेयुस्तदा नूनं निःशेषं भुवनोदरं॥
तुकेन समाहर्तुं विश्ववर्त्तीं स संचयं। वेधसेयं कृता मन्ये नारी व्यसनवागुरा॥५०॥एकं दृष्ट्वा परं भावैर्वेद्वान्निरं
तत्पर्योगितैः संद्वयोन्यं रतैः श्वान्यं रमयत्यंगनाजनः॥५१॥धीरैर्धैर्यं समालंब्य विवेकामललोचनैः॥त्यक्ताः स्वप्ने
पि निःकंपैर्नार्यः श्रीसूरिपुंगवैः॥५२॥यद्वक्तुं न बृहस्पतिः प्रातमखः श्रोतुं न साक्षात्क्षमस्तत्स्त्रीणामगुणव्रजं
गदितुं मन्ये न कोपि प्रभुः॥आलोक्य स्वमनीषया कतिपयैर्वर्णैर्यदुक्तं मया तच्छ्रुत्वा गुणिनस्त्यजंतु वनितासं
भोगपापगृहं॥५३॥परिभवफलवल्लीं दुःखदावानलालीं विषयजलधिवेलां श्वभ्रसौधप्रतोलीं॥मदन
दंष्ट्रीं मोहतंत्रासवित्रीं परिहर परिणामैः स्थैर्यमालंब्य नारीं॥५४॥अथवा॥यमिभिर्जन्मनिर्विण्णैर्दूषिताय

पिस्त्रियः॥ तथाप्येकांततस्तासां विद्यते नाघसंचयः॥५७॥ ननु संति जीवलोके काश्चिच्छमशीलसंयमोपेताः॥

वंशतिलकभूताः श्रुतसत्यसमन्विता नार्यः॥५८॥ सतीत्वेन महत्वेन वृत्तेन विनयेन च॥ विवेकेन स्त्रियः काश्चि

द्भूषयंति धरातलं॥५९॥ निर्विसैर्भवसंक्रमाच्छ्रुतधरैरेकांततो निस्पृहैर्नार्यो यद्यपि निंदिताः शमधनैर्ब्र

लंबिभिः॥ निंद्यंते न तथापि निर्मलयमस्वाध्यायवृत्तांकिता निर्वेदप्रशमादिपुण्यचरितैर्याः शुद्धिभू

५० ॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे स्त्रीस्वरूपप्रतिपादनप्रकरणं॥ छ॥ स्मरज्व

लनसंभ्रांतो यः प्रतीकारमिच्छति मैथुनेन स दुर्बुद्धिराज्येनाग्निं निषेधति॥१॥ वरमाज्यच्छटासिक्तः परिर

प्रानः॥ न पुनर्दुर्गतेर्द्वारं योषितां जघनस्थलं॥२॥ स्मरपीतज्वरातंकपीडिताः प्रीणबुद्धयः॥ विशंतिव

विरसाय
पंकेतत्प्रतीकारवांछया॥३॥वासनाजनितंमन्ये सौख्यंस्त्रीसंगसंभवं सेव्यमानंयदंतेस्याद्वैरस्यायैवकेवलं॥४॥
पूयतियथोन्मत्तः शश्वद्दृष्टोपिकांचनं मैथुनेपितथासौख्यंप्राणीरागांधमानसः॥५॥अपथ्यानियथारोगीप
निर्लज्य विध्याप्यं वर्द्धित
थ्यबुध्यानिषेवते सुखबुध्यातथांगानिस्त्रीणांकामीगतत्रपः॥६॥कश्चिद्भूतेयथादीपंनिर्वाणमपिनिंदितं स्म
विषपक्वफलसदृश प्रथमसमये
रमूढःसुखंतद्वद्दुःखमप्यंत्रमैथुनं॥७॥किंपाकफलसमानंवनितासंभोगसंभवंसौख्यं॥आपातेरमणीयंप्र
यतेविरसमवसाने॥८॥मैथुनाचरणेकर्मनिर्घृणैःक्रियतेधमं पीयतेवदनंस्त्रीणांलालांबुकलुषीकृतं॥९॥कं
कुष्टरोगी कामस
डयनंतनुखेदाद्देन्तिकुष्टीयथासुखं तीव्रस्मररुजातंकपीडितोमैथुनंतथा॥१०॥अशुचीन्यंगनांगानिस्मरा
पविषपीडीता
र्त्ती विषमूर्छिता॥जिह्वाभिर्विलिहंत्युच्चैःशुनीनामिवकुक्कुराः॥११॥ग्लानिर्मूर्छाभ्रमःकंपःश्रमःस्वेदोंगवि

मर्माणि विपाके ऽज्ञास्यसि स्वयं ॥२०॥ मैथुनाचरणे मूढ म्रियंते जंतुकोटयः ॥ योनिरंध्रसमुत्पन्ना लिंगसंघट्टपी
डिताः ॥२१॥ बीभत्सानेकदुर्गंधमलाक्तं स्वकलेवरं ॥ यत्र तत्र वपुः स्त्रीणां कस्यास्तु रतये भुवि ॥२२॥ उक्तं च ॥ उत्ता
नोच्छूनमंडूकदारितोदरसन्निभे ॥ चर्मरंध्रे मनुष्याणां मन्यपूर्वः कोप्यसद्ग्रहः ॥२३॥ सर्वाशुचिमये काये दुर्गंधामे
ध्यसंभृते ॥ रमंते रागिणः स्त्रीणां विरमंति तपस्विनः ॥२४॥ कुथितकुणपगंधं योषितां योनिरंध्रं कृमिकुलशत
पूर्णं निर्झरत्क्षारवारि ॥ त्यजति मुनिनिकायः क्षीणजन्मप्रबंधो भजति मदनवीरप्रेरितो गीर्वराकः ॥२५॥ इ
त्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे मैथुनप्रकरणं ॥ छ ॥ विरज्याशेषसंगेभ्यो यो वृणीते
शिवश्रियं ॥ स कुर्याद्दृहरिवत्स्त्रीणां संसर्गाद्विनिवर्तते ॥१॥ यथा सद्यो विलीयंते गिरयो वज्रताडिताः ॥ तथा मत्तोर्गनापम

याः॥क्षयरोगादयो दोषाः मैथुनोत्थाः शरीरिणाम्॥१२॥अनेकदुःखसंतान निदानं विद्धि मैथुनं॥कथं तदपि

धबुद्धय॥१३॥कुष्टव्रणमिवाजस्रं वातिस्रवति पूतिकं॥यत्स्त्रीणां जघनद्वारं रतये तद्धि रागिणां॥१

काकः कृमिकुलाकीर्णं करंकं कुरुते रतिम्॥यथा तद्वद्वराकोयं कामी स्त्रीगुह्यमंथने॥१५॥व्रकुंभपिल

दुर्गंधे मूत्रपूर्णे तद्वारे॥जघनविले वनितानां रमते बालो न तत्वज्ञः॥१६॥स्वतालुरक्तं किल कुक्कुरः धमैः

पतेयद्वद्दिहास्थिचर्वणात्॥तथा विटैर्विद्धि वपुर्विडंबनैर्निषेव्यते मैथुनसंभवं सुखं॥१७॥अशुचिषु

गेषु संगताः पश्य रागिणः॥जुगुप्सां जनयंत्येते लोलंतः कृमयो यथा॥१८॥यो निरंध्रमिदं स्त्रीणां दुर्गतेर्द्वारमं

ग्रिमं॥तत्त्यजंति ध्रुवं धन्या न दीना दैववंचिता॥१९॥मालतीवं मृदून्यासां विद्धि चांगानि योषितां॥दारयिष्यं

निकटवर्त्ती

यावन्नितंबिनीभोगिभ्रकुटिं न समीक्षते॥११॥ यासां संकल्पलेशोपि तनोति मदनज्वरं। प्रत्यासत्तिं न किं तासां

शोभयति

गाद्विचरणश्रियं॥१२॥ यस्याः संसर्गमात्रेण यतिभावः कलंक्यते। तस्याः किं न कथालापैर्भ्रूभंगैश्चारुविभ्रमैः॥

परिहृतं　　　　　　　　　　　　दृष्टं

॥१३॥ अमुचिरं सुष्टु निर्नीतिलब्धं वा वृद्धसंनिधौ। लुप्यते स्त्रीमुखालोकाद्वृत्तरत्नं शरीरिणां॥१४॥ पुस्तोपलविनिष्प

न्नं दारुचित्रादिकल्पितं। अपि वीक्ष्य वपुः स्त्रीणां मुह्यत्यंगी न संशयः॥१५॥ दृष्टिपातो भवेत्पूर्वं व्यामुह्यति ततो म

नः। प्रणिधत्ते जनः पश्चात्तत्कथां गुणकीर्तने॥१६॥ ततः प्रेमानुबंधः स्यादुभयोरपि निर्भरं। उत्कंठते ततश्चेतः प्र

परमकोटिसीमां

मकाष्ठाप्रतिष्ठितां॥१७॥ दानदाक्षिण्यविश्वासैरुभयोर्वर्द्धते स्मर। ततः शाखोपशाखाभिः प्रीतिवल्ली विसर्प्पति

क्रीडा

॥१८॥ मनो मिलति चान्योन्यं निःशंकं संगलालसं। प्रणश्यति ततो लज्जा प्रेमप्रसरपीडिता॥१९॥ निःशंकीकुरुते न

प्रहारेणाल्पचेतसः॥२॥यस्तपस्वीव्रतीमौनीसंवृतात्माजितेंद्रियः॥कलंकयतिनिःशंकंस्त्रीसखःसोपिसंयमं
पूर्णे
॥३॥मासेमासेव्यतिक्रांतेयःपिबंत्यंबुकेवलं॥विमुह्यतिनरःसोपिसंगमासाद्ययोषितः॥४॥सर्वत्राप्युपचीयंतेसं
वर्द्धते
यमाद्यास्तपस्विनाम्॥गुणाःकिंत्वंगनासंगंप्राप्ययांतिक्षयंक्षणात्॥५॥संचरंतिजगत्यस्मिन्स्वेच्छयायाः
प्रकटती स्वभावत
॥विलीयंतेपुनर्नारीवदनेंदुविलोकनात्॥६॥तावद्धत्तेमुनिःस्थैर्यंश्रुतंशीलंकुलक्रमं॥यावन्मत्तांग
त्रवागुराभिर्नरुध्यते॥७॥नवनीतनिभंपुंसांमनःसद्योविलीयते॥वनितावह्निसंतप्तंसतामपिनसंशयः॥
अंतःसुप्तोपिजागर्तिस्मरःसंगेनयोषिताम्॥रोगव्रजइवापथ्यसेवासंभावितात्मनाम्॥९॥क्रियतेयैर्मन
स्थैर्यंश्रुतप्रशमसंयमैः॥तेपिसंसर्गमासाद्यवनितानांक्षयंगताः॥१०॥स्थिरीकृत्यमनस्तत्त्वंतावत्तिष्ठतिसं

एकांते

रहोजल्पावलंबितं वीक्षणादीधनोद्धतः कामाग्निः प्रविजृंभते॥२०॥ बहिरंतस्ततस्तेन दह्यमानोग्निना भृशं॥ अ
विचार्यजनः शीघ्रं ततः पापे प्रवर्तते॥२१॥ श्रुतंसत्यंतपः शीलं विज्ञानं व्रतमुत्तमम्॥ इंधनी कुरुते मूढः प्रवि
ष्टः वनितानलो॥२२॥ स्फुरंति हृदि संकल्पा ये स्त्रीव्यासक्तचेतसां॥ रागिणां तानिह भ्रातर्न कोपिगदितुं क्षमः॥ ।
२३॥ संसर्गप्रभवा नूनं गुणादोषाश्च देहिनाम्॥ एकांततः सदोषाय स्त्रीभिः सार्द्धंकृतः क्षणात्॥२४॥ पुण्यानुष्ठान
संभूतं महत्वं क्षीयते नृणाम्॥ सद्यः कलंकातेवृत्तं साहचर्येण योषिताम्॥२५॥ अपवादमहापंके निमज्जंति न संशय
यमिनोपि जगद्वंद्यवृत्तेरामास्पदं श्रिताः॥२६॥ अनंतमहिमाकीर्णं प्रोत्तुंगं वृत्तपादपं॥ वामा कुठारधारेयं विछिन
त्त्यांगदेहिनाम्॥२७॥ लोचनेषु मृगाक्षीणां क्षिप्तं किंचित्तदंजनं॥ येनापांगैः क्षणादेव मुग्धत्यासां जगत्त्रयं॥२८॥ कौतुके

अमेणापि दृष्टिर्लग्नांगनामुखे। नक्ष्टुं न शक्यते लोकैः पंकमग्नेव हस्तिनी॥२९॥ एकत्र वसतिः साध्वी वरं व्याघ्रोर
ःसह। पिशाचैर्वा न नारीभिर्निमेषमपि शस्यते॥३०॥ भ्रूलताचलनैर्येषां स्खलत्यमरमंडली। तेपि संसर्गमात्रेण
वनितानां विडंबिताः॥३१॥ त्यजंति वनिताचौररुद्धाश्चारित्रमौक्तिकं। यतयोपि तपोभंगकलंकमलिनाननाः॥३
२ह्मचर्यच्युतः सद्यो महानप्येवमन्यते। सर्वैरपि जनैर्लोके विध्यातइव पावकः॥३३॥ विप्लुष्यति जगद्येषां
पादपांशुभिः श्वं चिताबकुशास्तेपि वनितापांगवीक्षणात्॥३४॥ तपःश्रुतकृताभ्यासा ध्यानधैर्यावलंबिनः। अयं
यमिनः पूर्व्वे योषाभिः कश्मलीकृताः॥३५॥ उद्धृते यत्र मातंगैर्नगोत्तुंगैर्जलप्लवे। तत्र ब्रूढा न संदेहः प्रागेव मृग
काः॥३६॥ इह हि वदनकंजं हावभावालसाढ्यं मृगमदललितांकं विस्फुरद्भ्रूविलासं। क्षणमपि रमणीनां लो

नैवीक्ष्यमाणां जनयति हृदि कंपं धैर्य्यनाशं च पुंसां ॥३७॥ यासां सीमंतिनीनां कुरवकतिलकाशोकमाकंदवृक्षाः प्रा
प्योच्चैर्विक्रियं ते ललितभुजलतालिंगनादीन्विलासान् । तासां पूर्णेंदुगौरं मुखकमलमलं वीक्ष्य लीलालस
त्कं को योगीयस्तदानीं कलयति कुशलो मानसं निर्विकारं ॥३८॥ यावद्वृत्ते प्रतिष्ठां परिहरति मनश्चापलं चैषतं
वत्तावत्सिद्धांतसूत्रं स्फुरति हृदि परं विश्वतत्त्वैकरूपं ॥ क्षीराकूपारवेलावलयविलसितैर्मानिनीनां कटाक्षैर्यो
वन्नोहन्यमानं कलयति हृदयं दीर्घदोलायतानि ॥३९॥ संसर्गाद्दुर्बलानां दीनां संत्रस्तामप्यनिच्छतीं । कुष्टिनं
रोगिणीं जीर्णां दुःखितां क्षीणविग्रहां ॥४०॥ निंदितां निंद्यजातीयां स्वजातीयां तपस्विनीं । बालामपि तिर
श्ची स्त्रीं कामी भोक्तुं प्रवर्त्तते ॥४१॥ अंगनापांगबाणालीं प्रपतंतीं निवारयत् । विधाय हृदयं धीरं दृढं वैराग्यवर्मितं ॥४२॥

ब्रह्मचर्यविशुध्यर्थंसंगःस्त्रीणांनकेवलं।त्याज्यःपुंसामपिप्रायोविटविद्यावलंबिनां॥४३॥मदांधैःकामुकैः
चक्रैर्मार्गविच्युतैःस्तब्धलुब्धाधमैःसार्द्धंसंगोलोकद्वयांतकः॥४४॥सूत्रेदत्तावधानाःप्रशमयमतपो
लब्धावकाशाःशश्वत्संन्यस्तसंगाविमलगुणमणिग्रामभाजःस्वयंये॥श्रूयंतेकामिनीनांस्तनजघनमु
कनात्तेपिभग्नामज्जंतोमोहवार्द्धौजिनपतियतयःप्राक्प्रसिद्धाकथासु॥४५॥इत्याचार्यश्रीशुभचंद्रवि
तेज्ञानार्णवेयोगप्रदीपाधिकारेसंसर्गप्रकरणम्॥१५॥लोकद्वयविशुध्यर्थंभावशुध्यर्थमंजसा॥विद्या
अर्थंवृद्धसेवैवप्रशस्यते॥१॥कषायदहनःशांतिंयातिरागादिभिःसमं।चेतःप्रशांतिमाधत्तेवृद्धसेवावलंबि
नः॥२॥निश्चलीकुरुवैराग्यंचित्तदैत्यंनियंत्रय।आसादयपरांशुद्धिंदुर्बुद्धेवृद्धसाक्षिकां॥३॥स्वतत्वनिषोद्भूतंवि

विकालोकवर्द्धितं येषां बोधमयं चक्षुस्ते वृद्धा विदुषां मताः ॥४॥ तपःश्रुतधृतिध्यानविवेकयमसंयमैः (संतोष) ॥ ये वृद्धास्ते
ऽत्र शस्यंते न पुनः पलितांकुरैः (स्वेतकेशै) ॥५॥ प्रत्यासत्तिं समायातैर्विषयैः स्वांतरंजकैः (मनः) ॥ न धैर्यं स्खलितं येषां तेपि वृद्धा बुधैर्म
ताः ॥६॥ न हि स्वप्नेपि संजाता येषां सद्वृत्तवाच्यता (कलंकता) ॥ यौवनेपि मत्ता वृद्धास्ते धन्याः शीलशालिनः ॥७॥ किं च प्रायः
शरीरशैथिल्यात्स्यात्स्वस्था मतिरंगिनां ॥ यौवने तु क्वचित्कुर्याद्दृष्टतत्वोपि विक्रियां ॥८॥ वार्द्धक्येन वपुर्धत्ते शैथि
ल्यं च यथा यथा ॥ तथा तथा मनुष्याणां विषयाशा निवर्तते ॥९॥ हीमांश्चरणसंभ्रांतो वृद्धोपि तरुणायते ॥ तरुणो
पि सतां धत्ते श्रियं सत्संगवासितः ॥१०॥ माक्षाद्वृद्धाननुसेवेयं माता वहितकारिणी ॥ विनेत्री (शिक्षादायिनी) वा प्रतानां दीपिकेवार्थदर्शि (मार्ग)
नी ॥११॥ कदाचिद्दैववैमुख्यान्मातापि विकृतिं भजेत् ॥ न देशकालयोः क्वापि वृद्धसेवा कृता सती ॥१२॥ अंधएव वरं

कोसौनसतांयस्यभारती॥श्रुतिरंध्रंसमासाद्यप्रस्फुरत्यधिकंहृदि॥१३॥सत्संसर्गसुधास्पंदैःपुंसांहृदिपवि

कमलं नविकाशितं

ज्ञानलक्ष्मीःपदंधत्तेविवेकमुदितासती॥१४॥वृद्धोपदेशधर्मांशुंप्राप्यचित्तकुशेशयं॥नप्राबोधिकथंत

अप्रेक्ष्यमान प्रमाणंकरोति

यमश्रीःस्थितिंदधे॥१५॥अनुपास्यैवयोवृद्धमंडलीमंदविक्रमः॥जगत्तत्वस्थितिंवेत्तिसमिमीतेनभःकरैः॥

प्रसरति आच्छादितं

१६॥प्रीतांशुरश्मिसंपर्काद्विसर्प्पतियथांबुधिः॥तथासद्वृत्तसंसर्गान्नृणांप्रज्ञापयोनिधिः॥१७॥अनेरा

गीकरोति अग्निं

ध्यातिविध्याप्यांशाहविर्भुजं॥आसाद्ययमिनांयोगीवाक्पथातीतसंयमं॥१८॥वृद्धानुजीविनामेवस्यु

सुप्राप्येषु

रित्रादिसंपदः॥भवत्यपिचनिर्लेपंमनःक्रोधादिकश्मलं॥१९॥सुलभेष्वपिभोगेषुनृणांतृष्णानिवर्तते॥स

सविते

मर्गसुधास्पंदैःप्राक्ष्वदीकृतात्मनां॥२०॥कातरत्वंपरित्यज्यधैर्यमेवावलंबते॥सत्संगजपरिज्ञानरंजि

त्मा जनः स्वयं ॥२१॥ पुण्यात्मनां गुणग्रामसीमासंसक्तमानसैः ॥ तीर्यते यमिभिः किं न कुविद्यागरसागरः ॥२२

तत्वे तपसि वैराग्ये परां प्रीतिं समश्नुते (लभते) । हृदि स्फुरति यस्योच्चैर्वृद्धवाग्दीपसंततिः ॥२३॥ मिथ्यात्वादिनगोत्तुंग

शृंगभंगाय कल्पितः ॥ विवेकः साधुसंगोत्थो वज्रादप्यजयो नृणां ॥२४॥ अप्यनादिसमुद्भूतं क्षीयते निविडं त (अज्ञान अंधकार)

मः ॥ वृद्धानुयायिनां (वृद्धसेविनां) च स्याद्विश्वतत्वैकनिश्चयः ॥२५॥ अंतःकरणजं (मनोत्पन्नं) कर्म्म यः स्फोटयितुमिच्छति ॥ स योगिवृंद

माराध्यं करोत्यात्मन्यवस्थितिं ॥२६॥ एकैव महतां सेवा (सेवा) स्याज्जेत्री भुवनत्रये । ययैव यमिनामुच्चैरंतर्ज्योति

र्विजृंभते ॥२७॥ दृष्ट्वा श्रुत्वा यमी योगी पुण्यानुष्ठानमूर्जितं । आक्रामति (आरोहति) निरातंकः (निर्भयः) पदवीं तैरुपासितां (योगिभिः) ॥२८॥ वि

श्वविद्यासु चातुर्य्यं विनयेष्वतिकौशलं । भावसिद्धिः स्वसिद्धांते सत्संगादेव देहिनां ॥२९॥ यथात्र प्रबुद्धिमांध

स्वर्णमित्यंतमग्निना मनःशुद्धिं तथा ध्यानी योगिसंसर्गवह्निना ॥३०॥ भयलज्जाभिमानेन धैर्यमेवावलंब

संसर्ग

ते साहचर्यं समासाद्य संयमी पुण्यकर्मणां ॥३१॥ शरीराहारसंसारकामभोगेष्वपि स्फुटं विरज्यति नरः क्षिप्रं

परमागम स्थापितः

सद्भिः सूत्रे प्रतिष्ठतः ॥३२॥ यथा यथा मुनिर्धत्ते चेतः सत्संगवासितं तथा तथा तपोलक्ष्मीः परां प्रीतिं प्र

रक्षणशीलं

यते ॥३३॥ उक्तं च ॥ न हि भवति निर्विगोपकमनुपासितगुरुकुलस्य विज्ञानं प्रकटितपश्चिमभागं पश्य

त नृत्तं मयूरस्य ॥३४॥ तपः कुर्वंतु वा मा वा चेद्वृद्धान्समुपासते तीर्त्वा व्यसनकांतारं यांति पुण्यां गतिं नराः ॥

प्राप्यते

३५॥ कुर्वन्नपि तपस्तीव्रं विदन्नपि श्रुतार्णवं नासादयति कल्याणं चेद्वृद्धानवमन्यते ॥३६॥ मनोभिमतनिः

संगर्ग

शेषफलसंपादनक्षमं कल्पवृक्षमिवोदारं साहचर्यं महात्मनां ॥३७॥ जायते यत्समासाद्य न हि स्वप्नेपि दुर्मतिः

मुक्तिबीजंतदेकंस्यादुपदेशाक्षरंसतां॥४८॥तन्नलोकेपरंधामनतत्कल्याणमग्रिमं॥यद्योगिपदराजीवसंश्रि

तैर्नाधिगम्यते॥४९॥अंतर्लीनमपिध्वांतमनादिप्रभवंनृणां॥क्षीयतेसाधुसंसर्गप्रदीपप्रसराहतं॥५०॥दहति

संयमं | संसार

दुरितकक्षंकर्मबंधंलुनीतेवितरतियमसिद्धिंभावशुद्धिंतनोति॥नयतिजननतीरंज्ञानराज्यंचदत्तेध्रुवमि

प्रधान

हमनुजानांवृद्धसेवैवसाध्वी॥५१॥इतिवृद्धसेवा॥विरमविरमसंगान्मुंचमुंचप्रपंचंविसृजविसृजमोहंविद्धिवि

द्धिस्वतत्वं॥कलयकलयवृत्तंपश्यपश्यस्वरूपंकुरुकुरुपुरुषार्थंनिर्वृतानंदहेतो॥५२॥अतुलसुखनिधा

संकल्पविकल्पं

नंज्ञानविज्ञानबीजंविलयगतकलंकंशांतविश्वप्रचारं॥गलितसकलशंकंविश्वरूपंविशालंभजविगत

समुद्रस्य

विकारंस्वात्मनात्मानमेवं॥५३॥धन्यास्तेमुनिमंडलस्यगुरुतांप्राप्ताःस्वयंयोगिनःशुद्ध्यत्येवजगत्रयीशमवं

श्रीपादरागांकिता॥ तेषां संयमसिद्धयः सुकृतिनां स्वप्नेपि येषां मनो नालीढं विषयैर्न कामविशिखैर्नो वा

रहितं

चनैः॥४४॥ येषां वाग्भुवनोपकारचतुरा प्रज्ञा विवेकास्पदं ध्यानध्वस्तसमस्तकर्मकवचं वृत्तं कलंकोज्झितं

काम बाण रोगान् शोभ

सम्यग्ज्ञानसुधातरंगनिचयैश्चेतश्च निर्वापितं धन्यास्ते प्रशमयंत्वनंगविशिखव्यापारजातान् रुजः॥४५॥ च्छं

मानैः आयुधविशेषैः मुनीना

चक्रिश्रिरमंप्यनंगपरशुप्रख्यैर्न्न धूलोचनैर्येषामिष्टफलप्रदः कृतधियां नोच्छेदि शीलद्रुमः॥ धन्या

स्तु संततमिलतदुर्वारिकामानलज्वालाजालकरालमानसमिदं विश्वं विवेकांबुभिः॥४६॥ यदि विषयपि

शीघ्रं नष्टः अधिक्यतां

शाची निर्गता देहगेहात्सपदि यदि विशीर्णो मोहनिद्रातिरेकः॥ यदि युवतिकरंके निर्ममत्वं प्रपन्नो झ्यगि

त्वंकुरु मार्गे

ननु विधेहि ब्रह्मवीथी विहारं॥४७॥ अस्मरन्नोगी दुर्वारविषयानलकरालितं॥ जगद्यैः शांतिमानीतं ते जिनाः

क्षेत्रं
वास्तु धनं धान्यं
द्विपदाश्च चतुःपदा
शयनासनं यानं च
कुप्यं भांड ममी दश

तुन्नांतये ॥ ५० ॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे ब्रह्मप्रकरणं ॥ १७ ॥ यानपात्रमि
वांबोधौ गुणवानपि मज्जति ॥ परिग्रहगुरुत्वेन संयमी जन्मसागरे ॥ १ ॥ बाह्यांतर्भूतभेदेन द्विधा ते स्युः परि (परिग्रहाः)
ग्रहाः ॥ चिदचिद्रूपिणो बाह्या अंतरंगाश्च चेतनाः ॥ २ ॥ दश ग्रंथा मता बाह्या अंतरंगाश्चतुर्दश ॥ तान्मुक्त्वा भ
व निःसंगो भावशुध्या भृशं मुने ॥ ३ ॥ निःसंगोपि मुनिर्न स्यात्संमूर्छन् संगवर्जितः ॥ यतो मूर्छैव तत्वज्ञैः सं
(परिग्रहोत्पत्तिः) गसूतिः प्रकीर्तिता ॥ ४ ॥ स्वजनधनधान्यदाराः पशुपुत्रपुराकरा गृहं भृत्याः ॥ मणिकनकरजतशय्या
वस्त्राभरणादि बाह्यार्थाः ॥ ५ ॥ (परिग्रहाः) उक्तं च ॥ मिथ्यात्ववेदरागा दोषा हास्यादयोपि षट् चैव ॥ चत्वारश्च कषा
याश्चतुर्दशाभ्यंतरा ग्रंथाः इति ॥ ६ ॥ संवृतस्य सुवृत्तस्य जिताक्षस्यापि योगिनः ॥ व्यामुह्यति मनः क्षिप्रं

॥ज्ञानार्णव॥
॥५६॥

धनांगना व्यालविध्वस्तां ॥७॥ त्याज्यं रे वाखिलः संगो मुनिभिर्मोक्तुमिच्छुभिः ॥ स चेत्त्यक्तुं न शक्नोति कार्यस्तद्यात्म
दर्शिभिः ॥८॥ नाणवोपि गुणा लोके दोषाः शैलेन्द्रसन्निभाः ॥ भवंत्यत्र न संदेहः संगमासाद्य देहिनाम् ॥९॥ अंतर्बा
भुवोः शुद्ध्यो र्योगाद्योगी विशुध्यति ॥ न ह्येकं पत्रमालंब्य व्योम्नि पत्री विसर्प्पति ॥१०॥ साधीयं यस्या द्विहिः शुद्धिरंतः
ध्यान्त्र देहिनाम् ॥ फल्गुभावं भजत्येव बाह्यात्वाध्यात्मकी विना ॥११॥ संगात्कामस्ततः क्रोधस्तस्माद्धिंसा तयाशु
तेन श्वाभ्री गतिस्तस्यां दुःखं वाचामगोचरं ॥१२॥ संग एव मतः सूत्रे निःशेषानर्थमंदिरं ॥ येनासंतोपि सूयंते रागा
रिपवः क्षणे ॥१३॥ रागादिविजयः सत्यं क्षमाशौचं वितृष्णता ॥ मुनेः प्रच्याव्यते नूनं संगैर्व्यामोहितात्मनः ॥१४॥ संगा
माद्यस्त्वीक्रियंते शरीरिभिः ॥ तत्मार्गैव मुनिः सारं योगिभिः परिकीर्तितम् ॥१५॥ हृषीकराक्षसानीकं कषा

॥५६॥

क्लेशातं समीपत्वं

भुजगव्रजं वित्तामिषमुपादाय धत्ते काममप्युदीर्णतां ॥१९॥ उन्मूलयति निर्वेदविवेकद्रुममंजरीम्। प्रत्यासत्तिंस

कामबाणैः व्यापितः

मायातः सतामपि परिग्रहः ॥२०॥ लुप्यते विषयव्यालैर्भिद्यते मारमार्गणैः। रुध्यते वनिताव्याधैर्नरः संगैरभिद्रुतः॥

बाणैः मेरुं

२१॥ यः संगपंकनिर्मग्नोऽप्यपवर्गाय चेष्टते। स मूढः पुष्पनाराचैर्विभिद्यात्त्रिदशाचलं ॥२२॥ अणुमात्रादपि ग्रंथान्

मोहग्रंथिर्दृढीभवेत्। विसर्पति ततस्तृष्णा यस्यां विश्वं न शांतये ॥२३॥ परीषहरिपुव्रातं तुच्छवृत्तैकभीतिदं वीक्ष्य

धैर्यं विमुंचंति यतयः संगसंगताः ॥२४॥ सर्वसंगपरित्यागः कीर्तितः श्रीजिनागमे। यस्तमेवान्यथा ब्रूते स हीनः स्वान्

धन पिशाच

घातकः ॥२५॥ यमः प्रशमजं राज्यं तपः श्रुतपरिग्रहं। योगिनोऽपि विमुंचंति वित्तवेतालपीडिताः ॥२६॥ पुण्यानुष्ठानज

विघ्नं

ते पुनिःशेषाभीष्टसिद्धिषु। कुर्वंति नियतं पुंसां प्रत्यूहं धनसंग्रहाः ॥२७॥ अत्यक्तसंगसंतानो मोक्तुमात्मानमुद्यत

तेजः मेरु
बध्नन्नपिनजानातिस्वंधनैःकर्मबंधनैः॥२५॥अपिसूर्यस्त्यजेद्धामस्थिरत्वंवासुराचलः।नपुनःसंगसंकीर्णोमु
नपुंसक
निःस्यात्संवृतेंद्रियः॥२६॥बाह्यानपिचयःसंगान्परित्यक्तुमनीश्वरः।सक्लीबःकर्मणांसैन्यंकथमग्रेहनिष्यति॥२७॥
धनं कर्द्दमे
ड्वल्मीकंरागाद्यरिनिकेतनं।क्रीडास्पदमविद्यानांबुधैर्वित्तंप्रकीर्त्तितं॥२८॥अत्यल्पेऽपिधनजंबालेनिमग्नोऽगु
पैजगत्यस्मिन्जनःक्षिप्रंदोषलक्षैःकलंक्यते॥२९॥संन्यस्तसर्वसंगेभ्योगुरुभ्योऽप्यतिशंक्यते।धनिभि
भयात्
रात्रावपिनसुप्यते॥३०॥मृतस्वजनभूपालदुष्टचौरारिविद्रवात्।बंधुमित्रकलत्रेभ्योधनिभिःशंक्यतेभृशम्॥३१॥
ध्नातियज्जीवोधनाशाकश्मलीकृतः।तस्यांशांतिर्यदिक्लेशाद्दुःखिजन्मकोटिभिः॥३२॥सर्वसंगविनिर्मुक्त
संवृताक्षःस्थिराशयः।धत्तेध्यानधुरांधीरःसंयमीवीरवर्णिताम्॥३३॥संगपंकात्समुत्तीर्णोनैराश्यमवलंबते

पराधीनै.

नाक्रम्यते दुःखैः पारतंत्र्यैः क्वचिन्मुनिः ॥३४॥ यावंतः कुरुते जंतुः संबंधान्मनसः प्रियान् । तावंतोऽस्य निषन्यंते हृदये शोक

तिष्ठंते शल्यं

संकुले ॥३५॥ मार्जारभक्षिते दुःखं यादृशं गृहकुक्कुटे । न तादृक् ममताशून्ये कलविंकेऽथ मूषके ॥३६॥ विजने जनसंकी

चटके मुक्तः

र्णे सुस्थिते दुःस्थितेऽपि वा । सर्वत्राप्रतिबद्धः स्यात्संयमी संगवर्जितः ॥३७॥ दुःखमेव धनव्यालविषविध्वस्तचेतसां ।

अर्जने रक्षणे नाशे पुंसां तस्य परिक्षये ॥३८॥ स्वजातीयैरपि प्राणी सद्यो विद्रूयते धनी । यथात्र सामिषः पक्षी पक्षि

विदार्यते मांससहितः

वृंदैः मंडले ॥३९॥ आरंभो जंतुघातश्च कषायश्च परिग्रहात् । जायतेऽत्र ततः पातः प्राणिनां श्वभ्रसागरे ॥४०॥ न स्याद्ध्या

तुं प्रवृत्तस्य चेतः स्वप्नेऽपि निश्चलं । मुनेः परिग्रहग्राहैर्भिद्यमानमनेकधा ॥४१॥ सकलविषयबीजं सर्वसावद्यमूलं नर

आश्रय

कनगरकेतुं वित्तजातं विहाय । अनुसर मुनिवृंदानंदसंतोषराज्यमभिलषसि यदि त्वं जन्मबंधव्यपायं ॥४२॥ एनः को

नाशं पापः पुण्य

भनस्य
धनप्रशक्तमनसां नां मा दिहिंसादिनां कस्तस्यार्जनरक्षणक्षयकृतैर्नादाहि दुःखानलैः ततत्प्रागेव विचार्य वर्जय वरं
मूढ वित्तस्पृहां येनैकास्पदतां न यासि विषये पापस्य तापस्य च ॥४४॥ एवं तावदहं लभेय विभवं रक्षेय मेवं ततस्तद्दृ
ऽऽशार
येयमेवमनिशं भुंजीय चैवं पुनः इत्याशारुद्धमानसं मृगं नात्मानमुत्पश्यति क्रुद्धक्रूरकृतांतदंत
यंत्रांतरालस्थितं ॥४५॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे परिग्रहदोषविचारप्र॰
त्याग
॥छ॥ बाह्यांतर्भूतनिःशेषसंगसंन्याससिद्धये आशां सद्भिर्निराकर्त्तुं नैराश्यमवलंबितैः ॥१॥ यावद्यावच्छरी
धनाशा वा विसर्पति तावत्तावन्मनुष्याणां मोहग्रंथिर्दृढी भवेत् ॥२॥ अनिरुद्धा सती शश्वदाशा विश्वं प्रसर्प्पति
वाछितं
मूलासो पुनश्छेत्तुं न शक्यते ॥३॥ यद्याशाशांतिमायाता तदा सिद्धं समीहितं अन्यथा भवसंभूतो दुःख

द्विदुरुत्तरः॥ यमप्रशमराज्यस्य सद्बोधार्कोदयस्य च विवेकस्यापि लोकानामाशैव प्रतिषेधिका॥५॥ आशामपि
न समर्प्पतीयः क्षणं रक्षितुं क्षमः तस्यापवर्गसिद्ध्यर्थं वृथा मन्ये परिश्रमं॥६॥ आशैव मदिराक्षाणामाशैव विषमंजरी
आशामूलानि दुःखानि प्रभवंतीह देहिनां॥७॥ तावन्मुनिर्विनोधीरो यावन्नाशाराक्षसी हता महाव्यसनसंकीर्णे श्रांति
(मोहं प्राप्ताः)
र्णैः क्लेशसागरे॥८॥ येषामाशा कुतस्तेषां मनःशुद्धिः शरीरिणां॥ अतो नैराश्यमालंब्य शिवीभूता मनीषिणः॥९॥
सर्वाशां यो निराकृत्य नैराश्यमवलंबते तस्य क्वचिदपि स्वांतं संगपंकैर्न लिप्यते॥१०॥ तस्य सत्यं श्रुतं वृत्तं विवेकस्त
(विनाशं) (अमर्यादः)
त्त्वनिश्चयः॥ निर्ममत्वं च यस्याशापिशाची निधनं गता॥११॥ यावदाशानलश्चित्ते जाज्वलीति विशृंखलः॥ तावत्तव
(पुरुषं) (बहु स्नेहा)
महादुःखदाहशांतिः कुतस्तनी॥१२॥ निराशतासुधापूरैर्यस्य चेतः पवित्रितं तमालिंगति सोत्कंठं प्रशमश्रीर्बद्धसौहृदा
॥१३

नमज्जंतिमनोयेषांमोहाशांभसिदुरुत्तरे।तेषामेवजगत्यस्मिन्फलितोज्ञानपादपः॥१७॥शक्रोपिनसुखीस्वर्गेस्या
दाशानलदीपितः।विध्याप्याशानलज्वालांश्रयंतियमिनःश्रियं॥१५॥चरस्थिरार्थजातेषुयस्याशाप्रलयंगताः।
किंनतस्यलोकेस्मिन्मन्येसिद्धिंसमीहितं॥१६॥चापल्यंत्यजतिस्वांतंविक्रियाश्चाक्षदंतिनः।प्रशाम्यति
श्नैरास्याधिष्ठितात्मनां॥१७॥किमत्रबहुनोक्तेनयस्याशानिधनंगता।सएवमहतांसेव्योलोकद्व
त्यागः हें आचर
य॥आशाजन्मोग्रपंकायशिवायाशाविपर्ययः।इतिसम्यक्समालोच्ययद्धितंतत्समाचर॥१८॥नस्याद्विक्षि
गतविकल्पाः आशापिशाचीनष्टाः
प्तानांस्वेष्टसिद्धिःक्वचिन्नृणां।कथंप्रक्षीणविक्षेपाभवंत्याशाग्रहक्षताः॥२०॥विषयविपिनवीथीसंकटेपर्यटं
त्यटितिघटितवृद्धिःक्वापिलब्धावकाशा।अपिनियमिनरेंद्रानाकुलत्वंनियंतीछलयतिखलुकंवानेयमाशा ॥५ण॥

ज्ञाची॥२१॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे आशापिशाचीप्रकरणं॥छा॥ इति पंचमहा
व्रतानि॥ महत्वहेतोर्गुणिभिः श्रितानि महांति मत्वा त्रिदशैर्नुतानि महासुखज्ञाननिबंधनानि महाव्रतानीति सं
तां मतानि॥१॥ उक्तं च॥ आचरितानि महद्भिर्यच्च महांतं प्रसाधयंत्यर्थं स्वयमपि महांति यस्मान्महाव्रतानीत्यत
(वाग्मनो इत्यादि)
स्तानि॥२॥ महाव्रतविशुद्ध्यर्थं भावनाः पंचविंशतिः॥ परमां साध्य निर्वेदपदवीं भव्य भावय॥३॥ ईर्याभाषैषणादान नि
(नामा)
क्षेपोत्सर्गसंज्ञकाः॥ सद्भिः समितयः पंच निर्दिष्टाः संयतात्मभिः॥४॥ वाक्कायचित्तजानेकसावद्यप्रतिषेधकं॥ त्रि
योगरोधनं वा स्याद्यत्तद्गुप्तित्रयं मतं॥५॥ तद्यथा॥ सिद्धक्षेत्राणि चैत्यानि जिनबिंबानि वंदितुं॥ गुर्वाचार्यतपोवृद्धा
न्सेवितुं व्रजतोऽथवा॥६॥ दिवा सूर्यकरैः स्पृष्टं मार्गं लोकातिवाहितं॥ दयार्द्रस्यांगिरक्षार्थं शनैः संश्रयतो मुने॥७

जुडाप्रमाण

वांलोक्यं यत्नेनं युगमात्रां हितेक्षणा ॥ प्रमादरहितस्यांस्य समीतीर्याप्रकीर्तिता॥८॥ धूर्त्तकामुककक्र्व्याद
चौरचार्वाकसेविता॥ शंकासंकेतपापाढ्यात्याज्यांभाषांमनीषिभिः॥९॥ दशदोषविनिर्मुक्तांसूत्रोक्तां
संमतां॥ गदतोऽस्यमुनेर्भाषांस्याद्भाषासमितिःपरा॥१०॥ उद्गमोत्पादसंभूतैर्धूमांगारादिकैस्तथा॥ दोषैर्मं
निर्मुक्तंविघ्नशंकादिवर्ज्जितम्॥११॥ शुद्धंकालेपरैर्द्दत्तमनुदिष्टमयाचितं॥ अदतोन्नंमुनेर्ज्ञेयाएषणा
तिःपरा॥१२॥ शय्यासनानिधानानिशास्त्रोपकरणानिच॥ पूर्व्वंसम्यक्समालोक्यप्रतिलिख्यपुनःपुनः॥
१३॥ गृह्णतोऽस्यप्रयत्नेनक्षिपतोवाधरातले॥ भवत्यविकलासाधोरादानसमितिःस्फुटा॥१४॥ विजंतुके
मूत्रश्लेष्ममलाधिकं॥ क्षिपतोऽतिप्रयत्नेनव्युत्सर्गसमितिर्भवेत्॥१५॥ विहायसर्वसंकल्पान्रागद्वेषावलं

ककर्कशा परुषा कटुका निष्ठुरा परकोपनी छेदंकरा मध्यकृ अतिमानिनी भूतहिंसाकर चेति एता दशभाषा मुक्ता॥१॥

न्नं स्वाधीनं कुरु त्वं चेतः समत्वे सुप्रतिष्ठितम् ॥१६॥ सिद्धांतसूत्रविन्यासे शश्वत्प्रेरयतोऽथवा ॥ भवत्यविकलानाम
मनोगुप्तिर्मनीषिणः ॥१७॥ साधुसंवृत्तवाग्वृत्तेर्मौनारूढस्य वा मुनेः ॥ संज्ञादिपरिहारेण वाग्गुप्तिः स्यान्महामुनेः ॥
१८॥ स्थिरीकृतशरीरस्य पर्यंकं संश्रितस्य वा ॥ परीषहप्रपातेऽपि कायगुप्तिर्मता मुनेः ॥१९॥ (मातरः) जनन्यो यमिनाम
ष्टौ रत्नत्रयविशुद्धिदाः ॥ एताभी रक्षितं दोषैर्मुनिवृंदं न लिप्यते ॥२०॥ इति कतिपयवर्णैश्चर्चितं चित्ररूपं चरण
मनघमुच्चैश्चेतसां शुद्धिधाम ॥ अविदितपरमार्थैर्यन्न साध्यं विपक्षैस्तदिदमनुसरंतु ज्ञानिनः शांतदोषाः ॥
२१॥ सम्यगेतत्समासाद्य त्रयं त्रिभुवनार्चितं ॥ द्रव्यक्षेत्रादिसामग्र्या भव्यः (शीघ्र) सपदि मुच्यते ॥२२॥ एतत्(शास्त्र)समयसर्वस्वं
मुक्तेश्चैतन्निबंधनं ॥ हितमेतद्धि जीवानामेतदेवाग्रिमं पदं ॥२३॥ ये याता यांति यास्यंति यमिनः पदमव्ययं ॥ सम

॥ध्यैवं तेनूनं रत्नत्रयमखंडितं॥२४॥साक्षादिदं मनासाद्य जन्मकोटिशतैरपि॥दृष्यते न हि केनापि मुक्तिश्रीमुख

॥२५॥अथवा॥दृग्बोधचरणान्याहुः स्वमेवाध्यात्मवेदिनः॥यतस्तन्मय एवासौ शरीरीवस्तुतः स्थितः॥२६॥

निर्णीते स्मिन्स्वयं साक्षान्नापरः कोपि मृग्यते॥यतो रत्नत्रयस्यैष प्रसूतेरग्रिमं पदं॥२७॥जानाति यः स्वयं स्व

स्वरूपं गतभ्रमः॥तदेवं तस्य विज्ञानं तद्वृत्तं तच्च दर्शनं॥२८॥स्वज्ञानादेव मुक्तिः स्याज्जन्मबंधस्ततोन्यथा एत

देवं जिनोद्दिष्टं सर्वस्वं बंधमोक्षयोः॥२९॥आत्मैव मम विज्ञानं दंग्वृत्तं चेति निश्चयः॥मत्तः सर्वेप्यमी भावा बा

संयोगलक्षणाः॥३०॥अयमात्मैव सिद्धात्मा स्वशक्त्यापेक्षया स्वयं॥व्यक्तीभवति सध्यानवह्निनात्यंतसाधि

३१॥एतदेव परं तत्वं ज्ञानमेतद्धि शाश्वतं॥अतोन्योयः श्रुतस्कंधः स तदर्थं प्रपंचितः॥३२॥अपास्य कल्पनाजा

चिदानंदमये स्वयं।यः स्वरूपे लयं प्राप्तः स स्याद्ब्रह्मत्रयास्पदं॥३३॥ सुप्तेष्वंसेषु जागर्त्ति पश्यत्यात्मानमात्मनि। वीत
स्वपर हितं
विश्वविकल्पोयः स स्वदर्शी बुधैर्मतः॥३४॥ निःशेषक्लेशनिर्मुक्तममूर्त्तं परमाक्षरं। निःप्रपंचं व्यतीताक्षं पश्य
स्वं स्वात्मनि स्थितं॥३५॥ नित्यानंदमयं शुद्धं विश्वरूपं सनातनं। पश्यात्मनि परं ज्योतिरद्वितीयमनव्ययं॥३६॥ य
सिद्धं
स्यां निशि जगत्सुप्तं तस्यां जागर्त्ति यः स्वयं। निःपन्नं कल्पनातीतं स वेत्त्यात्मानमात्मनि॥३७॥ या निशा सर्वभूते
षु तस्यां जागर्त्ति संयमी। यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥३८॥ यस्य हेयं न चादेयं निःशेषं भुवनत्र
यं। उन्मीलयति विज्ञानं तस्य स्वान्यप्रकाशकं॥३९॥ दृश्यंते भुवि किं न तेल्पमतयः संख्याव्यतीताश्चिरं ये ली
लां परमेष्ठिनो निजनिजैस्तन्वंति वाक्यैः परं। तं साक्षादनुभूय नित्यपरमानंदांबुराशिं पुनर्ये जन्मभ्रममुत्सृजंति॥

सहसा धन्यास्तु ते दुर्लभाः ॥४०॥ किंच ॥ सत्संयममहारामं यमप्रशमजीवितं देहिनां निर्दहत्येव क्रोधाद्यग्निः समु
त्थितः ॥४१॥ दृग्बोधादिगुणानर्घ्यरत्नप्रचयसंचितं भांडागारं दहत्येव क्रोधवह्निः समुत्थितः ॥४२॥ संयमोत्त
[मुनिः]
यूपं सर्वाभिमतसिद्धिदं कषायविषसेकोयं निःसारी कुरुते क्षणात् ॥४३॥ तपःश्रुतयमाधारं वृत्तविज्ञानवर्द्धि
तं भस्मीभवति रोषेण पुंसां धर्मात्मकं वपुः ॥४४॥ अयं समुत्थितः क्रोधो धर्मसारं सुरक्षितं निर्दहत्येव नि
शुष्कारण्यमिवानल ॥४५॥ पूर्वमात्मानमेवासौ क्रोधांधो दहति ध्रुवं पश्चादन्यान्न वा लोको विवेकविकलाश
[नरकं]
यः ॥४६॥ कुर्वंति यतयोप्यत्र क्रुद्धास्तत्कर्म निंदितं हत्वा लोकद्वयं येन विशंति धरणीतलं ॥४७॥ क्रोधाद्वीपा
[निंदित]
यिकृतं कर्मातिगर्हितं दग्धा द्वारवती नाम पूः स्वर्गनगरीनिभा ॥४८॥ लोकद्वयविनाशाय पापाय नरकाय ॥

स्वपरस्यापकारायक्रोधशत्रुःशरीरिणां॥ धर्म॥ अनादिकालसंभूतःकषायविषमग्रह॥ सएवानंतदुर्वारदुःखसं
पादनक्षमः॥४०॥ तस्मात्प्रशममालंब्यक्रोधवैरीनिवार्यतां॥ जिनागममहांभोधेरवगाहश्चसेव्यतां॥४१॥ क्रोधव
बनबाटी
न्हेःक्षमैकेयंप्रशांतौजलवाहिनी॥ उद्दामसंयमारामवृत्तिर्व्वात्यंतनिर्भरा॥४२॥ जयंतियमिनःक्रोधंलोकद्वयवि
राधकं॥ तन्निमित्तेपिसंप्राप्तेभजंतोभावनामिमां॥४३॥ तद्यथा॥ यद्यंकुरुतेकोपिमांस्वस्थंकर्मपीडितं॥ चिकि
समूहं
त्सित्वास्फुटंदोषंसएवाकृत्रिमःसुहृत्॥४४॥ हत्वास्वपुण्यसंतानंमद्दोषंयोनिकृंतति॥ तस्मैयदिहरुष्यामिम
दन्यःकोधमस्तदा॥४५॥ आकृष्टोहंहतोनैवहतोवानद्विधाकृतः॥ मारितोनहतोधर्मोमदीयोनेनबंधुना॥४६॥ सं
अहो
भवंतिमहाविघ्नाइहनिश्रेयसार्थिनां॥ तेचेत्किलसमायाताःसमत्वंसंश्रयाम्यतः॥४७॥ चेन्मामुद्दिश्यभ्रश्यंति

शीलशैलात्तपस्विनः॥ अमी यतोत्र मज्जन्म परत्रैव च केवलं ॥५०॥ प्राग्मया यत्कृतं कर्म तन्मयैवोपभुज्यते॥
निमित्तमात्रोऽन्यः सुखदुःखोद्यतो जनः॥५१॥ मदीयमपि चेच्चेतः क्रोधाद्यैर्विप्रलुप्यते॥ अज्ञातज्ञा
विशेषस्तदा भवेत॥५२॥ अन्यायमार्गप्रपन्नेऽस्मिन् कर्मपाके पुरःस्थिते॥ विवेकी कस्तदात्मानं क्रोधादीनां वशं नयेत
॥५३॥ सहस्व प्राक्तनासातफलं स्वस्थेन चेतसा॥ निःप्रतीकारमालोक्य भविष्यद्दुःखशंकितः॥५४॥ उद्दीपयंतो
ग्निं बकु विक्रमविद्विषः मन्ये विलोपयिष्यंति किं चिन्मत्तः शमश्रियं॥५५॥ अप्यसह्ये समुत्पन्ने महाक्ले
तुष्यत्यपि च विज्ञानी प्राक्कर्मविलयोद्यतः॥५६॥ यदि वाक्कंटकैर्विद्धो नावलंबे क्षमामहं॥ममाप्याक्रोश
कौ विशेषस्तदा भवेत॥५७॥ विचित्रैर्वधबंधादिप्रयोगैर्न चिकित्स्यते॥ यद्यसौ मां तदा कस्यात्संचितासातनिः
॥६६

यः शमः प्राक् समभ्यस्तो विवेकज्ञानपूर्वकः। तस्यैतेऽद्य परीक्षार्थं प्रत्यनीकाः समुत्थिताः॥६८॥ अयं यदि प्रशममर्या
दां भित्त्वा रुष्यामि शत्रवे। उपयोगः कदाऽस्य स्यात्तदा मे ज्ञानचक्षुषः॥६९॥ अयत्नेनापि सैवेयं संजाता कर्मनिर्ज
तीव्र पीडा
रा। चित्रोपायैर्ममानेन यत्कृता भर्त्स्य यातना॥७०॥ ॥ग्रजंथा॥ ममापि चेद्द्वोहमुपैति मानसं परेषु सद्यः प्रतिकूल
वर्तिषु। अपारसंसारपरायणात्मनां किमस्ति तेषां मम वा विशेषणं॥७१॥ अपारयन् बोधयितुं पृथग्जनान् स
त्प्रवृत्तेष्वपि नासदाचरेत्। अशक्नुवन् पीतविषं चिकित्सितुं पिबेद्विषं कः स्वयमप्यबालिशः॥७२॥ न चेदयं मां दु
रितैर्विकंपयेद् हयं तेयं प्रसमायनाधिकः। अतोऽतिलाभोऽयमिति प्रतर्क्कयन् विचाररूढा हि भवंति निश्चला॥७३॥
परिपरितोषनिमित्तं त्यजंति केचिद्धनं शरीरं वा। दुर्वचनबंधनाद्यैर्वयं रुषंतो न लज्जामः॥७४॥ हंतुर्हानिर्मे मात्म

आत्मार्थविनाशः … विनाशे … शत्रुक्षमा

र्थः सिद्धिः स्यान्नात्र संशयः ॥ हतो यदि न रुष्यामि रोषश्चेद्व्यत्ययस्तदा ॥७४॥ प्राणात्ययेपि संपन्ने प्रत्यनीकप्रति

क्षमा … प्राप्ता

तां सद्भिः स्वसिद्ध्यर्थं क्षमैका स्वस्थचेतसां ॥७५॥ इयं निकषभूरद्य संपन्ना पुण्ययोगतः ॥ शमत्वं किं प्रपन्नोस्मि न

द्य परीक्ष्यते ॥७६॥ स एव प्रशमः श्लाघ्यः स च श्रेयो निबंधनं अदयैर्हंतुकामैर्यो न पुंसां कश्मलीकृतः ॥७७॥ चिरा

स्तेन किं तेन शमेनास्त्रेण वा फलं व्यर्थीभवति यत्कार्ये समुत्पन्ने शरीरिणां ॥७८॥ प्रत्यनीके समुत्पन्ने यद्धैर्यं त

स्यते स्यात्सर्वोपि जनः स्वस्थः सत्यशौचक्षमास्पदं ॥७९॥ वासीचंदनतुल्यां तैर्वृत्तिमालंब्य केवलं आरब्धं

सिद्धिमानीतं प्राचीनैर्मुनिसत्तमैः ॥८०॥ कृतैर्वान्यैः स्वयं जातैरुपसर्गैः कलंकितं येषां चेतः कदाचिन्नैर्न प्राप्ता

पूर्वकृता

स्ते संपदः ॥८१॥ प्राक्कृताय न रुष्यंति कर्मणो निर्विवेकिनः तस्मिन्नपि च कुप्यंति यत्तदेव चिकित्सिति ॥८२॥ स्वयः स्त्र

श्रान्मांसमाकृष्यक्षिपत्यात्मानमंत्तधीः वधबंधनिमित्तेपिकस्तस्मै विप्रियंचरेत् ॥ अथस्यैवकर्मणोनाशाज्ज्ञान

दाहःप्रशाम्यति तच्चेद्रुक्तिं समायातं सिद्धंतद्दृष्टिवांछितं ॥ अनंतक्लेशसमार्चिःप्रदीप्तेयं भवाटवी तत्रोत्प

न्नैर्नकिंसह्यंस्तदुत्थोव्यसनोत्करः ॥ सम्यग्ज्ञानविवेकशून्यमनसः सिद्धांतसूत्रद्विषो निस्त्रिंशाः परलोक

नष्टमतयोमोहोनलोद्दीपिताः ॥ दौर्जन्यादिकलंकितायदिनरानस्युर्जगत्यांतदातस्मात्तीव्रतपोभिरुन्न

तधियः कांक्षंतिमोक्षश्रियं ॥ वयमिहपरमात्मध्यानदत्तावधानाः परिकलितपदार्थास्त्यक्तसंसारमार्गाः ॥

यदिनिकषपरीक्षामुक्षमानोतदानीभजतिविफलभावंसर्वथैषप्रयासः ॥ अहोकैश्चित्कर्मानुदयगत

मानीयरजसादृप्तोषंनिर्द्धूतंप्रबलतपसाजन्मचिकितैः ॥ त्वयंयद्यायातंतदिदमुदमालंब्यमनसानकिंसह्यंधीरैः

रतुलसुखसिद्धेर्व्यवसितेः॥७७॥ क्रोधकषायजयः॥ कुलजातीश्वरत्वादिमदविध्वस्तबुद्धिभिः॥ सद्यः संचीयते
नीचैर्गतिनिबंधनं॥१॥ मानग्रंथिर्मनस्युच्चैर्यावदास्ते दृढस्तदा॥ तावद्विवेकमाणिक्यं प्राप्तमप्यपसर्पति॥२॥ प्रो
न्नमानशैलाग्रवर्तिभिर्लुप्तबुद्धिभिः॥ क्रियते मार्गमुल्लंघ्य पूज्यपूज्याव्यतिक्रमः॥९॥ लुप्यते मानतः पुंसां विवे
कामललोचनं॥ प्रच्यवंते ततः शीघ्रं शीलशैलाग्रसंक्रमात्॥१०॥ ज्ञानरत्नमपाकृत्य गृह्णात्यज्ञानपन्नगं॥ गुरूनपि
जनो मानी विमानयति गर्वितः॥११॥ करोत्युद्धतधीर्मानाद्विनयाचारलंघनं॥ विराध्याराध्यसंतानं स्वेच्छा
चारेण वर्तते॥१२॥ मानमालंब्य मूढात्मा विधत्ते कर्म निंदितं॥ कलंकयति चाशेषं चरणं चंद्रनिर्मलं॥१३॥ गुणा
किं तेन मानेनार्थः प्रसिध्यति॥ तन्मन्ये मानिनां मानं यल्लोकद्वयशुद्धिदं॥१६॥ अपमानकरं कर्म येन दूरान्निषि

मत्वैश्चैतस्मां मानः परः स्वपरघातकः ॥ ६६ ॥ कमानो नाम संसारे जंतुव्रजविडंबिको यत्र प्राणी नृपो भूत्वा विष्टाम

ध्ये कृमिर्भवेत् ॥ ६७ ॥ मानः जन्मभूमिरविद्यानामकीर्तेर्वासमंदिरं ॥ पापपंकमहागर्त्तो निकृतिः कीर्तिता बुधैः

शायतां

॥ ६८ ॥ अर्गलेवापसर्गस्य पदवी श्वभ्रवेश्मनः ॥ शीलशालवने वह्निर्मायेयमवगम्यताम् ॥ ६९ ॥ कूटद्रव्यमिवासा

रं स्वप्नराज्यमिवाफलं ॥ अनुष्ठानं मनुष्याणां मन्ये मायावलंबिनां ॥ ७० ॥ लोकद्वयाहितं केचित्तपोभिः कर्तुमुद्य

मायया — खेदे — अविनश्वरे — सरल

ताः ॥ निकृत्या वर्तमानास्ते हंत हीना न लज्जिताः ॥ ७१ ॥ मुक्तेरविप्लुतैः प्रोक्ता गतिरृज्वी जिनेश्वरैः ॥ तत्र मायावि

नां स्यात्तु न स्वप्नेप्यस्ति योगिता ॥ अव्रती निःशल्य एव स्यात्सशल्यो व्रतघातकः ॥ मायाशल्यं मतं साक्षात्सूरिभि

कुटिलमनः — आवृत्यमानं

र्भूरिभीतिदं ॥ इहाकीर्तिं समादत्ते मृतो यात्येव दुर्गतिम् ॥ मायाप्रपंचदोषेण जनोयं जिह्मिताशयः ॥ छाघमा

पिप्रायः कुकर्म स्फुटति स्वयं॥ अलं मायाप्रपंचेन लोकद्वयविरोधिना॥ ८॥ कमायाचरणहीनं त्वं सन्मार्गपरिग्र
॥ नापवर्गपथि भ्रातः संचरंतीह वंचका॥ ९॥ बकवृत्तिं समालंब्य वंचकैर्वंचितं जगत्॥ कौटिल्यकुशलैः पापैः प्र
सन्नं कश्मलाशयैः॥ १०॥ माया॥ नयंति विफलं जन्म प्रयासैर्मृत्युगोचरैः॥ वराकाः प्राणिनो जस्रं लोभादप्राप्तवांछि
॥ १॥ शाके नापीच्छया जातु न भर्तुर्मंदरं क्षमा॥ लोभात् तथापि वांछंति नराश्चक्रेश्वरश्रियम्॥ २॥ स्वामिगुरुबंधुवृद्धान
नान् बालांश्च जीर्णदीनादीन्॥ व्यापाद्य विगतशंको लोभार्त्तो वित्तमादत्ते॥ ३॥ ये केचित् सिद्धांते दोषाः श्वभ्रस्य सा
प्रोक्ताः॥ प्रभवंति निर्विचारं ते लोभादेव जंतूनाम्॥ १२॥ लोभः॥ शमांबुभिः क्रोधशिखी निवार्यतां नियम्यतां
दारमार्दवैः॥ इयं च मायार्जवतः प्रतिक्षणं निरीहतां चाश्रय लोभशांतये॥ १॥ अयं त्र पत्र प्रसूयंते तव क्रोधादयो द्विषः

३ निर्मलं जगत्

श्लोक पत्रमात्रेण

बंधु

पीडां कृत्वा

ज्ञानकः

[१ क्रोधमुत्पत्ति विनाशाय] [पूर्वं] [चौरा] [कृत्य]
तत्तत्प्रागेव मोक्तव्यं वस्तु तत्स्मृतिशांतये ॥१४॥ येनयेन निवार्यंते क्रोधाद्याः परिपंथिनः । स्वीकार्यमप्रमत्तेन तत्तत्कार्यं

[ज्ञानिन] [क्रोधादि निमित्ते] [पीडीतं]
मनीषिणा ॥१५॥ प्रगुणाधिकतया मन्ये स योगी गुणिनां गुरुः । तन्निमित्तेपि नाक्षिप्तं क्रोधाद्यैर्यस्य मानसं ॥१६॥ यदि क्रोधा

[क्रोधादय] [निःफलं] [आत्मज्ञान]
दयः क्षीणास्तदा किं खिद्यते वृथा । तपोभिरथ तिष्ठंति तपस्तत्राप्यपार्थकं ॥१७॥ स्वसंवित्तिं समायाति यमिनां तत्त्वमुत्त-

[पुरुष] [समर्थ]
मं । आसमंतात्क्षमं नीते कषायविषमज्वरे ॥१८॥ अथवा ॥ अजिताक्षः कषायाग्निं विजेतुं न प्रभुर्भवेत् । अतः क्रोधा-

[विषयभारया पीडीतस्य] [इंद्रियहस्ती]
दिकं जेतुमक्षरोधः प्रशस्यते ॥१९॥ विज्ञायाज्ञाभिभूतस्य विक्रियंते क्षदंतिनः । पुनस्त एव दृश्यंते क्रोधादिगहनं क्षि-

[इंद्रियसमूह] [समूह]
ताः ॥२०॥ इदमक्षकुलं धत्ते मदोद्रेकं यथा यथा । कषायदहनः पुंसां विसर्पति तथा तथा ॥२१॥ कषायवैरिव्रजनिर्ज-

यं यमी करोतु पूर्वं यदि संवृतेंद्रियः । किलानयोर्निग्रहलक्षणो विधिर्न हि क्रमोऽत्र बुधैर्विधीयते ॥२२॥ तद्यथा ॥ य

॥ज्ञानार्णव॥
॥६७॥

विषयोद्भूतं दुःखमेवं नंतं सुखं॥ अनंतजन्मसंतानक्लेशसंपादकं यतः॥२३॥ दुर्दमेंद्रियमातंगान् शीलशालेनि

विक्रियाकुर्वाणान् स्वइच्छया क

यंत्रयं धीरविज्ञानपाशेन विकुर्वाणान् यदृच्छया॥२४॥ हृषी^भीमभोगीन्द्रकुद्धदर्पोपशांतये स्मरंति वीरनिर्दिष्टं यो

णमोकार इंद्रियमर्कटा

गिनः परमाक्षरं॥२५॥ निरुध्य बोधपाशेन क्षिप्ता वैराग्यपंजरे॥ हृषीकहरयो येन स मुनीनां महेश्वरः॥२६॥ हृदि

शीलवृक्ष

स्थांश्चैव बोधिरत्नं सुनिर्मलं॥ शीलशालो न यस्याक्षदंतिभिः प्रविदारितः॥२७॥ दुःखमेवाक्षजं सौख्यमविद्याव्याल

लितं मूर्खास्तत्रैव रज्यंते न विद्मः केन हेतुना॥२८॥ यथा यथा हृषीकाणि स्ववशं यांति देहिनां॥ तथा तथा स्फुरत्युच्चै

र्हृदि विज्ञानभास्करः॥२९॥ विषयेषु यथा चित्तं जंतोर्मग्नं मनाकुलं॥ तथा यद्यात्मनस्तत्त्वे सद्यः को न शिवी भवेत्॥३०॥

पिजनकं मोहदाववह्नेर्महेंधनं॥ असातसंततेर्बीजमक्षसौख्यं जगुर्जिनाः॥३१॥ नरकस्यैव सोपानं पाथेयं

नरकमार्ग — परद्रव्यापेक्षं

ध्वनिं अपवर्गपुरद्वारकपाटयुगलं दृढं ॥२३॥ विघ्नबीजं विपन्मूलमन्यापेक्षं भयास्पदं । करणग्राह्यमेतद्धि यदक्षार्थो

त्थं सुखं ॥२४॥ जगद्वंचनचातुर्यं विषयाणां न केवलं । नरान्नरकपातालेनेतुमप्यतिकौशलं ॥२५॥ निसर्गचपलैश्चित्रै

विषयेषु — तृष्णा — निरंतर

र्विषयैर्वंचितं जगत् । प्रत्याशा निर्दयैस्तेषु कीदृशी पुण्यकर्मणां ॥२६॥ वर्द्धते गृद्धिरश्रांतं संतोषश्चापसर्पति । विवेको

विलयं याति विषयैर्वंचितात्मनां ॥२७॥ विषयस्य कालकूटस्य विषयाख्यस्य चांतरं । वदंति ज्ञाततत्वार्था मेरुसर्षप

अप्राप्तवैराग्यं

योरिव ॥२८॥ अनासादितनिर्वेदं विषयैर्व्याकुलीकृतं । पतत्येव जगज्जन्मदुर्गे दुःखाग्निदीपिते ॥२९॥ इंद्रियाणां न गुप्ति

आत्मा

र्नाभ्यस्तश्चित्तनिर्जयः । न निर्वेदः कृतो मित्रं नात्मा दुःखेन भावितः ॥३०॥ एवमेवापवर्गाय प्रवृत्तैर्ध्यानसाधने । स्व

आत्मनो सर्वं

मेव वंचितं मूढैर्लोकद्वयपथच्युतैः ॥३१॥ अध्यात्मजं यदत्यक्षं स्वसंवेद्यमनश्वरं । आत्माधीनं निराबाधमनंतं योगि

त्वा मैवं चिंतुं मन्ये प्रवृत्ता विषयाइमे॥ स्थिरीकुरु तथा चित्तं यथैते नैक लक्ष्यते॥ ४५॥



नासुखं॥४२॥ अपास्य करणग्रामं यदात्मन्यात्मना स्वयं। सेव्यते योगिभिस्तद्धि सुखमाध्यात्मिकं मतं॥४३॥आ

प्रथमारंभरमणीक विषउदयवत् अती इंद्रियचोरसैन्य

तमात्ररम्याणि विषयोत्थानि देहिनां। विषपाकानि पर्यंते विद्धि सौख्यानि सर्वथा॥४४॥ हृषीकतस्कराणी

समुद्र अग्नि

चित्तदुर्गांतराश्रितं। पुंसां विवेकमाणिक्यं हरत्येवं निवारितं॥४५॥ उदधिरुदकपूरैरिंधनैश्चित्रभानुर्यदिक

थमपि दैवात्तृप्तिमासादयेतां। न पुनरिह शरीरी कामभोगैर्विसंख्यैश्चिरतरमपि भुक्तैस्तृप्तिमायाति कश्चित्

व्याप्त

॥४६॥ यद्यपि दुर्गतिबीजं तृष्णासंतापपापसंकलितं। तदपि न सुखं संप्राप्यं विषयसुखं वांछितं नृणां॥४७॥ किंच॥

इच्छा विगत व्याप्नोति अनिवार्यप्रकृषा

अपि संकल्पिताः कामाः संभवंति यथा यथा। तथा तथा मनुष्याणां तृष्णा विश्वं विसर्पति॥४८॥ अनिषि

इंद्रियसमूह मस्तके पर्वतं

संदोहं यः साक्षान्मोक्तुमिच्छति। विदारयति दुर्बुद्धिः शिरसा स महीधरं॥४९॥ इहामिह विषयोत्थं यत्सुखं तद्धि दुः

२ तस्य तस्य इंद्रियाणां विषयस्य कारणानां स्रगाचंदनवनीतादानां पारतंत्र्यं पराधीनत्वं तथेदं इंद्रियसौख्य = तृष्णा संततीवृद्धियुक्तं = स्वाभाविक संगमधा

खंव्यसनविपिनबीजंतीव्रसंतापविद्धांकटुतरपरिपाकंनिंदितंज्ञानवृद्धैः परिहरकिमिहान्यैर्धूर्त्तवाचांप्रपं

चैः ...तत्त्वात्कारकपारतंत्र्यमचिरान्नाप्तुः मत्तभ्रान्वयस्तैरभिनिरूपाधिसंगमभृतोबाधानिधानैः परैः

सौख्येभ्यः खेदे सर्पदंष्ट्राभिः

प्रार्मेभ्यः स्पृहयंति हंतविषयानाश्रित्यंयद्देहिनस्तत्क्रुधात्फणिनायकाग्रदशनैः कंडूविनोदः स्फुटम्

नियंत्रितः प्रीणितोवापीडितोवा वैराग्यपरायणो

पश्चानिः शेषाणिमतेंद्रियार्थरचनासौंदर्यसंदानितः प्रीतिप्रस्रुतलोभलंघितमनाः कोनामनिर्विघ्नताम्

अतिशयेन अग्रे

अस्माकंतुनितांतघोरनरकज्वालाकलापाः पुरः सोढव्याः कथमित्यमीतुमहतीचिंतामनः कृंतति

गजबंधनोपायेन पतंगाः

पश्मीनांमृत्युंप्रयातारसनवसमितादंतिनः स्पर्शरुद्धाबद्धास्तेवारिबंधेज्वलनमुपगताः पत्रिणाश्चा

क्षिदोषात् भृंगागंधोद्धताशाःप्रलयमुपगतागीतलोभाः कुरंगाः कालव्यालेनदष्टास्तदपितनुभृतामि

कस्यात्मन डयुक्तै

स्वाजमिरा इच्छाकरें

पंचेंद्रयतिः

पालीजनोन्यः स्यात् ॥५३॥ संवृणोत्यक्षसैन्यं यः कूर्मोंगानीव संयमी ॥ स लोके दोषपंकाढ्ये चरन्नपि न लिप्य
ते ॥५४॥ अयत्नेनापि जायंते तस्यैता दिव्यसिद्धयः ॥ विषयैर्न मनो यस्य मनागपि कलंकितं ॥५५॥ इत्याचार्य
श्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे अक्षविषयनिरोधकरणं ॥ अयमात्मा स्वयं साक्षाद्गु
णरत्नमहार्णवः ॥ सर्वज्ञः सर्वदृक् सार्वः परमेष्ठी निरंजनः ॥१॥ तत्स्वरूपमजानानो जनोयं विधिवंचितः ॥ विषये
षु सुखं वेत्ति यत्स्यात्पाके विषान्नवत् ॥२॥ यत्सुखं वीतरागस्य मुनेः प्रशमपूर्वकं ॥ नंतस्यानंतभागोपि प्रा
प्यते त्रिदशेश्वरैः ॥३॥ अनंतबोधवीर्यादिनिर्मला गुणिनो गुणाः ॥ स्वस्मिन्नेव स्वयं मृग्या अपास्य कारणांतरं ॥४॥

होऽनंतवीर्ययमात्मा विश्वप्रकाशकः ॥ त्रैलोक्यं चालयत्येव (ज्ञायते) ध्यानशक्तिप्रभावतः ॥ ५ ॥ अस्य (जीवस्य) वीर्यमहं मन्ये यो-
गिनामप्यगोचरं ॥ यत्समाधिप्रयोगेण (वीर्यं) स्फुरत्यव्याहतं (निराबाधं) क्षणे ॥ ६ ॥ अयमात्मा स्वयं साक्षात्परमात्मेति निश्चयः ॥
विशुद्धध्याननिर्धूतकर्मेंधनसमुत्करः (समूह) ॥ ७ ॥ ध्यानादेव गुणग्राममस्याशेषं (गुणसमूह) स्फुटीभवेत् ॥ क्षीयते च तथानादि-
संभवा कर्मसंततिः ॥ ८ ॥ शिवोयं वैनतेयश्च स्मरश्चात्मैव कीर्तितः ॥ अणिमादिगुणानर्घ्यरत्नवार्धिर्बुधैर्मतः ॥
९ ॥ उक्तं च ॥ आत्यंतिकस्वभावोत्थानंतज्ञानसुखः पुमान् ॥ परमात्मा विपः कंतुरहो माहात्म्यमात्मनः ॥ १० ॥ इति
अमुमेवार्थं संप्रति गद्यैर्विशदयामः ॥ तद्यथा ॥ यथांतर्बहिर्भूतनिजनिजानंदसंदोहसंपाद्यमानद्रव्यादि-
चतुष्कसकलसामग्रीस्वभावप्रभावात्परिस्फुरितरत्नत्रयातिशयसमुल्लसितस्वशक्तिनिराकृतसकलत-

आत्मनः १ प्रकटीभूत १ समूह १ ग्रासित निबिड

गवरणप्रादुर्भूतशुक्लध्यानानलबहलज्वालाकलापकवलितगहनांतरानादिसकलजीवप्रदेशघनघ
संसारकारणाज्ञानावरणादिद्रव्यभावसंबंधनविप्रोषत्ततोयुगपत्प्रादुर्भूतानंतचतुष्टयोघनप
सवितुःप्रतापप्रकाशाभिव्यक्तिवत्खल्वयमात्मैवपरमात्मव्यपदेशभाग्भवति॥शिवतत्वं॥अविरलमरी
मंजरीपुंजपिंजरितभासुरतरशिरोमणिमंडलीसहस्रमंडितविकटतरफूत्कारमारुतपरंपरोत्पातपे
लितकुलाचलसम्मिलितशिखिशिखासंतापद्रवत्कांचनकांतिकपिशनिजकायकांतिछटा
टलितदिग्वलयक्षत्रियभुजंगपुंगवद्वितयपरिक्षिप्तक्षितिबीजविस्पष्टप्रकटपविपंजरपिनद्ध
गिरिचतुरस्रमेदिनीमंडलावलंबनगजपतिपृष्ठप्रतिष्ठितपरिकलितकुलिशाकरप्राचीप्रमुखविला ॥७०॥

शृंगारदर्पणोल्लसितलोचनसहस्रश्रीत्रिदशपतिमुद्रालंकृतसमस्तभुवनावलंबिसुनाशीरपरिकलितज
गद्वयः॥ पृथ्वीतत्वं समाप्तं॥ तदुपरिपुनर्नानाविपुलतरसुधासमुद्रसन्निभसमुल्लसन्निजशरीरप्रभापट
लव्याप्तसकलगगनांतरालवैशद्यापूरी विषविषधरावनद्धवारुणपुरप्रतिष्ठितविपुलतरबीजाक्षरमंडन
पुंडरीकलक्ष्मोपलक्षितपारावारमयखंडेंदुमंडलाकारवरुणपुरप्रतिष्ठितविपुलतरप्रचंडमुद्राग्रहे
विकीर्णशिशिरतरपयःकणाक्रांतिकर्बुरितसकलककुप्चक्रकरिमकरमारूढप्रशस्तपाशपाणिवरु
णामृतमुद्राबंधविधुरितनिःशेषविषानलसंतानभगवद्वरुणनिर्व्यूढोत्संगप्रदेशः॥ विस्फुरितनिजवपु
र्बहलज्वालावलीपरिकलितसकलदिग्वलयद्विजदंदशूकरक्षिताशुशुक्षणिरवर्णविस्फुरितविस्तीर्ण

कोपपन्नत्रिकोणतेजोमयपुरमध्यबद्धवसतिवर्त्माधिरूढप्रज्वलदलातहस्तानलभुजोद्दीपितस
क्तविरचितोरःप्रदेशः॥अग्नितत्वं॥अविरतपरिस्फुरत्फूत्कारमारुतांदोलितसकलभुवनाभोगपरि
घद्धरणाचक्रवालकालिमानिजतनुसमुत्थलद्धहलकांतिपटलपिहितनिखिलनभस्तलस्फूर्ज्काङ्क्षेयव
लयितमरुन्मुद्रोपपन्नविंदुसंदोहसुंदरमहामारुतवलयत्रितयात्मकसकलभुवनाभोगवायुपा
भस्वत्पुरांतर्गतवाहनकुरंगवेगविहरणदुर्ललितकरतलकलितचलविटपकोटिकिपालय
लिमरुन्मुद्रोच्छलितसकलभुवनपवनमयवदनारविंदः॥वायुतत्वं॥गगनगोचरामूर्तजयविजयभुजंग
भुषणोनंताकृतिपरमविभुनभस्तलनिलीनसमस्ततत्वात्मकसमस्तज्वररोगविषयधरोद्दुमरडाकिनी

यक्षकिंनरनरेंद्रारिमारिपरयंत्रमंत्रमुद्रामंडलज्वलनहरिसरभशार्दूलद्विपदैत्यदुष्टप्रभृतिसमस्तोपसर्ग
निर्मूलनकारिसामर्थ्यः॥परिकलितसमस्तगारुडमुद्रामंडलाडंबरसमस्ततत्वात्मकः संन्नात्मैव गारुडगो
गोचरत्वमवगाहते॥ विपतत्वं॥ यदिपुनरसौ सकलजगच्चमत्कारिकार्मुकास्पदनिवेशितमंडलीकृतसर
सेक्षुकांडस्वरसहितकुसुमसायकविधिलक्षीकृतदुर्लक्षमोक्षलक्ष्मीसमागमोत्कंठितकठोरतरमुनि
मनाः स्फुरन्मकरकेतुकमनीयसकलललनावृंदवंदितसौंदर्यरतिकेलिकलापदुर्ललितचेताश्चतुरचेष्टि
तभ्रूभंगमात्रवशीकृतजगत्त्रयस्त्रैणसाधनो दुरधिगमागाधगहनरागसागरांतरदोलितसुरासुरनरभुज
गयक्षसिद्धगंधर्वविद्याधरादिवर्गः॥ स्त्रीपुरुषभेदभिन्नसमस्तसत्वपरस्परमनः संघटनसूत्रधारः॥ विविधवन

जिपरिमलपरिमिलितमधुकरकुलविकसितसितकुसुमस्तबकतरलितकटाक्षप्रगटसौभाग्येनसह
रलताकिसलयकरोन्मुक्तमंजरीपरागपिष्टातकप्रसुनितप्रवेशोत्सवेनमदमुखरमधुकरकुटुंबिनीको
लालापसंवलितमांसलितकोकिलाकुलकणत्कारसंगीतकप्रियेणमलयगिरिमेखलावनकृतनिलयचं
लतालास्योपदेशकुशलैःसुरतभरखिन्नपन्नगनितंबिनीजनवदनकवलितशिखैरपिविरहिणीनिःश्वास
सलीकृतकायैःकेरलीकुरलांदोलनदक्षैरुत्कंपितकुंतलकामिनीकुंतलैःपरिगतसुरतखेदोन्मिषित
ललाटस्वेदांबुकणिकापानदोहदवद्भिरासादितानेकनिर्झरप्रशिशिरशीकरैर्बकुलामोदसंदर्भनिर्भरैःपा
लुंठितपाटलासौरभैःपरिमिलितनवमालिकामोदैर्मदसंचरणशीलैराकुलीकृतसकलभुवनजनमनोभिर्म

मारुतैः॥समुच्छ्वसितसौभाग्येन वसंतसुहृदा दूरमारोपितप्रतापः॥प्रारब्धोत्तमतपस्तपस्श्रांतमुनिजनप्रार्थितप्रवे
शोत्सवेन स्वर्गापवर्गद्वारसंघटनवज्रार्गलः॥सकलजगद्विजयवैजयंतीकृतचतुरकामिनीभ्रूविभ्रमः॥सोभग
रिमुद्राविशेषपालीसकलजगद्वशीकरणसमर्थ्य इति चिंत्यते॥तदायमात्मैव कामोक्तिविषयतामनुभवतीति
तदेवं यदिह जगति शरीरविशेषसमवेतं किमपि सामर्थ्यमुपलभामहे॥तत्सकलमात्मन एवेति निश्चयः॥आ
त्म प्रवृत्तिपरंपरोत्पादितत्वाद्विग्रहग्रहणस्येति॥१४॥यदिह जगति किंचिद्विस्मयोत्पत्तिबीजं भुजगमनुजदेवे
ष्वस्ति सामर्थ्यमुच्चैः॥तदखिलमपि मत्वा नूनमात्मैकनिष्ठं भजत नियतचित्ताः शाश्वदात्मानमेव॥१५॥अचिंत्यम
स्य सामर्थ्यं प्रवक्तुं कः प्रभुर्भवेत्॥तच्च नानाविधध्यानपदवीमधितिष्ठति॥१६॥तदस्य कर्तृ जगदंकि लीनं तिरो

हितांस्तेंसहजैर्वप्राप्तिं॥प्रबोधितस्तांसममिव्यनक्तिप्रसह्यविज्ञानमयःप्रदीपः॥अथवा॥अयंत्रिजगती
विश्वज्ञोनंतशक्तिमान्॥नात्मानमपिजानातिस्वस्वरूपात्परिच्युतः॥१॥अनादिकालसंभूतैःकलंकैःक
कृतः॥स्वेच्छयार्थान्समादत्तेस्वतोत्यंतविलक्षणान्॥३॥दृग्बोधनयनःसोयमज्ञानतिमिराहतः॥जानन्नं
जा नातिपश्यन्नपिनपश्यति॥४॥अविद्योद्भूतरागादिगरव्यग्रीकृताशयः॥पतत्यनंतदुःखाग्निप्रदीप्तेजन्म
मे॥५॥लोष्ठेष्वपिययोन्मत्तःस्वर्णबुद्ध्याप्रवर्तते॥अर्थेष्वनात्मभूतेषुस्वेच्छयायंतथाभ्रमात्॥६॥वासनाजनिता
न्यसुखदुःखानिदेहिनाम्॥अनिष्टमपियेनायमिष्टमित्यभिमन्यते॥७॥अविश्रांतमसौजीवोयथाकामार्थ
म॥८॥खिद्यतेत्र्यंयदिस्वार्थेतथाकिंनविमुच्यते॥९॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारे॥

तत्वप्रकरणं॥ अथ केचिद्यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयइतिअष्टावंगानियोगस्यस्थ
नानि॥ तथान्यैः यमनियमावपास्य आसनप्राणायामप्रत्याहारधारणाध्यानंसमाधयइतिषट्॥ तथान्ये॥ उ
त्साहान्निश्चयाद्धैर्यात्संतोषात्तत्वदर्शनात्॥ मुनेर्जनपदत्यागात्षड्भिर्योगः प्रसिध्यति॥ १॥ एतान्यैवांङ्कः केचिच्च
मनःस्थैर्यायप्रुच्छयंतस्मिन्स्थिरीकृतेसाक्षात्स्वार्थसिद्धिर्ध्रुवाभवेत्॥ यमादिषुकृताभ्यासोनिःसंगोनिर्म
मोमुनिः॥ रागादिक्लेशनिर्मुक्तंकरोतिस्ववशंमनः॥ ५॥ अष्टावंगानियोगस्ययान्युक्तान्यार्यसूरिभिः॥ चित्तप्रस
मार्गेणबीजंस्युस्तानिमुक्तये॥ ६॥ अंगान्यष्टावपिप्रायः प्रयोजनवशात्क्वचित्॥ उक्तान्यत्रैवतान्युच्चैर्विदांकुर्वंतु
योगिनः॥ ७॥ मनोरोधेभवेद्रुद्धं विश्वमेवशरीरिभिः॥ प्रायोसंवृत्तचित्तानांशेषरोधोप्यपार्थकः॥ ८॥ इति॥ कलंकवि

लयः साक्षान्मनःशुद्धैव देहिनाम् । तस्मिन्नपि समीभूते स्वार्थसिद्धिरुदाहृता ॥९॥ चित्तप्रपंचजानेकवि
धकाः प्राप्नुवंति नरा नूनं मुक्तिकांताकरग्रहम् ॥१०॥ अतस्तदेव संरुध्य कुरु स्वाधीनमंजसा । यदि छेत्तुं
त्वं कर्मनिगडं दृढं ॥११॥ सम्यगस्मिन् प्रशमं नीते दोषा जन्मभ्रमोद्भवाः । जन्मिनां खलु शीयंते ज्ञानश्रीप्रतिबं
१२॥ एक एव मनोदैत्यः जयः सर्वार्थसिद्धिदः । अन्यत्र विफलः क्लेशो यमिनां तज्जयं विना ॥१३॥ एक एव मनोरोधः
सर्वाभ्युदयसाधकः । यमेवालंब्य संप्राप्ता योगिनस्तत्वनिश्चयं ॥१४॥ पृथक्करोति यो धीरः स्वपरावेकतां गतौ ।
चापलं निगृह्णाति पूर्वमेवांतरात्मनः ॥१५॥ मनःशुद्धैव शुद्धिः स्याद्देहिनां नात्र संशयः । वृथा तद्व्यतिरेकेण काय
यं कदर्थना ॥१६॥ ध्यानशुद्धिं मनःशुद्धिः करोत्येव न केवलं । विछिनत्यपि निःशंका कर्मजालानि देहिनाम् ॥१७॥

पंकजसंलीनं तस्यैतद्भुवनत्रयं॥ यस्य चित्तं स्थिरीभूय स्वस्वरूपे लयं गतं॥ प्रमनः कृत्वा शुनिःसंगं निःशेषविषयच्यु
तं॥ मुनिभृंगैः समालीढं मुक्तेर्वदनपंकजं॥१९॥ यथा यथा मनःशुद्धिर्मुनेः साक्षात्प्रजायते॥ तथा तथा विवेकश्रीर्हृ
दि धत्ते स्थिरं पदं॥२०॥ चित्तशुद्धिमनासाद्य मोक्तुं यः सम्यगिच्छति॥ मृगतृष्णातरंगिण्यां स पिबत्यंबु केवलं॥२१॥ तद्ध्या
नं तद्धि विज्ञानं तद्ध्येयं तत्त्वमेव वा॥ येनाविद्यामतिक्रम्य मनस्तत्त्वे स्थिरीभवेत्॥२२॥ विषयग्रामलुब्धेन चित्तदैत्ये
न सर्वथा॥ विक्रम्य स्वेच्छया जस्रं जीवलोकः कदर्थितः॥२३॥ अवार्यविक्रमः सोयं चित्तदंती निवार्यतां॥ न याव
द्ध्वंसयत्येष सत्संयमनिकेतनं॥२४॥ विभ्रमन्विषयारण्ये चलच्चेतोबलीमुखः॥ येन रुद्धो ध्रुवं सिद्धं फलं तस्यै
व वांछितं॥२५॥ चित्तमेकं न शक्नोति जेतुं स्वातंत्र्यवर्तियः॥ ध्यानवार्तां ब्रुवन्मूढः स किं लोके न लज्जते॥२६॥ यदसाध्यं

तपोनिष्टैर्मुनिभिर्निर्वीतमत्सरैः॥ तत्पदं प्राप्यते धीरैश्चित्तप्रसरबंधकैः॥२७॥ अनंतजन्मजानेककर्मबंधस्थितिर्दृढ
भावशुद्धिंप्रपन्नस्य मुनेः प्रक्षीयते क्षणात्॥२८॥ यस्य चित्तं स्थिरीभूतं प्रसन्नं ज्ञानवासितं॥ सिद्धमेव मुनेस्तस्य
साध्यं किं कायदंडनैः॥२९॥ तपः श्रुतयमज्ञानतनुक्लेशादिसंचयं॥ अनियंत्रितचित्तस्य स्यान्मुनेस्तुषकंडनं॥३०॥
एवं हि मनःशुद्धिर्लोकाग्रपथदीपिका॥ स्खलितं बहुभिस्तत्र तामनासाद्य निर्मलां॥३१॥ असंतोपि गुणाः संति
यस्यां सत्यां शरीरिणाम्॥ संतोपि यां विना यांति सा मनःशुद्धिः शस्यते॥३२॥ अपि लोकत्रयैश्वर्यं सर्वाक्षप्रीणनक्षमं
भजत्यचिंत्यवीर्योयं चित्तदैत्यो निरंकुशः॥३३॥ प्रशमश्रुतयमोपेता जिताक्षाः शंसितव्रताः॥ विदंत्यनिर्जित
ताः स्वस्वरूपं न योगिनः॥३४॥ विलीनविषयं शांतं निःसंगं त्यक्तविक्रियं॥ स्वस्थं कृत्वा मनः प्राप्तं मुनिभिः पदमं

द्विकं दैत्याधिप्सं त्रिदशापतिपुराण्यंबुवाहांतरालंद्वीपांभोधिप्रकांडं खचरनरसुरांहीद्रीवासंसमग्रं॥ एतत्त्रै
कनीडंपवनचयचितंचापलेनक्षणार्द्धेनाभ्रांतंचित्तदैत्योभ्रमतितनुमतांदुर्विचिंत्यप्रभावः॥३६॥
मसमाधिध्यानविज्ञानहेतोर्विनयनयविवेकोदारचारित्रसिध्यै॥ यइहजयतिचेतःपन्नगंदुर्निवारंसख
जगतियोगिव्रातवंद्योमुनींद्रः॥३७॥ इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेमनोव्या
रप्रतिपादविकरणं॥ निःशेषविषयोत्तीर्णंविकल्पव्रजवर्जितं॥ स्वतत्वैकपरंधत्तेमनीषीनियतंमनः॥१॥ अथव
क्रियमाणमपिस्वस्थंमनःसद्योनिभूयते॥ अनाद्युत्पन्नसंबंधैरागादिरिपुभिर्बलात्॥२॥ स्वतत्वानुगतंचेतः
करोतियदिसंयमी॥ रागादयस्तथाप्येतेक्षिपंतिभ्रमसागरे॥३॥ आत्माधीनमपिस्वांतंसद्योरागैःकलंक्यते॥

तद्दूरतः पूर्वमेवात्र यत्नो विधीयताम्॥४॥ अयत्नेनापि जायंते चित्तभूमौ शरीरिणाम्॥ रागादयः स्वभावोत्था ज्ञा
ज्यांगघातकाः॥५॥ इंद्रियार्थानपाकृत्य स्वतत्त्वमवलंब्यते॥ यदि योगी तथाप्येते छलयंति मुहुर्मनः॥६॥
ढंक्वचिद्भ्रांतं क्वचिद्भीतं क्वचिद्रतं॥ शंकितं च क्वचित्क्लिष्टं रागाद्यैः क्रियते मनः॥७॥ अजस्रं रुध्यमानोपि चिरा
भ्यासाद्दृढीकृताः॥ चरंति हृदि निःशंका नृणां रागादिराक्षसाः॥८॥ प्रयासैः फल्गुनिर्मूढैः किमात्मा दंड्यते धि
या॥ शक्यते न हि चेच्चेतः कर्तुं रागादिवर्जितं॥९॥ क्षीणरागं च्युतद्वेषं ध्वस्तमोहं सुसंवृतं॥ यदि चेतः समापन्नं
द्धं समीहितं॥१०॥ मोहपंके परिक्षीणे प्रशांते रागविभ्रमे॥ पश्यंति यमिनः स्वस्मिन् स्वरूपं परमात्मनः॥११॥
संग्रामे शिवश्रीसंगमोत्सुकैः॥ योगिभिर्ज्ञानशस्त्रेण रागमल्लो निपातितः॥१२॥ असंक्लिष्टमविभ्रांतमविद्रु

नाकुलं॥ निश्चलं च मनः कृत्वा वस्तुतत्वं निरूपय॥१३॥ रागादिनिर्हतं चेतः स्वतत्वविमुखं भवेत्॥ ततः प्रच्यवते क्षि
प्रं ज्ञानरत्नाद्रिमस्तकात्॥१४॥ रागद्वेषभ्रमाभावे मुक्तिमार्गे स्थिरीभवेत्॥ संयमी जन्मकांतारसंक्रमक्लेशशांकि
तः॥१५॥ रागादिनिरविश्रांतं वंच्यमानं मुहुर्मनः॥ न पश्यति परं ज्योतिः पुण्यपापेंधनानलं॥१६॥ रागादिपंकविश्ले
षात्प्रसन्ने चित्तवारिणि॥ परिस्फुरति निःशेषं मुनेर्वस्तुकदंबकं॥१७॥ स कोपि परमानंदो वीतरागस्य जायते॥ ये
न लोकत्रयैश्वर्यमप्यचिंत्यं तृणायते॥१८॥ प्रशाम्यति विरागस्य दुर्बोधविषमग्रहः॥ स एव वर्द्धते जंतो रागार्तस्ये
देहिनः॥१९॥ स्वभावजमनातंकं वीतरागस्य यत्सुखं॥ न तस्यानंतभागोपि प्राप्यते त्रिदशेश्वरैः॥२०॥ तार्वना
दिसंभूतौ रागद्वेषौ महासुरौ॥ अनंतदुःखसंतानप्रसूतेः प्रथमांकुरौ॥२१॥ उक्तं च॥ रागी बध्नाति कर्माणि वीतरा

मुनिरूप्यभावशुद्धायतस्वतद्धंधमोक्षाय॥३९॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेराग
षप्रकरणम्॥छ॥मोहवह्निमपाकर्तुंस्वीकर्तुंसंयमश्रियं॥छेत्तुंरागद्रुमोद्यानंप्रशमत्वमवलंब्यतां॥१॥चि
त्रक्षणैर्भवैरिष्टानिष्टतयास्थितैः॥नमुह्यतिमनोयस्यतस्यसाम्येस्थितिर्भवेत्॥२॥विरज्यकामभोगे
वपुषिस्पृहा॥समत्वंभजसर्वज्ञज्ञानलक्ष्मीकुलास्पदं॥३॥छित्वाप्रशमशस्त्रेणभवव्यसनवागुरां॥मुक्तेःस्वयं
धीरव्रजशनैःशनैः॥४॥साम्यसूर्यांशुभिर्भिन्नेरागादितिमिरोत्करे॥प्रपश्यतियमीस्वस्मिन्स्वरूपंपर
॥५॥साम्यसीमानमालंब्यकृत्वात्मन्यात्मनिश्चयं॥पृथक्करोतिविज्ञानीसंश्लिष्टेजीवकर्मणी॥६॥
रिणि॥शुद्धानांसतांज्ञानैकचक्षुषां॥इहैवानंतबोधादिराज्यलक्ष्मीःसखीभवेत्॥७॥भावयस्वतथात्मानं

नोति निर्भरां नयथा द्वेषरागाभ्यां गृह्णात्यर्थकदंबकं ॥ रागादिविपिनं भीमं मोहशार्दूलपालितं । दग्धं मुनिमहा
अग्नि शिखा
वीरैः साम्यधूमध्वजार्चिषा ॥ मोहपंके परीक्षीणे प्रशीर्णे रागादिबंधने । नृणां हृदि पदं धत्ते साम्यश्रीर्विश्ववंदिता
॥ १४ ॥ आशाः सद्यो विपद्यंते यांत्यविद्याः क्षयं क्षणात् । म्रियते चित्तभोगीन्द्रो यस्य सा साम्यभावना ॥ १ ॥ साम्यकोटिं
समारूढो यमी जयति कर्म यत् । निमेषांतेन तज्जन्मकोटिभिस्तपसेतरः ॥ २ ॥ साम्यमेव परं ध्यानं प्रणीतं विश्वद
र्शिभिः । तस्यैव व्यक्तये नूनं मन्येयं शास्त्रविस्तरः ॥ ३ ॥ साम्यभावितभावानां स्यात्सुखं यन्मनीषिणां । तन्मन्ये ज्ञा
नसाम्राज्यसमत्वमवलंबते ॥ ४ ॥ यः स्वभावोत्थितां साध्वीं विशुद्धिं स्वस्य वांछति । स धारयति पुण्यात्मा सम
त्वाधिष्ठितं मनः ॥ ५ ॥ तनुत्रयविनिर्मुक्तं दोषत्रयविवर्जितं । यदा वेत्यात्मनात्मानं तदा साम्ये स्थितिर्भवेत्

शेषपरपर्यायैः परद्रव्यैर्विलक्षणं निश्चिनोति यदात्मानं तदा साम्यं प्रसूयते॥१७॥ तस्यैवाविचल

(भिन्नत्वं)
व्ययमात्तस्यैव बंधविश्लेषः समत्वं यस्य योगिनः ॥१८॥ यस्य हेयं न चादेयं जगद्विश्वं चराचरं स्या

(शुभाशुभकर्मक्षय)
त्साम्याच्छुभाशुभमलक्षयः ॥१९॥ तथाहि॥ शाम्यंति जंतवः क्रूरा बद्धवैराः परस्परं अपि स्वार्थप्रवृ

(मुनिना)
मुनेः साम्यप्रभावतः ॥२०॥ भजंति जंतवो मैत्रीमन्योन्यं त्यक्तमत्सराः समत्वालंबिनां प्राप्य पादपद्मार्चितां

(मेघे)
क्षितिम् ॥२१॥ शाम्यंते योगिभिः क्रूरा जंतवो नेति शंक्यते दावदीप्तमिवारण्यं यथा वृष्टैर्बलाहकैः ॥२२॥ भवं

प्रसन्नानि कश्मलान्यपि देहिनां मां चेतांसि योगिसंसर्गेऽगस्त्ययोगे जलानि वा ॥२३॥ अपि च ॥ क्षुभ्यंति

(हस्ती दैत्य सिंह शार्दूल सर्पादय)
क्षकिन्नरनरास्तुष्यंति नाकेश्वरा मुंचंति द्विपदैत्यसिंहशरभव्यालादयः क्रूरतां रुग्वैरप्रतिबद्धविभ्रमभय

ष्टं जगज्ज्ञायते स्याद्योगीन्द्र समत्वसाध्यमथवा किं किं न सद्यो भुवि ॥२४॥ चंद्रः सांद्रैर्विकिरति सुधामंशुभिर्जी
वलोको भास्वानुग्रैः किरणपटलैरुच्छिनत्त्यंधकारं धात्री धत्ते भुवनमखिलं विश्वमेतच्च वायुर्यद्वत्साम्या
च्छमयति तथा जंतुजातं यतींद्र ॥२५॥ सारंगी सिंहशावं स्पृशति सुतधिया नंदिनी (गौ) व्याघ्रपोतं मार्जारी हंसबालं
प्रणयपरवशा केकिकांता (मयूरी) भुजंगं वैराण्याजन्मजातान्यपि गलितमदा जंतवोऽन्ये त्यजंति श्रित्वा साम्यैकरू
ढं प्रशमितकलुषं योगिनं क्षीणमोहं ॥२६॥ एकः पूजां रचयति नतः (नम्रीभूतः) पारिजातप्रसूनैः क्रुद्धः कंठे क्षिपति भु
जगं हंतुकामस्ततोऽन्यः तुल्या वृत्तिर्भवति च तयोर्यस्य नित्यं स योगी साम्यारामं विशति परमज्ञानदत्तावका
शो ॥२७॥ नारण्यान्नगरं न मित्रमहिताद्ग्रावोष्ठान्न जांबूनदं न स्रग्दाम भुजंगमान्न दृषदस्तल्पं (ग्राव्या) प्रशांकोज्ज्वलं यस्या

तःकरणे विभर्ति कलया नोत्कृष्टतामीषदप्यार्यास्तं परमोपशान्तिपदवीमारूढमाचक्षते ॥२८॥ मोधोत्संगे स्म
स्तुतिशापनविधौ कर्दमे कुंकुमे वा पल्यंके कंटकाग्रे दृषदि शशिमणौ चर्मचीनांशुकेषु शीर्णांगे दिव्य
अनुपमशाम्यवशात्
समसमवशाद्यस्य चित्तं विकल्पैर्नालीढं सोयमेकः कलयति कुशलः साम्यलीलाविलासं ॥२९॥ चलत्य
चलमालेयं कदाचिद्दैवयोगतः । नोपसर्गैरपि स्वान्तं मुनेः साम्यप्रतिष्ठितं ॥३०॥ उन्मत्तमथ विभ्रान्तं दिग्मूढ
मुप्तमेव वा । साम्यस्थस्य जगत्सर्वं योगिनः प्रतिभासते ॥३१॥ वाचस्पतिरपि ब्रूते यद्यं जन्मसमाहितः । वक्तुं तथा
पि शक्नोति नहि साम्यस्य वैभवं ॥३२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे साम्यप्र
करणम् ॥ छ ॥ दुःप्रज्ञाबललुप्तवस्तुनिचया विज्ञानशून्याशया विद्यन्ते प्रतिमंदिरं निजनिजस्वार्थोद्यता देहि ॥८०॥

नः॥ आनंदामृतसिंधुशीकरचयैर्निर्वाप्य जन्मानलं ये मुक्तेर्वदनेंदुवीक्षणपरास्ते संति द्वित्रा यदि॥ साम्यशीना

ति निःशंकं सतामपि हृदि स्थितिं धत्ते सुनिश्चलध्यानसुधासंबंधवर्जितं॥ यस्य ध्यानं सुनिःकंपं समत्वं तस्य

निश्चलं॥ नानयोर्विद्ध्यधिष्ठानमन्योन्यं स्याद्विभेदतः॥ साम्यमेव न सद्ध्यानात् स्थिरीभवति केवलं॥ शुध्यत्यपि

कर्मौघकलंकी यंत्रवाहकः॥ यदेव संयमी साक्षात्समत्वमवलंबते स्यात्तदैव परं ध्यानं तस्य कर्मौघघात

कं॥ अनादिविभ्रमोद्भूतं रागादितिमिरं घनं॥ स्फोटयत्याशु जीवस्य ध्यानार्कः प्रविजृंभितः॥ भवज्वलनसं

भूतः महादाहप्रशांतये॥ शश्वद्ध्यानांबुधेर्धीरैरवगाहः प्रशस्यते॥ ध्यानमेवापवर्गस्य मुख्यमेकं निबंधनं॥

तदेव दुरितव्रातगुरुकक्षहुताशनं॥ अपास्य कल्पनाजालं चिदानंदमये स्वयं... असद्ध्यानानि चोदेयं

योगं॥तद्यथा॥ज्वलनवनविषास्त्रव्यालशार्दूलदैत्यैः स्थलजलबिलसत्त्वैर्दुर्जनारातिभूपैः॥स्वजनधनशरीरध्व
सिभिस्तैरनिष्टैर्भवति यदिह योगादाद्यमार्त्तं तदेतत्॥२६॥तथा चरस्थितैर्भावैरनेकैः समुपस्थितैः॥अनिष्टैर्य
त्क्लिष्टं स्यादार्त्तं तत्प्रकीर्त्तितं॥२७॥श्रुतैर्दृष्टैः स्मृतैर्ज्ञातैः प्रत्यासत्तिं च संश्रितैः॥योऽनिष्टार्थैर्मनः क्लेशः
॥२८॥प्रज्ञोपानिष्टसंयोगे तद्वियोगानुचिंतनं॥यत्स्यात्तदपि तत्त्वज्ञैः पूर्वमार्त्तं प्रकीर्त्तितं॥२९॥प्रथमं॥
र्य्यकलत्रबांधवसुहृत्सौभाग्यभोगात्यये (विनाशे) चित्तप्रीतिकरप्रसन्नविषयप्रध्वंसभावेऽथवा॥सं
विवशैर्यत्खिद्यतेऽहर्निशं तत्स्यादिष्टवियोगजं तनुमतां ध्यानं कलंकास्पदम्॥३०॥दृष्टश्रुतानुभूतैस्तैः
श्चित्तरंजकैः॥वियोगे यन्मनः खिन्नं स्यात्तदार्त्तं द्वितीयकं॥३१॥मनोज्ञवस्तुविध्वंसे पुनस्तत्संगमार्थिभिः॥क्लि

तेयत्तदेवंस्याद्द्वितीयार्त्तस्यलक्षणं ३२ ॥ द्वितीयं ॥ कासश्वासभगंदरोदरजराकुष्टातिसारज्वरैः पित्तश्लेष्ममरुत्प्र
कोपजनितैरोगैः शरीरांतकैः ॥ स्याच्छश्वत्प्रबलैः प्रतिक्षणभवैर्यद्व्याकुलत्वंनृणांतद्रोगार्त्तमनिंदितैः प्रकटितं
दुर्वारदुःखाकरं ३३ ॥ अल्पानामपिरोगाणांमाभूत्स्वप्नेपिसंभवः ममेतियानृणांचिंतास्यादार्त्तंतत्तृतीयकं ३४
भोगाभोगीन्द्रसेव्यास्त्रिभुवनजयनीरूपसाम्राज्यलक्ष्मीराज्यंक्षीणारिचक्रंविजितसुरवधूलास्यलीलायुव
त्याः ॥ अन्यच्चानंदभूतंकथमिहभवतीत्यादिचिंतासुभाजांयात्तद्भोगार्त्तमुक्तंपरमगणधरैर्जन्मसंतानसूत्रं
३५ ॥ पुन्यानुष्ठानजातैरभिलषतिपदंयज्जिनेन्द्रामराणांयद्वातैरेववांछत्यहितकुलकुजच्छेदमत्यंतकोपात्
पूजासत्कारलाभप्रभृतिकमथवायाचतेयद्विकल्पैः ॥ स्यादार्त्तंतन्निदानप्रभवमिहनृणांदुःखदावोग्रधाम ३६

इष्टभोगादिसिद्ध्यर्थं रिपुघातार्थमेव वा । यन्निदानं मनुष्याणां स्यादार्त्तं तत्तुरीयकं ॥ चतुर्थं ॥ इत्थं चतुर्भिः
(विस्तारितैः) प्रथितैर्विकल्पैरार्त्तं समासादिह हि प्रणीतं । अनंतजीवाशयभेदभिन्नं ब्रूते समग्रं यदि वीरनाथः ॥ ३५ ॥ (अनिष्ट) अप
(प्रथम) थ्यमपि पर्यंते रम्यमग्रिमक्षणे । विद्ध्यसद्ध्यानमेतद्धि षड्गुणस्थानभूमिकं ॥ ३६ ॥ (पंचमगुणस्थानेषु श्रावकेषु) संयतासंयतेष्वेतच्चतुर्भेदं प्र
(षष्ठगुणस्थानवर्त्ति मुनिषु) यतं । प्रमत्तसंयतानां तु निदानरहितं त्रिधा ॥ ३७ ॥ कृष्णनीलाद्यसल्लेश्याबलेन प्रविजृंभते । इदं दुरितदावा
र्चिः प्रसूतेरिंधनोपमं ॥ ३८ ॥ (आर्त्त) एतद्विनापि यत्नेन स्वयमेव प्रसूयते । अनाद्यसत्समुद्भूतसंस्कारादेव देहिनां ॥
(आर्तस्य) ३९ ॥ अनंतदुःखसंकीर्णमस्य तिर्यग्गतेः फलं । क्षायोपशमिको भावः कालश्चांतर्मुहूर्त्तिकं ॥ ४० ॥ शंकाशोक
मादकलहाश्चिंताभ्रमोद्भ्रांतयस्तन्मादो विषयोत्सुकत्वमसकृन्निद्रांगजाड्यश्रमाः । मूर्छादीनि शरीरि

कथयिता

रतं लिंगानि बाह्यान्यैलं प्रार्तोधिष्ठितचेतसां श्रुतधरैर्व्यावर्णितानि स्फुटं ॥४४॥ इत्याचार्यश्रीशुभचंद्रविरचिते
ज्ञानार्णवे योगप्रदीपाधिकारे आर्तध्यानप्रकरणम् ॥छ॥ रुद्राशयभवं भीममपि रौद्रं चतुर्विधं ॥ कीर्त्यमानं विदं
त्वार्याः सर्वसत्वाभिनंदकाः ॥१॥ रुद्रः क्रूराशयः प्राणी प्रणीतस्तत्वदर्शिभिः ॥ रुद्रस्य कर्म भावो वा रौद्रमित्यभि
धीयते ॥२॥ हिंसानंदान्मृषानंदाच्चौर्यात्संरक्षणात्तथा ॥ प्रभवत्यंगिनां शश्वदपि रौद्रं चतुर्विधं ॥३॥ हिंसारौद्रं
॥ तद्यथा ॥ हते निपीडिते ध्वस्ते जंतुजाते कदर्थिते ॥ स्वेन चान्येन यो हर्षस्तद्धिंसारौद्रमुच्यते ॥४॥ अनारतं निःक
रुणस्वभावः स्वभावतः क्रोधकषायदीप्तः ॥ मदोद्धतः पापमतिः कुशीलः स्यान्नास्तिको यः स हि रौद्रधामा ॥
संगः
५॥ हिंसाकर्मणि कौशलं निपुणता पापोपदेशे भृशं दाक्ष्यं नास्तिकशासने प्रतिदिनं प्राणातिपाते रतिः ॥ संवास

महनिर्दयैर्विरतं नैसर्गिकी क्रूरता यत्स्याद्देहभृतां तदत्र गदितं रौद्रं प्रशांताशयैः ॥३॥ केनोपायेन घातो भव
ति तनुमतां कः प्रवीणोऽत्र हंता हंतुं कस्यानुरागः कतिभिरिह दिनैर्हन्यते जंतुजातं हत्वा पूजां करिष्ये द्विजगु
रुमरुतां पुष्टिशांत्यर्थमित्थं यत्स्यात् हिंसाभिनंदो जगति तनुभृतां तद्धि रौद्रं प्रणीतं ॥४॥ गगनवनधरित्रीचारि
णां देहभाजां दलनदहनबंधच्छेदघातेषु यत्नं इति नखकरनेत्रोत्पाटने कौतुकं यत्तदिह गदितमुच्चै
रौद्रमित्थं ॥५॥ अस्य घातो जयोऽन्यस्य समरे जायतामिति स्मरत्यंगी तदप्याहू रौद्रमध्यात्मवेदिनः ॥६॥
जंतुवधाद्युरुपराभवे यो हर्षस्तद्धि विज्ञेयं रौद्रं दुःखानलेंधनं ॥७॥ अहं कदा करिष्यामि पूर्ववैरस्य निः
अस्याचित्रैर्वधैश्चेति चिंता रौद्राय कल्पिता ॥८॥ किं कुर्मः शक्तिवैकल्याज्जीवत्यद्यापि विद्विषः तद्धि मुत्र हनि

नभश्चर स्थलचर जलचर

जीवानां

खल्वा

प्रति

वैरिणः

इनव

ध्यामः प्राप्यं कालं तथा बलं ॥ २ ॥ अनिलषति नितांतं यत्परस्योपकारं व्यसनविशिषभिन्नं वीक्ष्य यन्नोषमेति ॥
(द्वेषकरोति) य दिह गुणगरिष्ठां द्वेष्टि दृष्ट्वान्यभूतिं भवति हृदि सशल्यः तद्धि रौद्रस्य लिंगं ॥ ३ ॥ हिंसानंदोद्भवं रौद्रं वकुं कस्या
स्ति कोपालं जगज्जंतुसमुद्भूतविकल्पप्रातसंभवं ॥ ४ ॥ हिंसोपकरणादानं क्रूरसत्वेष्वनुग्रहं ॥ निस्त्रिंशतादि
गा निरौद्रं बाध्यानि देहिनां ॥ ५ ॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे हिंसानंदः प्रथम
॥ छ ॥ असत्यकल्पनाजालकश्मलीकृतमानसः चेष्टते यज्जनस्तद्धि मृषारौद्रं प्रकीर्तितं ॥ १ ॥ तद्यथा ॥ विधा
(भोगयिष्यामि) य वंचकं शास्त्रं मार्गमुद्दिश्य निर्दयं ॥ प्रपात्य व्यसने लोकं भोक्ष्येहं वांछितं सुखं ॥ २ ॥ असत्यचातुर्यबलेन लो
द्वित्तं ग्रहिष्यामि बहुप्रकारं तथाश्वमातंगपुराकराणि कन्यादिरत्नानि च बंधुराणि ॥ ३ ॥ असत्यवाग्वंचनया

तंप्रवर्तयत्यत्रजनंवराकं॥स्वधर्ममार्गादितिवर्तनेनमदोद्धतोयःसहिरौद्रधामा॥४॥असत्यसामर्थ्यवशाद
तीन्नृपेणचान्येनचघातयामि॥अदोषिणांदोषचयंविधायचिंतेतिरौद्रायमतांमुनींद्रैः॥५॥पातयामिजनं
मूढंव्यसनेनर्थसंकटे॥वाक्कौशल्यप्रयोगेणवांछितार्थप्रसिद्धये॥६॥इमानजडान्बोधविचारविच्युतान्
तारयाम्यर्घ्यवचोभिरुन्नतैः॥अमीप्रवर्त्स्यंतिमदीयकौशलादकार्यवर्गेष्वितिनात्रसंशयः॥७॥अनेकासत्यसं
कल्पैर्यःप्रमोदःप्रजायते॥मृषानंदात्मकंरौद्रंतत्प्रणीतंपुरातनैः॥८॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञाना
र्णवेयोगप्रदीपाधिकारेअसत्यरौद्रंद्वितीयं॥२॥छ॥चौर्योपदेशबाहुल्यंचातुर्यंचौर्यकर्मणि॥यच्चौर्यै
तःसच्चौर्यानंदइष्यते॥१॥तद्यथा॥यच्चौर्यायशरीरिणामहरहश्चिंतासमुत्पद्यतेकृत्वाचौर्यमपिप्रमोदमतुलं

कुर्वंति यत्संततं॥ चौर्येणापि हृते परैः परधने यज्जायते संभ्रमस्तच्चौर्यप्रभवं वदंति निपुणा रौद्रं सुनिंदास्पदं॥१
कृत्वा सहायं वरवीरसैन्यं तथाभ्युपायांश्च बहुप्रकारान्॥ धनान्यलभ्यानि चिरार्ज्जितानि सद्यो हरिष्याम्यभिजन
स्य धाम्नाम॥२॥ द्विपदचतुष्पदसारं धनधान्यवरांगनासमाकीर्णम्॥ वस्तु परकीयमपि मे स्वाधीनं चौर्यसाम
र्थ्यात्॥३॥ इत्थं चुरायां विविधप्रकारः शरीरिभिर्यः क्रियतेऽभिलाषः॥ अपारदुःखार्णवहेतुभूतं रौद्रं तृतीयं त
दिह प्रणीतं॥४॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे चौर्यानंदरौद्रं तृतीयं॥३॥ छा॥ ब
ह्वारंभपरिग्रहेषु नियतं रक्षार्थमभ्युद्यते यत्संकल्पपरंपरां वितनुते प्राणीह रौद्राशयः॥ यच्चालंब्य महत्त्वमु
न्नतमना राजेत्यहं मन्यते तत्तुर्य्यं प्रवदंति निर्मलधियो रौद्रं भवाशंसिनां॥१॥ तद्यथा॥ आरोप्य चापं निशितैः

शौर्यौघैर्निकृत्य वैरिव्रजमुद्धतारं दग्ध्वापुरस्याभवराकराणि प्राप्स्येहमैश्वर्य्यमनन्यसाध्यं॥२०॥ प्राज्ञिद्यगृह्य
धरांमदीयांकन्यानिरत्नानिधनानिनारी॥२१॥ येत्राद्यवः संप्रतिलुप्तचिह्नास्तेषांकरिष्येकुलकक्षदाहं॥२२॥ सक
पूज्यंवीरवर्गोपसेव्यंस्वजनधनसमृद्धंरत्नरामाभिरामं॥ अमितविभवसारंविश्वभोगाधिपत्यंप्रबल
लोतंहंतकल्लामयाप्तं॥ जित्वाभुवंजंतुकुलानिहत्वाप्रविश्यदुर्गाणिउदधीन्विलंघ्य॥ कृत्वापदंमूर्द्धिमदोद्ध
नांमयाधिपत्यंकृतमभ्युदारं॥२४॥ जलानलव्यालविषप्रयोगैर्विश्वासभेदप्रणिधिःप्रपंचैः॥ उत्साद्यनिःश
त्रातिचक्रंस्फुरत्ययंमेप्रबलप्रतापः॥२५॥ इत्यादिसंरक्षणसंनिबद्धंसंचिंतनंयत्क्रियतेमनुष्यैः॥ संरक्षणानंद
भवंतदेतद्रौद्रंप्रणीतंजगदेकनाथैः॥२६॥ इत्याचार्य्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेसंरक्ष

॥नंदरौद्रंचतुर्थं॥४॥ कृष्णलेश्याबलोपेतं श्वभ्रपातफलांकितं॥ रौद्रमेतद्धि जीवानां स्यात्पंचगुणभूमिकं॥१॥ क्रू
तादंडपारुष्यं वंचकत्वं कठोरता॥ निस्त्रिंशत्वं च लिंगानि रौद्रस्योक्तानि सूरिभिः॥२॥ विस्फुलिंगनिभे नेत्रे भ्रूव
क्रा भीषणाकृतिः॥ कंपस्वेदादिलिंगानि रौद्रे बाह्यानि देहिनां॥३॥ क्षायोपशमिको भावः कालश्चांतर्मुहूर्त्तिकः
दुष्टाशयवशादेतदप्रशस्तावलंबनं॥४॥ दहत्येव क्षणार्द्धेन देहिनामिदमुत्थितं॥ असद्ध्यानं त्रिलोकश्रीप्रसवं
धर्म्मपादपं॥५॥ इत्यार्त्तरौद्रे गृहिणामजस्रं ध्याने सुनिंद्ये भवतः स्वतोपि॥ परिग्रहारंभकषायदोषैः कलंकितेंत
करणे विशंकं॥६॥ क्वचित्क्वचिदमी भावाः प्रवर्त्तंते मुनेरपि॥ प्राक्कर्मगौरवाच्चित्रं प्रायः संसारकारणं॥७॥ स्वयमेव
प्रजायंते विना यत्नेन देहिनां॥ अनादिदृढसंस्काराद्दुर्ध्यानानि प्रतिक्षणं॥८॥ इति विगतकलंके श्चर्चितं चित्रस

दुरितकुरुहकंदं निंद्यदुर्ध्यानयुग्मं॥ कटुकतरफलाढ्यं सम्यगालोच्य धीर त्यज सपदि यदि त्वं मोक्षमार्गे प्र
वृत्तः॥ ४१॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे आर्तरौद्रध्यानप्रकरणं॥ छ॥ अथ प्र
ममालंब्य विधाय स्ववशं मनः॥ विरज्य कामभोगेषु धर्मध्यानं निरूपय॥ १॥ तदेव प्रक्रमायातं सविकल्पं स
मासतः॥ आरंभफलपर्यंतं प्रोच्यमानं विबुध्यतां॥ २॥ ज्ञानवैराग्यसंपन्नः संवृतात्मा स्थिराशयः॥ मुमुक्षुरु
तो ध्याता धीरः प्रशस्यते॥ ३॥ चतस्रो भावना धन्याः पुराणपुरुषाश्रिताः॥ मैत्र्यादयश्चिरं चित्ते विधेया
सिद्धये॥ ४॥ अथ मैत्री॥ क्षुद्रेतरविकल्पेषु चरस्थिरशरीरिषु॥ सुखदुःखाद्यवस्थासु संस्थितेषु यथायथं॥ ५
नायोनिगतेष्वेषु समत्वेनाविराधका॥ साध्वी महत्त्वमापन्ना मतिर्मैत्रीति पठ्यते॥ ६॥ जीवंतु जंतवः सर्वे क्लेशव्य

सनवर्ज्जिताः॥प्राप्नुवंतुसुखंत्यक्त्वावैरंपापंपराभवं॥अथकरुणा॥दैन्यशोकसमुत्त्रासरोगपीडार्द्दितात्मसु
वधबंधनरुद्धेषुयाचमानेषुजीवितं॥७॥क्षुत्तृट्श्रमाभिभूतेषुशीताद्यैर्व्यथितेषुच॥अवरुद्धेषुनिस्त्रंशंपीड्य
मानेषुनिर्द्दयं॥८॥मारणार्त्तेषुभूतेषुयत्प्रतीकारवांछया॥अनुग्रहमतिःसेयंकरुणेतिप्रकीर्तिता॥१०॥
अथमुदिता॥तपःश्रुतयमोद्युक्तचेतसांज्ञानचक्षुषां॥विजिताक्षकषायाणांस्वतत्त्वाभ्यासशालिनां॥११॥ज
जगत्त्रयचमत्कारिचरणाधिष्ठितात्मनां॥योगुणेषुप्रमोदःस्यात्सद्भिःसामुदितामता॥१२॥अथोपेक्षा॥क्रोधावि
ष्टेषुसत्वेषुनिस्त्रिंशक्रूरकर्मसु॥मधुमांससुरान्यस्त्रीलुब्धेष्वत्यंतपापिषु॥१३॥देवागमयतिव्रातनिंदकेष्वा
त्मसंशिषु॥नास्तिकेषुचमाध्यस्थ्यंयत्सोपेक्षाप्रकीर्तिता॥१४॥एताःमुनिजनानंदसुधास्यंदैकचंद्रिका॥ध्व

तारागाद्युरुक्लेशालोकाग्रपददीपिका॥१५॥ एतानिरनिशं योगी श्रीउन्नत्यंतनिर्भरं॥ सुखमात्मोत्थमत्यक्ष
मिहैवास्कंदति ध्रुवं॥१६॥ भावनास्वासु संलीनः करोत्यध्यात्मनिश्चयं॥ अवगम्य जगद्वृत्तं विषयेषु न मुह्य
ति॥१७॥ योगनिद्रास्थितिं धत्ते मोहनिद्रापसर्पति॥ आसु सम्यक्प्रणीतासु स्यान्मुनेस्तत्वनिश्चयं॥१८॥ आभिर्यदा
विश्वं भावयत्यखिलं वशी॥ तदौदासीन्यमापन्नश्चरत्यत्रैव मुक्तवत्॥१९॥ रागादिवागुराजालं निकृत्याचिं
त्यविक्रमः॥ स्थानमाश्रयते धन्यो विविक्तं ध्यानसिद्धये॥२०॥ कानिचित्तत्र शस्यंते दूष्यंते कानिचित्पुनः॥
ध्यानसिद्धयेस्थानानि मुनिसत्तमैः॥२१॥ विकीर्यते मनः सद्यः स्थानदोषेण देहिनां॥ तदेव स्वस्थतां धत्ते
नमासाद्य बंधुरं॥२२॥ म्लेच्छाधमजनैर्जुष्टं दुष्टभूपालपालितं॥ पाषंडिमंडलाक्रांतं महामिथ्यात्ववासितं॥२३॥ कौ

लकापालिकावासंरुद्रस्तुद्रादिमंदिरं॥२३॥उद्भ्रांतभूतवेतालंचंडिकाभवनाजिरं॥२४॥पण्यस्त्रीकृतसंकेतंमंदचा
रित्रमंदिरं॥क्रूरकर्माभिचाराढ्यंकुशास्त्राभ्यासवंचितं॥२५॥क्षेत्रजातिकुलोत्पन्नशक्तिस्वीकारदर्पितं॥मिलिता
नेकदुःशीलकल्पितानेकसाहसं॥२६॥द्यूतकारसुरापानविटबंदिव्रजान्वितं॥पाकमल्लसमाक्रांतंनास्ति
कासारसेवितं॥२७॥क्रव्यादकामुकाकीर्णंव्याधविध्वस्तश्वापदं॥शिल्पिकारुकविक्षिप्तमग्निजीविजनं
चितं॥२८॥प्रतिपक्षशिरःशूलप्रत्यनीकावलंबितं॥आत्रेयीखंडितव्यंगसंश्रितंचपरित्यजेत्॥२९॥विड्वंति
जनाःपापाःसंचरंत्यभिसारिकाः॥क्षोभयंतीङ्गिताकारैर्यत्रनार्योप्यशंकिताः॥३०॥किंचक्षोभायमोहाय
द्विकारायजायते॥स्थानंतदपिमोक्तव्यंध्यानविध्वंसशंकितैः॥३१॥तृणकंटकवल्मीकविषमोपलकर्दमैः॥भ

स्मोच्छिष्टास्थिरक्ताद्यैर्दूषितांसंत्यजेद्ध्रुवं॥३२॥काकःकौशिकमार्जारखरगोमायुमंडलैः॥अवघुष्टंहिविघ्नाय
ध्यातुंकामस्ययोगिनः॥३३॥ध्यानध्वंसनिमित्तानितथान्यान्यपिभूतले॥नहिस्वप्नेपिसेव्यानिस्थानानि
निसत्तमैः॥३४॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेविरुद्धस्थानप्रकरणं॥छ॥
सिद्धक्षेत्रेमहातीर्थेपुराणपुरुषाश्रिते॥कल्याणकलितेपुण्येध्यानसिद्धिःप्रजायते॥१॥सागरांतेवनांतेवाशैलशृंगां
तरेथवा॥पुलिनेपद्मखंडांतेप्राकारेशालसंकटे॥२॥सरितांसंगमेद्वीपेप्रशस्तेतरुकोटरे॥जीर्णोद्यानेश्मशा
नेवागुहागर्भेविजंतुके॥३॥सिद्धकूटेजिनागारेकृत्रिमेकृत्रिमेपिवा॥महर्द्धिकमहावीरयोगसंसिद्धवांछि
ते॥४॥मनःप्रीतिप्रदेप्रशस्तेपुंकाकोलाहलच्युते॥सर्वर्तुसुखदेरम्येसर्वोपद्रववर्जिते॥५॥शून्यवेश्मन्यथ

भूगर्भे कदलीगृहे ॥ पुरोपवनवंद्यंते मंडपे चैत्यपादपे ॥६॥ वर्षातपतुषारादिपवनासारवर्जिते ॥ स्थाने जागत
विश्रांतं यमी जन्मार्तिशांतये ॥७॥ यत्र रागादयो दोषा अजस्रं यांति लाघवं ॥ तत्रैव वसतिः साध्वी ध्यानकाले वि
शेषतः ॥८॥ दारुपट्टे शिलापट्टे भूमौ वा सिकतास्थले ॥ समाधिसिद्धये धीरो विदध्यात्सुस्थिरासनं ॥९॥ पर्यंक
मर्द्धपर्यंकं वज्रवीरासनं तथा ॥ सुखारविंदपूर्वं च कायोत्सर्गश्च संमतः ॥१०॥ येन येन सुखासीना विदध्युर्नि
श्चलं मनः ॥ तत्तदेव विधेयं स्यान्मुनिभिर्बंधुरासनं ॥११॥ कायोत्सर्गश्च पर्यंकः प्रशस्तः कैश्चिदीरितः ॥ देहिनां
वीर्यवैकल्यात्कालदोषेण संप्रति ॥१२॥ वज्रकाया महासत्वा निःकंपाः सुस्थिरासनाः ॥ सर्वावस्थास्वलं ध्यात्वा
गताः प्राग्योगिनः शिवं ॥१३॥ उपसर्गैरपि स्फीतैर्देवदैत्यादिकल्पितैः ॥ स्वरूपालंबितं तेषां न चेतश्चाल्यते क्वचित् ॥

१४॥श्रूयंते संवृतस्वांताः स्वतत्त्वकृतनिश्चयाः॥विपद्योग्रोपसर्गाग्निं ध्यानसिद्धिं समाश्रिताः॥१५॥केचिज्ज्वालाव
रिसरिन्नागजव्यालविध्वस्तदेहा॥केचित्क्रूरारिदैत्यैरदयमभिहताश्चक्रशूलासिदंडैः॥भूकंपोत्पातवातप्र
बलपविघनव्रातरुद्धास्तथान्ये कृत्वास्थैर्यं समाधौ सपदि शिवपदं निःप्रपंचं प्रपन्ना॥१६॥तद्धैर्यं यमिनां मन्ये
संप्रति पुरातनं॥अतः स्वप्नेपि तामास्थां प्राचीनां कर्तुमक्षमाः॥१७॥निःशेषविषयोत्तीर्णो निर्विण्णो जन्मसं
आत्माधीनमनाः शश्वत्सर्वदा ध्यातुमर्हति॥१८॥अविक्षिप्तं यदा चेतः स्वतत्वाभिमुखं भवेत्॥नेकं मुक्त्वा मुनेः सा
द्विक्षेपरहितं मनः॥१९॥संविग्नः संवृतो धीरः स्थिरात्मा निर्मलाशयः॥सर्वावस्थासु सर्वत्र सदैव ध्यातुमर्हति॥२०
जने जनसंकीर्णे सुस्थिते दुःस्थितेपि वा॥यदि धत्ते स्थिरं चित्तं न तदास्ति निषेधनं॥२१॥पूर्वाशाभिमुखः साक्षा

रान्निमुखोथवा॥ प्रसन्नवदनोध्याताध्यानकालेप्रशस्यते॥२२॥ अथवा॥ चरणज्ञानसंपन्नाजिताक्षावीतविभ्रमाः
प्रागनेकास्ववस्थासुसंप्राप्तायमिनःशिवं॥२३॥ मुख्योपचारभेदेनद्वौमुनीस्वामिनौमतौ॥ अप्रमत्तप्रमत्ताख्यौधर्मस्ये
तौयथायथं॥२४॥ अप्रमत्तःसुस्थानोवज्रकायोवशीस्थिरः॥ पूर्ववित्संवृतोधीरोध्यातासंपूर्णलक्षणः॥२५॥ श्रुतेन
विकलेनापि॥ स्वामीसूत्रेप्रकीर्तितः॥ अधःश्रेण्यांप्रवृत्तात्मा धर्मध्यानस्यसुश्रुतः॥२६॥ किंचकेश्चिच्चधर्मस्यचत्वा
रःस्वामिनःस्मृताः॥ सद्दृष्ट्याद्यप्रमत्तांतायथायोग्येनहेतुना॥२७॥ ध्यातारस्त्रिविधाज्ञेयास्तेषांध्यानान्यपित्रिधा लेश्या
विशुद्धियोगेनफलसिद्धिरुदाहृता॥२८॥ अथासनजयंयोगीकरोतुविजितेंद्रियः॥ मनागपिनखिद्यंतेसमाधौसुस्थि
रासनाः॥२९॥ आसनाभ्यासवैकल्याद्वपुःस्थैर्यंनविद्यते॥ खिद्यतेत्वंगवैकल्यात्समाधिसमयेध्रुवं॥३०॥ वातातपतुषा

राद्यैर्जंतुजातैरनेकधा॥ कृतासनजयो योगी खेदितोपि न खिद्यते॥ ३१॥ आसाद्य निमतं रम्यं स्थानं चित्तप्रस
उद्भिन्नपुलकः श्रीमान् पर्यंकमधितिष्ठति॥ ३२॥ पर्यंकदेशमध्यस्थे प्रोत्तानेकरकुड्मले॥ करोत्युद्भिन्नराजीव
निभे च्युतचापले॥ ३३॥ नासाग्रदेशविन्यस्ते धत्ते नेत्रे सुनिश्चले॥ प्रसन्ने सौम्यतापन्ने निस्पंदे मंदतारके॥ ३४॥
भ्रूविक्रियाहीनं सुश्लिष्टाधरपल्लवं॥ सुप्तमत्स्यह्रदप्रायं विदध्यान्मुखपंकजं॥ ३५॥ अगाधकरुणांभोधौ मग्नः
विभ्रमानसः॥ स्वच्छायतं वपुर्धत्ते प्रशस्तं पुस्तमूर्त्तिवत्॥ ३६॥ विवेकवार्द्धिकल्लोलैर्निर्मलीकृतमानसः॥ ज्ञानमंत्रो
द्धृताशेषरागादिविषमग्रहः॥ ३७॥ रत्नाकर इवागाधः सुराद्रिरिव निश्चलः॥ प्रशांतविश्वविस्पंदः प्रनष्टसकल
भ्रमः॥ ३८॥ किमयं लोष्टनिष्पन्नः॥ किंवा पुस्तप्रकल्पितः॥ समीपस्थैरपि प्रायः प्राज्ञैर्ध्यानीति लक्ष्यते॥ ३९॥

जयः॥ मुनिर्नीतस्वसिद्धांतैः प्राणायामः प्रशस्यते॥ मुनिभिर्ध्यानसिद्ध्यर्थं स्थैर्यार्थं चांतरात्मनः॥४॥ अतः साक्षात्
स विज्ञेयः पूर्वमेव मनीषिणा॥ मनागप्यन्यथा शक्यो न कर्तुं चित्तनिग्रहः॥५॥ त्रिधा लक्षणभेदेन संस्मृतः पूर्व
सूरिभिः॥ पूरकः कुंभकश्चैव रेचकस्तदनंतरं॥६॥ तद्यथा॥ द्वादशांतात्समाकृष्य यः समीरः प्रपूर्यते॥ स पूरक इ
ति ज्ञेयो वायुविज्ञानकोविदैः॥७॥ निरुणद्धि स्थिरीकृत्य श्वसनं नाभिपंकजे॥ कुंभवन्निर्भरः सोयं कुंभकः परि
कीर्तितः॥८॥ निःसार्यतेतियत्नेन यः कोष्ठाच्छ्वसनः शनैः॥ स रेचक इति प्राज्ञैः प्रणीतः पवनागमे॥९॥ नाभिकं
दाद्विनिःक्रांतं हृत्पद्मोदरमध्यगं॥ द्वादशांते सुविश्रांतं तज्ज्ञेयं परमेश्वरं॥१०॥ तस्य चारं गतिं बुध्वा संस्थां चैवात्मनः
सदा॥ चिंतयेत्कालमायुश्च शुभाशुभफलोदयं॥११॥ अत्राभ्यासं प्रयत्नेन प्राप्तत्तंद्रः प्रतिक्षणं॥ कुर्वन्योगी विजान

पूरीरिणां ध्रुवं वामा॥ क्षिपयति तद्देव पार्श्वे वहमाना दक्षिणा नाडी॥७४॥ संग्राम सुरत भोजन विरुद्धदुर्गेषु
क्षेपोष्टा॥ स्यात् अभ्युदयहृदयवांछितसमस्तप्राप्तेषु वामेव॥७५॥ पूर्णे ष्टघटने समर्थौ राहुग्रहकालचंद्रसू
र्याद्या॥ क्षितिवरुणौ त्वमृतगतौ समस्तकल्याणदौ ज्ञेयौ॥७६॥ पूर्णं पूर्वस्य जयो रिक्ते त्वितरस्य कथ्यते तज्ज्ञैः
भयोर्युद्धनिमित्ते दूतेनापृच्छिते प्रश्ने॥७७॥ ज्ञातुर्नाम प्रथमं पश्चाद्यद्यातुरस्य गृह्णाति दूतस्तदेष्टसिद्धि
स्तस्याद्विपर्यास्ता॥७८॥ जयति समाक्षरनामा वामावाहुस्थितेन दूतेन॥ विषमाक्षरस्तु दक्षिणदिक्संस्थे
स्तु संपाते॥७९॥ भूतादिग्रहीतानां रोगार्तानां च सर्पदष्टानां॥ पूर्वोक्त एव च विधिर्बोध्यो मंत्रिणां वश्यं॥८०॥
पूर्णा वरुणे प्रविशति यदि वामा जायते क्वचित्पुण्यैः॥ सिद्ध्यंत्यचिंतितान्यपि कार्याण्यारंभमाणानि॥८१॥ जय

वितलाभाद्याः येर्थाः पूर्वंतु सूचिताः शास्त्रे॥ स्युस्ते सर्वेप्यफला मृत्युस्थे मरुति लोकानां॥९२॥अनिलमवबुध्यस
न्यकुपुष्पं हस्तात्प्रपातयेत् ज्ञानी॥ मृतजीवितविज्ञाने ततः स्वयं निश्चयं कुरुते॥९३॥वरुणे त्वरितो लाभश्चिरेण
भौमे तदर्थिने वाच्यं॥ तुच्छतरः पवनाख्ये सिद्धोपि विनश्यते वह्नौ॥९४॥आयाति गतो वरुणे भौमे तत्रैव तिष्ठति
सुखेन॥ यात्यन्यत्र श्वसने मृत इति वह्नौ समादेश्यं॥९५॥घोरतरः संग्रामो हुताशनो मरुति भंग एव स्यात्॥ गग
ने स्येन्य विनाशं मृत्युर्वा युद्धपृच्छायां॥९६॥ऐंद्रे विजयः समरे ततोधिको वांछितश्च वरुणे स्यात्॥ संधिर्वा रिपु
भंगात् स्वसिद्धिसंसूचनोपेतः॥९७॥वर्षति भौमे मघवान्वरुणे तु मनोगतं तथाजस्रं॥ दुर्द्दिनघनाश्च पवने वह्नौ
वृष्टिः कियन्मात्रा॥९८॥सस्यानां निःपत्तिः स्याद्वरुणे पार्थिवे च सुश्लाघ्या॥ स्वल्पापि न चाग्नेये वाच्या काशे तु मध्य

९९ नृपतिगुरुबंधुवृद्धा अपरेप्यनिलषितसिद्धये लोकाः॥ पूर्णांगे कर्तव्या विदुषा वीतप्रपंचेन॥१००॥ पा
नाशानेषु दक्षैः पूर्णांगनिवेशिता सुयोषा सु॥ क्रियते चेतस्त्वरितं नातोन्यद्वश्यविज्ञानं॥१॥ अरिरिणिकचौरदु
ष्टा अपरेप्युपसर्गविग्रहाद्याश्च॥ रिक्तांगे कर्तव्या जयलाभसुखार्थिभिः पुरुषैः॥२॥ रिपुशस्त्रसंप्रहारे रक्षतियः
पूर्णगात्रभूभागं॥ बलिभिरपि वैरिवर्गैर्न निहन्यते तस्य सामर्थ्यं॥३॥ वरुणमहेंद्रौ शस्तौ प्रश्ने गर्भस्य पुत्रदौ
इतरौ स्त्रीजन्मकरौ शून्यं गर्भस्य नाशाय॥४॥ नासाप्रवाहदिग्भागे गर्भार्थं यस्तु पृच्छति पुरुषः पुरुषादेशं
न्यभागे तथांगना॥५॥ विज्ञेयः सन्मुखे षंढः सुषुम्नायां सुतौ शिशू॥ गर्भहानिस्तु संक्रांतौ समे क्षेमं विनिर्दि
शेत्॥६॥ ज्ञायेत यदि न सम्यग्मरुत्तदा बिंदुभिः स निश्चेयः॥ सितपीतारुणकृष्णैर्वरुणावनिदहनपवनोत्थैः॥७॥

कर्णाक्षिनासिकापुटमंगुष्टप्रथममध्यमांगुलिभिः॥द्वाभ्यांचपिधायमुखंकरणेनहिदृश्यतेबिंदुः॥८॥दक्षि
णामथवावामांयोनिषेद्धुंसमीप्सति॥तदंगपीडयेदन्यांनासानाडींसमाश्रयेत्॥९॥अग्रेवामविभागेचंद्र
क्षेत्रंवदंतितत्त्वविदः॥पृष्ठेचदक्षिणांगेरवेस्तदेवाकुराचार्याः॥१०॥अवनिवनदहनमंडलविचलनशील
स्यतावदनिलस्य॥गतिस्तत्त्रेवमरुत्पुरविहारिणःसातिरश्चीना॥११॥पवनःप्रवेशकालेजीवइतिप्रो
च्यतेमहामतिभिः॥निःक्रमणेनिर्जीवःफलमपिचतयोस्तथाभूतं॥१२॥जीवेजीवतिविश्वंमृतेमृतंसूरि
भिःसमुद्दिष्टं॥सुखदुःखजयपराजयलाभालाभादिमार्गोयं॥१३॥संचरतियदावायुस्तत्वान्नत्वांतरंतदा
ज्ञेयं॥यत्त्याजतितद्रिक्तंतत्पूर्णंयत्रसंक्रमति॥१४॥ग्रामपुरयुद्धजनपदगृहराजकुलप्रवेशनिःकाशे॥पूर्णं

पादमग्रेकृत्वाव्रजतोस्यसिद्धिःस्यात॥१५॥ अमृतेप्रवहतिनूनंकेचित्प्रवदंतिसूरयोत्यर्थं॥जीवंतिविषाशक्ता
तितथान्यथाभूते॥१६॥यस्मिन्नसतिम्रियतेजीवतिसतिभवतिचेतनाकलितः॥जी
तत्वविदः॥१७॥सुखदुःखजयपराजयजीवितमरणानिविघ्नइतिकेचित्॥वायुप्रपंचरचनामवे
मानः॥१८॥कुर्वीतपूरकेसत्याकृष्टिंकुंभकेस्तथास्तंभं॥उच्चाटनंचयोगीरेचकविज्ञानसामर्थ्यात॥१९॥इदम
त्रंश्वसनभवंसामर्थ्यस्यान्मुनेर्ध्रुवंतस्य॥योनाडिकाविशुद्धिंसम्यक्कर्तुंविजानाति॥२०॥यद्यपिसमीरचारं
नतरंयोगिभिःसुदुर्लक्ष्यं॥जानातिविगततंद्रस्तथापिनाडाकृताभ्यासः॥२१॥नाडिकाशुद्धिः॥तद्यथा॥
चिंतयतिनाभिकमलेसुवंधुरंकर्णिकारूढं॥२२॥रेचयतिततःशीघ्रंपतं

गमार्ग्रेण।भासुराकारं।ज्वालाकलापकलितंस्फुलिंगमालाकराक्रांतं।२३।तरलतडिदुग्रवेगंधूमशिखावर्त
द्दिक्चक्रं।गच्छंतंगगनतलेदुर्द्धर्षदेवदैत्यानां।२४।पूरादिंदुधामधवलंगगनतलान्मंदमंदमवतीर्णं।क्षरदमृ
तमिवसुधांशोः पूरयतिपथापुनःपुरतः।२५।आनीयनाभिकमलंनिवेश्यतस्मिन्पुनःपुनश्चैव।अनलस
मनसाकार्यंप्रवेशनिःक्रमणमनवरतं।२६।अथनाभिपुंडरीकाच्छनैश्शनैर्हृदयकमलनालेन।निःसारय
समीरंपुनःप्रवेशयतिसोद्योगं।२७।नाडीशुद्धिंकुरुतेदहनपुरंदिनकरस्यमार्गेण।निःक्रामद्विशदिंदोःपुर
मितरेणेतिकेप्याहुः।२८।इतिनाडिकाविशुद्धौपरिकलिताभ्यासकौशलोयोगी।आत्मेच्छयैवघटयतिपुटयो
पवनंक्षणार्द्धेन।२९।एकस्यामयमास्तेकालंनाडीयुगद्वयंसार्द्धं।तामुत्सृज्यततोन्यामधितिष्ठतिनाडिकामनिल॥

३४॥षोडशप्रमितःकैश्चिन्निर्णीतोवायुसंक्रमः॥अहोरात्रौमितेकालेद्वयोर्नाड्योर्यथाक्रमं॥३५॥षट्शताभ्यधिका
न्याहुःसहस्राण्येकविंशतिः॥अहोरात्रेनरिस्वस्थेप्राणवायोर्गमागमः॥३६॥संक्रांतिमपिनोवेत्तियःसमीरस्यमु
ग्धधीः॥सतत्वनिर्णयंकर्तुंप्रवृत्तःकिंनलज्जते॥३७॥अथकौतूहलहेतोःकरोतिवेधंसमाधिसामर्थ्यात्॥सम्य
तपवनःशनैःशनैरर्कतूलेषु॥३८॥तत्रकृतनिश्चयोसौजातीवकुलादिगंधद्रव्येषु॥स्थिरलक्ष्यतयाशश्व
धंवितंज्ञात्मा॥३९॥कर्पूरकुंकुमागुरुमलयजकुष्टादिगंधद्रव्येषु॥वरुणपवनेनवेधंकरोतिलक्ष्यकृताभ्यास
द्धि॥एतेषुलब्धलक्ष्यस्ततोतिसूक्ष्मेषुपत्रिकायेषु॥वेधंकरोतिवायुःप्रपंचयोजनचतुरः॥४०॥मधुकरपतंगप
त्रिषुतथाण्डजेष्वेषुमृगशरीरेषु॥संचरतिजातलक्ष्यस्त्वनन्यचित्तोवशीधीरः॥४१॥नरतुरगकरिशरीरेक्रमे

चरतिनिःसरत्येव॥मुक्तोपलरूपेषुचयदृच्छयासंक्रमंकुर्यात॥४८॥इतिपरपुरप्रवेशाभ्यासोत्थसमाधिसामर्थ्या
त॥विचरतियदृच्छयासौमुक्तइवात्यंतनिर्लेप॥४९॥अथकौतुकमात्रफलोयंपरपुरप्रवेशोमहाप्रयासेनसि
ध्यतिनवाकथंचिन्महतामपिकालयोगेन॥५१॥स्मरगरलमनोविजयंसमस्तरोगक्षयंवपुःस्थैर्यं॥पवनप्रचारच
तुरःकरोतियोगीनसंदेहः॥५२॥जन्मशतजनितमुग्रंप्राणायामाद्विलीयतेपापं॥नाडीयुगलस्यांतेयतेर्जिताक्ष
स्यधीरस्य॥५३॥उक्तंच॥जलबिंदुकुशाग्रेणमासेमासेतुयःपिबेत॥संवत्सरशतंसाग्रंप्राणायामश्चतत्समः॥५४॥
॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेप्राणायामप्रकरणं॥छ॥समाकृष्येंद्रियार्थेभ्यः
साक्षंचेतःप्रशांतधीः॥यत्रयत्रेच्छयाधत्तेप्रत्याहारःसउच्यते॥१॥निःसंगःसंवृतस्वांतःकूर्मवत्संवृतेंद्रियः॥यमीसम

त्वमापन्नो ध्यानतंत्रे स्थिरीभवेत् ॥२॥ किंच ॥ गोचरेभ्यो हृषीकाणि तेभ्यश्चित्तमनाकुलं ॥ पृथक्कृत्य वशी धत्ते
ललाटेत्यंतनिश्चलं ॥३॥ सम्यक्समाधिसिद्ध्यर्थं प्रत्याहारः प्रशस्यते ॥ प्राणायामेन विक्षिप्तं मनः स्वास्थ्यं न
दति ॥४॥ प्रत्याहृतं पुनः स्वस्थं सर्वोपाधिविवर्जितं ॥ चेतः समत्वमापन्नं स्वस्मिन्नेव लयं व्रजेत् ॥५॥ वायोः सं
तुर्यमणिमाद्यंगसाधनं ॥ प्रायः प्रत्यूहबीजं स्यान्मुनेर्मुक्तिमभीप्सतः ॥६॥ किमनेन प्रपंचेन वीतरागस्य यो
न ॥ वशीकृताक्षवर्गस्य प्राणायामो न शस्यते ॥७॥ प्राणस्यायमने पीडा तस्यां स्यादार्त्तसंभवः ॥ तेन प्रच्याव्यते
नं ज्ञाततत्त्वोपि लक्षतः ॥८॥ पूरणे कुंभके चैव तथा श्वसननिर्गमे ॥ व्यग्रीभवंति चेतांसि क्लिश्यमानानि वायु
भिः ॥९॥ किंच ॥ नातिरिक्तं फलं सूत्रे प्राणायामात्प्रकीर्तितं ॥ अतस्तदर्थमस्माभिर्नातिरिक्तं कृतः श्रमः ॥१०॥ निरु

॥ स्वसंदेहार्त्तजन्मना ॥ सुविचार्यैव तद्ज्ञेयं यन्मुक्तेर्बीजमग्रिमं ॥७॥ संविग्नस्य प्रशांतस्य ॥

ध्यकरणग्रामं समत्वमवलंब्य च॥ ललाटदेशसंलीनं विदध्यान्निश्चलं मनः॥१२॥ अथवा॥ नेत्रद्वंद्वे श्रवणयुगले
नासिकाग्रे ललाटे वक्त्रे नाभौ शिरसि हृदये तालुनि भ्रूयुगांते॥ ध्यानस्थानान्यमलमतिभिः कीर्तितान्यत्र देहे ते
ष्वेकस्मिन् विगतविषयं चित्तमालंबनीयं॥१३॥ स्थानेष्वेतेषु विश्रांतं मुनेर्लक्ष्यं वितन्वतः॥ उत्पद्यंते स्वसंवित्तेर्बह
वो ध्यानप्रत्ययाः॥१४॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे प्रत्याहारधारणाप्रकरणम्
॥छ॥ अनंतगुणराजीवबंधुरप्यत्र वंचितः॥ अहो भवमहाकक्षे प्रागहं कर्मवैरिभिः॥१॥ स्वविभ्रमसमुद्भूतैरगाध
तुलबंधनैः॥ बद्धो विडंबितः कालमनंतं जन्मदुर्गमे॥२॥ अद्य रागज्वरो नष्टो मोहनिद्रा विनिर्गता॥ ततः कर्मरिपुं ह
न्मि ध्याननिस्त्रिंशधारया॥३॥ आत्मानमेव पश्यामि निर्द्धूयाज्ञानजं तमः॥ क्षोपयामि तथाप्युग्रं कर्मेंधनसमुत्करं॥
॥४॥

बलध्यानवज्रेणदुरितद्रुमसंक्षयं॥तथाकुर्मोयथादत्तेनपुनर्भवसंभवं॥५॥जन्मज्वरसमुद्भूतमहामूर्छा
क्रुषा॥स्वविज्ञानोद्भवःसाक्षात्मोक्षमार्गोनवीक्षितः॥६॥मयात्मापिनविज्ञातोविश्वलोकैकलोचनः॥अवि
विषमग्राहदंतचर्वितचेतसा॥७॥परमात्मापरंज्योतिर्जगज्ज्येष्ठोपिवंचितः॥आपातमात्ररम्यैस्तैर्विषयैरंतनीर
सैः॥८॥अहंचपरमात्माचद्वावेतौज्ञानलोचनौ अतस्तंज्ञातुमिच्छामितत्स्वरूपोपलब्धये॥९॥ममप्रात्ताणगुण
ग्रामोव्यक्तश्चपरमेष्ठिनः॥एतावानावयोर्भेदःप्रक्तिव्यक्तिस्वभावतः॥१०॥उक्तंच॥नासत्पूर्वाश्चपूर्वानोनिर्वि
शेषविकारजाः॥स्वाभाविकविशेषाश्चभूतपूर्वाश्चतद्गुणाः॥११॥तावन्मांपीडयत्येवमहादाहोद्भवोद्भवः॥
नसुधांभोधेर्नावगाहःप्रवर्तते॥१२॥अहंननारकोनामनतिर्यग्वापिमानुषः॥नदेवःकिंतुसिद्धात्मासर्वोयं

जः क्रमः ॥१३॥ अनंतवीर्यविज्ञानदृगानंदात्मकोप्यहं ॥ किंन प्रोन्मूलयाम्यद्य प्रतिपक्षविषद्रुमं ॥१४॥ अद्यासाद्य
स्वसामर्थ्यं प्रविश्यानंदमंदिरं ॥ न स्वरूपाच्च्यविष्येहं वाह्यार्थेषु गतस्पृहः ॥१५॥ मयाद्यैव विनिश्चेयं स्वस्वरूपं हि वस्तु
तः ॥ छित्वाप्यनादिसंभूतामविद्यां वैरिवागुरां ॥१६॥ इति प्रतिज्ञां प्रतिपद्य धीरः समस्तरागादिकलंकमुक्तः ॥ आलंव्य
ते धर्ममचंचलात्मा ॥ शुक्लं च यद्यस्ति वलं विशालं ॥१७॥ प्रतिज्ञा ॥ ध्येयं वस्तु वदंति निर्मलधियस्तच्चेतनाचेतनं
स्थित्युत्पत्तिविनाशलक्षणयुतं मूर्तेतरं च क्रमात् ॥ शुद्धध्यानविशीर्णकर्मकवचो देवश्च मुक्तेर्वरः सर्वज्ञः सक
लः शिवः स भगवान् सिद्धः परो निःकलः ॥१८॥ अमी जीवादयो भावाश्चिदचिल्लक्ष्मलांछिताः ॥ तत्स्वरूपाविरोधे
न ध्येया धर्ममनीषिभिः ॥१९॥ ध्याने ह्युपरते धीमान् मनः कुर्यात्समाहितं ॥ निर्वेदपदमापन्नं मग्नं वा करुणांवुधौ ॥२०॥

त्रैलोकत्रयीनाथममूर्तंपरमेश्वरं॥ध्यातुंप्रक्रमतेसाक्षात्परमात्मानमव्ययम्॥२१॥
साक्षाच्छक्तिव्यक्तिविवक्षया॥सामान्येननयेनैकंपरमात्मानमामनेत्॥२२॥साकारंनिर्गताकारंनिष्कलंप
क्षरं॥निर्विकल्पंचनिःकंपंनित्यमानंदमंदिरं॥२३॥विश्वरूपमविज्ञातस्वरूपंसर्वदोदितं कृतकृत्यंशिवंशांतं
निःकलंकरणच्युतं॥२४॥निःशेषभवसंभूतक्लेशद्रुमहुताशनं॥शुद्धमत्यंतनिर्लेपंज्ञानराज्येप्रतिष्ठितं॥२५॥
विशुद्धादर्शसंक्रांतंप्रतिबिंबसमप्रभं॥ज्योतिर्मयंमहावीर्यंपरिपूर्णपुरातनं॥२६॥विशुद्धाष्टगुणोपेतंनि
र्गतामयं॥अप्रमेयंपरिछिन्नंविश्वतत्वव्यवस्थितं॥२७॥यदग्राह्यंबहिर्भावैर्ग्राह्यंचांतर्मुखैःक्षणं॥तत्स्वभा
त्मकंसाक्षात्स्वरूपंपरमात्मनः॥२८॥अणोरपिचयःसूक्ष्मोमहानाकाशतोपिच॥जगद्वंद्यःससिद्धात्मानिष्प

त्यंतनिर्वृतः॥२९॥ यस्यानुध्यानमात्रेण प्रीयंते जन्मजारुजाः॥ नान्यथा जन्मिनां सोयं जगतां प्रभुरच्युतः॥३०॥ वि
ज्ञातमपि निःशेषं यदज्ञानादपार्थकं॥ यस्मिंश्च विदिते विश्वं ज्ञातमेव न संशयः॥३१॥ यत्स्वरूपापरिज्ञानान्नात्म
तत्वे स्थितिर्भवेत्॥ यं ज्ञात्वा मुनिभिः साक्षात्प्राप्तं तस्यैव वैभवं॥३२॥ स एव नियतं ध्येयः स विज्ञेयो मुमुक्षुभिः॥
अनन्यशरणीभूय तद्गतेनांतरात्मना॥३३॥ अवाग्गोचरमव्यक्तमनंतं शब्दवर्जितं॥ अजं जन्मभ्रमातीतं नि
र्विकल्पं विचिंतयेत्॥३४॥ यद्बोधानंतभागेपि द्रव्यपर्यायसंभृतं॥ लोकालोकं स्थितिं धत्ते स स्याल्लोकत्रयी
गुरुः॥३५॥ तत्स्वरूपाहितस्वांतस्तद्गुणग्रामरंजितः॥ योजयत्यात्मनात्मानं तस्मिंस्तद्रूपसिद्धये॥३६॥ इत्यजस्रं
स्मरन्योगी तत्स्वरूपावलंबितः॥ तन्मयत्वमवाप्नोति ग्राह्यग्राहकवर्जितं॥३७॥ अनन्यशरणीभूय स तस्मि

द्वीयतेतथा॥ध्यातृध्यानोभयाभावेध्येयेनैक्यंयथाव्रजेत॥३७॥सोयंसमरसीभावस्तदेकीकरणंस्मृतं॥अ
त्वेनयत्रात्मालीयतेपरमात्मनि॥३८॥अनन्यशरणस्तद्धि तत्संलीनैकमानसः॥तद्गुणस्तत्स्वभावात्मात
स्याच्चसएवमनः॥४०॥उक्तंच॥कटस्यकर्त्ताहमितिसंबंधःस्याद्द्वयोर्द्वयोः॥ध्यानंध्येयंयदात्मैवसंबंधःक
स्तदा॥४१॥यदज्ञानाज्जन्मीभ्रमतिनियतंजन्मगहनंविदित्वायंसद्यस्त्रिदशगुरुतोयातिगुरुतां॥सविज्ञेय
मात्मासाक्षात्सकलभुवनानंदनिलयःपरंज्योतिस्त्रातापरमपुरुषोचिंत्याचरितः॥४२॥इत्थंयत्रानवच्छिन्नभाव
नाभिर्भवच्युतं॥भावयत्यनिशंध्यानीतत्सवीर्यंप्रकीर्तितं॥४३॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्ण
वेयोगप्रदीपाधिकारेसवीर्यध्यानप्रकरणम्॥३२॥अज्ञातस्वस्वरूपेणपरमात्मानबुध्यते॥आत्मैवप्राग्विनिश्चेयोवि

नपुरुषैःपरं॥१॥ किंच॥ आत्मतत्त्वानभिज्ञस्य न स्यादात्मन्यवस्थितिः॥ मुह्यत्यतः पृथक्कर्तुं स्वरूपं देहदेहिनोः॥२॥ त
योर्भेदापरिज्ञानान्नात्मलाभः प्रजायते॥ तदभावात्स्वविज्ञानसूतिः स्वप्नेऽपि दुर्घटा॥३॥ अतः प्रागेव निश्चेयः सम्य
गात्मा मुमुक्षुभिः॥ अशेषपरपर्यायकल्पनाजालवर्जितः॥४॥ तथाहि॥ त्रिःप्रकारः स भूतेषु सर्वेष्वात्मा व्यव
स्थितः॥ बहिरन्तः परश्चेति विकल्पैर्वक्ष्यमाणकैः॥५॥ आत्मबुद्धिः शरीरादौ यस्यात्मन्यात्मनिश्चयः॥ सोऽन्तरात्मा म
तस्तज्ज्ञैर्विभ्रमध्वान्तभास्करैः॥७॥ निर्लेपो निःकलः शुद्धो (सिद्ध) निःपन्नोऽत्यन्तनिर्वृतः (सौख्यमयः)॥ निर्विकल्पश्च शुद्धात्मा परमात्मे
ति वर्णितः॥८॥ कथं तर्हि पृथक्कृत्वा देहाद्यर्थकदंबकान्॥ आत्मानमभ्यसेद्योगी निर्विकल्पमतीन्द्रियं॥९॥ अपा
स्य बहिरात्मानं सुस्थिरेणान्तरात्मना॥ ध्यायेद्विशुद्धमत्यन्तं परमात्मानमव्ययं॥१०॥ तद्यथा॥ संयोजयति देहेन (सह)
॥ यस्य स्यादात्मविभ्रमात्॥ बहिरात्मा स विज्ञेयो मोहनिद्रास्तचेतनः॥६॥ त्रुटि ४॥

शरीरात् आत्मानं
चिदात्मानं विमूढधीः ॥ बहिरात्मा ततो ज्ञानी पृथक्पश्यति देहिनां ॥११॥ अक्षद्वारैरविश्रांतं स्वतत्त्वविमुखैर्भृशं
वेष्टित
तो बहिरात्मायं वपुरात्मेति मन्यते ॥१२॥ सुरं त्रिदशपर्यायैर्नृपर्यायैस्तथा नरं ॥ तिर्यंचं च तदंगे स्वं न
आत्मस्वरूप
रकं च नारकं ॥१३॥ वेत्त्यविद्यापरिश्रांतो मूढस्तन्न पुनस्तथा ॥ किंत्वमूर्तं स्वसंवेद्यं तद्रूपं परिकीर्तितं ॥१४॥ स्वशरीर
मिवान्विष्य परांगं च्युतचेतनं ॥ परमात्मानमज्ञानी परबुद्ध्याध्यवस्यति ॥१५॥ स्वात्मेतरविकल्पैस्तैः शरीरेषु वर्लि
तं प्रवृत्तैर्वंचितं विश्वमनात्मन्यात्मदर्शिभिः ॥१६॥ ततः सोऽत्यंतभिन्नेषु पशुपुत्रांगनादिषु ॥ आत्मत्वं
व्यापित आत्मत्व
दवविद्याज्वरजिह्मितः ॥१७॥ साक्षात्स्वामेव निश्चित्य पदार्थांश्चेतनेतरान् ॥ स्वस्यैव मन्यते मूढस्तन्नाशो
विषमग्रहेण
दिकं ॥१८॥ अनादिप्रभवः सोऽयमविद्याविषमग्रहः ॥ शरीरादीनि पश्यंति येन स्वमिति देहिनः ॥१९॥ ध्रुव

रचयति आत्मान

विज्ञानं वपुषां घटयत्यमूं स्वस्मिन्नात्मेति बोधस्तु जिनत्वं गाच्छरीरिणाम् ॥२०॥ वपुष्यात्ममतिः सूते बंधुवि

पुद्गलेन

त्तादिकल्पनां स्वस्य संकल्पमेतेन मन्यानं मुषितं जगत् ॥२१॥ तेन चात्मेति यो भावः स स्याद्बीजं भवस्थितेः ॥ बहिर्वि

ताक्षविक्षेपस्तत्यक्त्वांतर्विशेत्ततः ॥२२॥ अक्षद्वारैः स्वतश्च्युत्वा निमग्नो गोचरेष्वहं । तानासाद्याहमित्येतन्न

सम्यगवेदिषं ॥२३॥ बाह्यात्मानमपास्यैवमंतरात्मा ततस्त्यजेत् । प्रकाशयत्ययं योगः स्वरूपं परमेष्ठिनः ॥२४॥

यद्दृश्यमिदं रूपं तत्तदन्यन्न चान्यथा । ज्ञानवच्चव्यतीताक्षमतः केनात्र वच्म्यहं ॥२५॥ यज्जनैरपि बोध्योहं य

आत्मन

ज्जनान्बोधयाम्यहं । तद्विभ्रमपदं यस्मादहं विध्वस्तकल्पनः ॥२६॥ यः स्वमेव समादत्ते नादत्ते यः स्वतोपरं । निर्विकल्पः

स विज्ञानी स्वसंवेद्योस्मि केवलं ॥२७॥ अज्ञातसर्पमतेर्यद्वद्रज्जुः खलायां क्रियाभ्रमः ॥ तथैवमे क्रियापूर्वास्तत्वादो स्वरि

तिभ्रमात्॥२९॥रज्ज्वां यथा सर्पभ्रमो यथा वृत्तिर्विनष्टे भुजगभ्रमे। तद्वदेव मे तथा वृत्तिर्नष्टात्मविभ्रमस्यैव॥३०॥एतदे
षैषएकद्वैबहूनीतिधियःपदं॥नाहंयच्चात्मनात्मानंवेत्स्यात्मनितदस्म्यहं॥३१॥यद्बोधेमयासुप्तंयद्बोधे
ऽस्थितं॥तद्रूपमहंयमत्यक्षंस्वसंवेद्यमहंकिल॥३२॥ज्योतिर्मयंममात्मानंपश्यतोत्रैवयांत्यमी॥क्षयंरागाद
यस्तेननारिःकोपिप्रियोनमे॥३३॥अदृष्टमत्स्वरूपोयंजनोनारिर्नमेप्रियः॥साक्षात्सुदृष्टरूपोपिजनोनारिः॥
सुहृन्नमे॥३४॥इतःप्रभृतिनिःशेषंपूर्वंपूर्वंविचेष्टितं॥ममाद्यज्ञाततत्त्वस्यभातिस्वप्नेंद्रजालवत्॥३५॥यो
ःप्रसिद्धात्मापरंज्योतिःसनातनः॥सोहंतस्मात्प्रपश्यामिस्वस्मिन्नात्मानमच्युतं॥३६॥बाह्यात्मानमपित्य
प्रसन्नेचांतरात्मनि॥विधूतकल्पनाजालंपरमात्मानमामनेत्॥३७॥बंधमोक्षावुभावेतौभ्रमेतरनिबंधनौ॥ ॥१०३॥

अभ्यसेत्

धश्च परसंबंधाद्भेदाभ्यासात्ततः शिवं ॥३७॥ अलौकिकमहो वृत्तं ज्ञानिनः केन वर्ण्यते । अज्ञानी बध्यते यत्र ज्ञा
नी तत्रैव मुच्यते ॥३८॥ यज्जन्मगहने खिन्नं प्राग्जयाद् दुःखसंकुलं । तदात्मेतरयोर्नूनमभेदेनावधारणात् ॥३९॥ म (आत्मनि)
यि सत्यपि विज्ञानप्रदीपे विश्वदर्शिनि । किं निमज्जत्ययं लोको वराको जन्मकर्दमे ॥४०॥ आत्मन्येवात्मनात्मायं
स्वयमेवानुभूयते । अतोऽन्यत्रैव मां ज्ञातुं प्रयासः कार्यनिष्फलः ॥४१॥ स एवाहं स एवाहमित्यभ्यस्यन्ननारतं । (बहिरात्मा)
(भावनां) वासनां दृढयत्नेन प्राप्नोत्यात्मन्यवस्थितिम् ॥४२॥ स्याद्यद्यत्प्रीतये ज्ञस्य तत्तदेवापदास्पदं । बिभेत्ययं पुनर्य
स्मिंस्तदेवानंदमंदिरं ॥४३॥ असुसंवृत्तेंद्रियग्रामे प्रसन्ने चांतरात्मनि । क्षणं स्फुरति यत्तत्त्वं तद्रूपं परमेष्ठिनः ॥४४॥ य
सिद्धात्मा परः सोऽहं योऽहं स परमेश्वरः । मदन्यो न मयोपास्यो मदन्येन तु नाप्यहं ॥४५॥ आक्रष्य गोचरे व्याघ्रमुख

दात्मानमात्मना॥स्वस्मिन्नहंस्थिरीभूतश्चिदानंदमयेस्वयं॥४६॥पृथगिच्छंनमांवेत्तियस्तनोर्वीतविभ्रमः॥
कुर्वन्नपितपस्तीव्रंनसमुच्येतबंधनैः॥४७॥स्वपरांतरविज्ञानसुधास्पंदाभिनंदितः॥खिद्यतेनतपःकुर्वन्नपि
क्लेशैःशरीरजैः॥४८॥रागादिमलविश्लेषाद्यस्यचित्तंसुनिर्मलं॥सम्यक्स्वंसहिजानातिनान्यःकेनापिहेतु
ना॥४९॥निर्विकल्पंमनस्तत्वंनविकल्पैरभिद्रुतं॥निर्विकल्पमतःकार्यंसम्यक्तत्वप्रसिद्धये॥५०॥अज्ञानविद्धु
तःस्वतत्वाद्यप्रवर्त्तते॥विज्ञानवासितस्तंतद्विपश्यत्यंततःपरंप्रभुं॥५१॥मुनेर्यदिमनोमोहाद्रागाद्यैरभिभूयते॥
तन्नियोज्यात्मनस्तत्वेतानेवक्षिपतिक्षणात्॥५२॥यत्रांज्ञात्मारतःकायेतस्माद्व्यावर्तितोधिया॥चिदानं
येरूपेयोजितःप्रीतिमुत्सृजेत्॥५३॥स्वविभ्रमोद्भवंदुःखंस्वज्ञानेनैवहीयते॥तपसापिनतच्छेद्यमात्मवि

ज्ञानवर्ज्जितैः ॥४१॥ रूपायुर्बलविज्ञानादिसंपत्तिं स्वस्य वांछति । बहिरात्माथ विज्ञानी मोक्षात्तेभ्योपि विच्युतिं ॥४

२॥ कृत्वाहंमतिमन्यत्र बध्नाति स्वं स्वतश्च्युतः । आत्मन्यात्ममतिं कृत्वान्यस्माज्ज्ञानी विमुच्यते ॥४३॥ आत्मानं

वे ऽयं विज्ञानी त्रिलिंगी संगतं वपुः ॥४४॥ सम्यग्वेदी पुनस्तत्वं लिंगसंगविवर्जितं । समभ्यस्तं सुविज्ञानं निर्व्वृ

तमपि तत्ववतः । अनादिविभ्रमात्तत्वं प्रस्खलत्यैव योगिनः ॥४५॥ अचिद्दृश्यमिदं रूपं न चिद्दृश्यं ततो वृथा । म

न्ये रागादयोर्थेषु स्वरूपं संश्रयाम्यतः ॥४६॥ करोत्यज्ञो ग्रहत्यागौ बहिरंतस्तु तत्ववित् । शुद्धात्मा न बहिर्नांत

स्तौ विदध्यात्कथंचन ॥४७॥ वाक्कायाभ्यां पृथक्कृत्वा मनसात्मानमभ्यसेत् । वाक्तनुभ्यां प्रकुर्वीत कार्यमन्य

न्नचेतसा ॥४८॥ विश्वासानंदयोः स्थानं स्यात् जगद्ज्ञचेतसा । क्वानंदः क्व च विश्वासः स्वस्मिन्नेवात्मवेदिनां ॥४९॥

स्वबोधादपरं किंचिन्न स्वांते विभृयात्क्षणं॥ कुर्यात्कार्यवशात्किंचिद्वाक्कायाभ्यामनादृतः॥९३॥ यदक्षविषयं रूपं
मद्रूपात्तद्विलक्षणम्॥ आनंदनिर्भरं रूपमंतर्ज्योतिर्मयं मम॥९४॥ अंतर्दुःखं बहिःसौख्यं योगाभ्यासोद्यतात्म
सुप्रतिष्ठितयोगानां विपर्यस्तमिदं पुनः॥९५॥ तद्विज्ञेयं तदाख्येयं तच्छ्रव्यं चिंत्यमेव वा॥ येन भ्रांतिमपास्योच्चै
स्यादात्मन्यात्मनः स्थितिः॥९६॥ विषयेषु न तत्किंचित्स्याद्धितं यच्छरीरिणां॥ तथाप्येष्वेव कुर्वंति प्रीतिमज्ञा
अकथित अभिकृत्य विफल
नयोगिनः॥९७॥ अनाख्यातमिवाख्यातमपि न प्रतिपद्यते॥ आत्मानं जडधीस्तेन वंध्यस्तत्र ममोद्यमः॥९८॥ त
वृथा
हं यन्मया किंचित्प्रज्ञापयितुमिष्यते॥ योहं न स परग्राह्यस्तन्मुधा बोधनोद्यमः॥९९॥ निरुद्धज्योतिरज्ञो
स्वतोन्यत्रैव तुष्यति॥ तुष्यत्यात्मनि विज्ञानी बहिर्विगतविभ्रमः॥१००॥ यावदात्मेच्छया देहे वाक्चित्तवपुषां

जन्मतावदमीषां तु भेदज्ञानाद्भवच्युतिः॥७१॥ जीर्णे रक्ते घने ध्वस्ते नात्मा जीर्णादिकः पुमान्॥ एवं वपुषि जीर्णादौ नात्मा

(पर्वतसम) (भाग ते)

जीर्णादिकस्तथा॥७२॥ चलमप्यचलप्रख्यं जगद्यस्यावभासते॥ ज्ञानयोगक्रियाहीनं स एव स्कंदति शिवं

(औदारिक मिश्र कार्माण आत्मा) (कुतः)

(आच्छादित) ॥७३॥ तनुत्रयावृतो देही ज्योतिर्मयवपुः स्वयं। न वेत्ति यावदात्मानं कुतस्तावद्बंधविच्युतिः॥७४॥ गलन्मिलदणुव्र (परमाणुसमूह)

(रचना विशेषं)

तसन्निवेशात्मकं वपुः। वेत्ति मूढस्तदात्मानमनाद्युत्पन्नविभ्रमात्॥७५॥ मुक्तिरेव मुनेस्तस्य यस्यात्मन्य

चला स्थितिः। न तस्यास्ति ध्रुवं मुक्तिर्न यस्यात्मन्यवस्थितिः॥७६॥ दृढः स्थूलः स्थिरो दीर्घो जीर्णः शीर्णो लघु

(असंयोजयत् = जानीयात्)

र्गुरुः। वपुषैवमसंबध्नन् स्वं विंद्याद्वेदनात्मकं॥७७॥ जनसंसर्गवाक्चित्तपरिस्पंदमनोभ्रमाः। उत्तरोत्तरबीजा

नि ज्ञानी जनस्ततस्त्यजेत्॥७८॥ नगग्रामादिषु स्वस्य निवासं वेत्त्यनात्मवित्॥ सर्वावस्थासु विज्ञानी स्वस्मि

वृतावृते संयमात्

निबंधने। तदभावात्पुनर्मोक्षो मुमुक्षुस्तत्ततस्त्यजेत् ॥८७॥ प्रागसंयममुत्सृज्य संयमैकतरो भवेत् । ततोऽपि
विरमेत्प्राप्य सम्यगात्मव्यवस्थितिम् ॥८८॥ जातिलिंगमिति द्वंद्वमंगमासाद्य वर्तते । अंगात्मकश्च संसारस्तस्मा
(जातिलिंग) त्तद्वृतं त्यजेत् ॥८९॥ (अज्ञानी) अभेदविद्यथा पंगोर्वेत्ति चक्षुस्तचक्षुषि । अंगेऽपि च तथा वेत्ति संयोगाद्दृष्यमात्मनः ॥९०॥
(ज्ञानी) भेदविन्नयथा वेत्ति पंगोश्चक्षुस्तचक्षुषि । ज्ञातात्मानं तथा वेत्ति तं कायेद्दृष्यमात्मनः ॥९१॥ मत्तोन्मत्तादिचेष्टा
सु यथाज्ञस्य स्वविभ्रमः । तथा सर्वास्ववस्थासु न कश्चित्तत्त्वदर्शिनः ॥९२॥ (अज्ञानी) देहात्मदृष्टिर्मुच्येत चेज्जागर्ति पठत्यपि
स्वप्नोन्मत्तोऽपि मुच्येत स्वस्मिन्नुत्पन्ननिश्चयः ॥९३॥ आत्मानं सिद्धमाराध्य प्राप्नोत्यात्मापि सिद्धतां । वर्तिः प्रदी
पमासाद्य यथाभ्येति प्रदीपतां ॥९४॥ आराध्यात्मानमेवात्मा परमात्मत्वमश्नुते । यथा भवति वृक्षः स्वं स्वेनो
प्राप्यते

वंजानिहि

रिकलयविशुद्धंस्वात्मनात्मानमेव॥४॥इतिसाधारणंध्येयंध्यानयोर्धर्मशुक्लयोः॥विशुद्धिस्वामिभेदेनभेदः

सूत्रेनिरूपितः॥१०५॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेशुद्धोपचारयोगप्रकर

मिथ्याग्रहात्

णम्॥छ॥अनादिविभ्रमान्मोहादभ्यासादसद्ग्रहात्॥ज्ञातमप्यात्मनस्तत्वंप्रचलत्येवयोगिनः॥१॥अवि

आग्रह व्याप्त

द्यावासनावेशाद्विशेषविवशात्मना॥योज्यमानमपिस्वस्मिन्नचेतःकुरुतेरतिं॥२॥साक्षात्कर्तुमतःक्षिप्रंवि

वस्तुस्वरूपे परमात्मानं

श्वतत्वंयथास्थितं॥विशुद्धिंचात्मनःशश्वद्वस्तुधर्मेस्थिरीभवेत्॥३॥अलक्ष्यंलक्ष्यसंबंधात्स्थूलात्सू

क्ष्मंविचिंतयेत्॥सालंबाच्चनिरालंबंतत्वविन्नत्वमंजसा॥४॥आज्ञापायविपाकानांक्रमशःसंस्थितेस्तथा

विचार

विचयोयःपृथक्तद्धिधर्मध्यानंचतुर्विधं॥५॥वस्तुतत्वंस्वसिद्धांतप्रसिद्धंयत्रचिंतयेत्॥सर्वज्ञाज्ञाभियोगेनत

१वस्तुतत्वं — उत्पादव्ययध्रौव्यस्वभावं

अवलोकयेत्

दाज्ञाविचयोमतः॥६॥अनंतगुणपर्यायसंयुतंतत्त्रयात्मकं॥त्रिकालविषयंसाक्षाज्जिनाज्ञासिद्धमामनेत्॥७॥त
च॥सूक्ष्मंजिनेंद्रवचनंहेतुभिर्यन्नहन्यते॥आज्ञासिद्धंचतद्ग्राह्यंनान्यथावादिनोजिनाः॥८॥इति॥प्रमाणनयनि
क्षेपैर्निर्णीतंतत्वमंजसा॥स्थित्युत्पत्तिव्ययोपेतंचिदचिल्लक्षणंस्मरेत्॥९॥श्रीमत्सर्वज्ञदेवोक्तंश्रुतज्ञानंचनिर्म्म

अविनश्वरं

लं॥शब्दार्थनिचितंतत्वमत्रचिंत्यमविप्लुतं॥१०॥श्रुतज्ञानंतद्यथा॥परिस्फुरतियत्रैतद्विश्वविद्याकदंबकं॥द्रव्यभा
वनिदानत्वद्विशब्दार्थज्योतिरग्रिमं॥११॥अपारमतिगंभीरंपुण्यतीर्थंपुरातनं॥पूर्वापरविरोधादिकलंकपरिवर्जितं
१२॥नयोपनयसंपातगहनंगणिभिःस्तुतं॥विचित्रमतिचित्रार्थसंकीर्णंविश्वलोचनं॥१३॥अनेकपदविन्यासैः

विस्तरितं — रचितं

प्रकीर्णकैःप्रसृतंतद्विभात्युच्चैःरत्नाकरइवापरं॥धीमदमत्तोद्धतक्षुद्रशासनाशीविषांतकं॥दुरंतघन

सूर्यमंडलं १श्रुतज्ञानं १श्रुतज्ञानेन

मिथ्यात्वध्वांतघर्मांशुमंडलं ॥१५॥ यत्पवित्रं जगत्यस्मिन्विशुध्यति जगत्त्रयी ॥ येन तद्विमतां सेव्यं श्रुतज्ञानं चतु
र्विधं ॥१६॥ स्थित्युत्पत्तिव्ययोपेतं तृतीयं योगिलोचनं ॥ नयद्वयसमावेशात् सादनादिव्यवस्थितं ॥१७॥ अनिःशेषनय
वज्र पर्वत
निक्षेपनिकषग्रावसन्निभं ॥ स्याद्वादपविनिर्घातभग्नान्यमतभूधरं ॥१८॥ इत्यादिगुणसंदर्भनिर्भरं भव्यशुद्धिदं ॥ ध्ये
यं तु धीमतां श्रेष्ठाः श्रुतज्ञानमहार्णवं ॥१९॥ अथ जन्मज्वरघातकं त्रिभुवनाधीशैर्यदभ्यर्चितं यत्स्याद्वादमहाध्वजं न
यप्रताकीर्णं च यत्पमतेः ॥ उत्पादस्थितिभंगलांछनयुता यस्मिन्पदार्थाः स्थितास्तच्छ्रीवीरमुखारविंदगदितं दद्या
युष्माकं च्छ्रुतं वः श्रियं ॥२०॥ वाग्देव्याः कुलमंदिरं बुधजनानंदैकचंद्रोदयं मुक्तेर्मंगलमग्रिमं शिवपथप्रस्थानदिव्यानकं
तत्वश्रून्यस्पिनपरमृगा सिंह
तत्त्वाभासकुरंगपंचवदनं भव्यान्विनेतुं क्षमं तच्छ्रोत्रांजलिभिः पिबंतु गुणिनः सिद्धांतवार्द्धेः पयः ॥२१॥ ये नैते निपत

सर्वज्ञाज्ञां पुरस्कृत्य सम्य. र्थान् विचिंतयेत् ॥ यत्र तद्ध्यानमाम्नातं आज्ञाख्यं योगिपुंगवैः ॥२३॥



वादिगिरयस्तुष्यंति योगीश्वरा भव्या येन विदंति निर्वृत्तिपदं मुंचंति मोहं बुधाः ॥ यद्बंधुर्यमिनां यदक्षयसुखस्या
धारभूतं नृणां तल्लोकद्वयशुद्धिदं जिनवचः पुष्याद्विवेकश्रियं ॥२२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे यो
गप्रदीपाधिकारे आज्ञाविचयप्रकरणं ॥छ॥ अपायविचयं ध्यानं तद्वदंति मनीषिणः ॥ अपायः कर्मणां यत्र सोपा
यः स्मर्यते बुधैः ॥१॥ तद्यथा ॥ श्रीमत्सर्वज्ञनिर्दिष्टं मार्गं रत्नत्रयात्मकं ॥ अनासाद्य भवारण्ये चिरं नष्टाः शरीरिणः ॥२॥
मज्जनोन्मज्जनं प्राप्ता व्रजंति भवसागरे ॥ वराकाः प्राणिनो प्राप्य यानपात्रं जिनेश्वरं ॥३॥ महाव्यसनसप्तार्चिःप्रदीप्ते
न्मकानने ॥ भ्रमताद्य मया प्राप्तं सम्यग्ज्ञानांबुधेस्तटं ॥४॥ अद्यापि यदि निर्वेदविवेकाग्रेंद्रमस्तकात् ॥ स्खले
वं जन्मांधः कूपपाते निवारितः ॥५॥ अनादिभ्रमसंभूतं कथं निर्वार्यते मया मिथ्यात्वाविरतिप्रायं कर्मबंधनिबं

घनानंदि सोहं सुद्धः प्रसिद्धात्मा दृग्बोधविमलेक्षण ॥ जन्मपंके चिरं खिन्नः खंडमानः स्वकर्मणा ॥ एकतः कार्मणं
सैन्यमहमेकस्ततोन्यतः स्थातव्यमप्रमत्तेन मयास्मिन्नरिसंकटे ॥ निर्द्धूय कर्मसंघातं प्रबलध्यानवह्निना ॥
कदा स्वं प्रोधयिष्यामि धातुस्थमिव कांचनं ॥ किमुपेयो ममात्मायं किं वा विज्ञानदर्शने ॥ चरणं चापवर्गाय त्रि
भिः सार्द्धमथवा ॥ १० ॥ कोहं ममाश्रवः कस्मात्कथं बंधः क्व निर्जरा ॥ का मुक्तिः किं विमुक्तस्य स्वरूपं च निगद्यते ॥ ११ ॥
जन्मनः प्रतिपक्षस्य मोक्षस्यात्यंतिकं सुखं ॥ अव्याबाधं स्वभावोत्थं केनोपायेन लभ्यते ॥ १२ ॥ मय्येव विदिते साक्षा
द्विज्ञातं भुवनत्रयं ॥ यतोहमेव सर्वज्ञः सर्वदर्शी निरंजनः ॥ १३ ॥ उक्तं च ॥ एको भावः सर्वभावस्वभावः सर्वे भावा ए
कभावस्वभावाः ॥ एको भावस्तत्वतो येन बुद्धः सर्वे भावास्तत्वतस्तेन बुद्धाः ॥ १४ ॥ यावद्यावच्च संबंधो मम स्याद्बाह्यवस्तु

आत्मानं (margin, line 3)
आत्मा (margin, line 4)
आत्मा (above line 6)
पदार्था (above line 6)
एकस्मिन्नात्मनि प्रतिबिंबिता.

न्निः॥ तावत्तावत्सदा स्वस्मिन्स्थितिः स्वप्नेपि दुर्घटा ॥१५॥ तथैवैतेनुभूयंते पदार्थाः सूत्रसूचिताः ॥ अतो मार्गेत्र ल
ग्नोहं प्राप्तो एव शिवास्पदं ॥१६॥ इत्युपायो विनिश्चेयो मार्गच्यवनलक्षणः ॥ कर्मणां च यथापायस्तूपायश्चात्मसि
॥१७॥ इति नयशतलीलालंबि निर्धूतदोषं च्युतसकलकलंकैः कीर्तितं ध्यानमेतत् ॥ अविरतमनुपूर्वं ध्या
प्रमादं स्फुरति हृदि विशुद्ध ज्ञानभास्वत्प्रकाशं ॥१८॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपा
अपायविचयप्रकरणम् ॥ छ ॥ स विपाक इति ज्ञेयो यः स्वकर्मफलोदयः ॥ प्रतिक्षणसमुद्भूतश्चित्ररूपः शरीरिणां ॥
१॥ कर्मजातं फलं दत्ते विचित्रमिह देहिनां ॥ आसाद्य नियतं नाम द्रव्यादिकचतुष्टयं ॥२॥ तद्यथा ॥ स्रक्शय्यासन
यानवस्त्रवनितावादित्रमित्रांगजात्कर्पूरागुरुचंद्रचंदनवनक्रीडाद्रिसौधध्वजान् ॥ मातंगांश्च

पदार्थमया
रत्नत्रये
सूर्य
अनवरत
चतुर्थगुणस्थादि
द्रव्यक्षेत्रकालभाव

(प्राप्य)

भक्षान्नपानानिवांछत्रादीन्युपगम्यवस्तुनिचयान्सौख्यंश्रयंतेंगिनः॥३॥क्षेत्राणिरमणीयानिसर्वर्त्तुसुखदानिच

(भाला खड्ग छुरा गज)

कामभोगास्पदान्युच्चैःप्राप्यसौख्यंनिषेव्यते॥४॥प्रासासिक्षुरयंत्रपन्नगगरव्यालानलोग्रग्रहान्श्रीणींगकृमि

(कीच पाषाण बंदिग्रहान बेडी किलक)

कीटकंटकरजःक्षारास्थिपंकोपलान्॥कारागृहंखलपुंकुकांडनिगडक्रूरारिवैरांस्तथाव्याप्याप्युभजंतिदुः

खमखिलंजीवाभवाब्धिस्थिताः॥५॥निसर्गात्तिरौद्राणिभयक्लेशास्पदानिच॥दुःखमेवांगिनांत्युच्चैःक्षेत्राण्यासा

द्यजंतवः॥६॥अरिष्टोत्पातनिर्मुक्तोवातवर्षातिवर्जितः॥शीतोष्मरहितःकालःस्यात्सुखायशरीरिणां॥७॥वर्षातप

(कपण)

तुषाराद्युत्पादादिसंकुलः॥कालःसदेवसत्वानांदुःखानलनिबंधनः॥८॥प्रशमादिसमुद्भूतोभावःसौख्यायदे

हिनां॥कर्मगौरवजःसोयंमहाव्यसनमंदिरः॥९॥मूलप्रकृतयस्तत्रकर्मणामष्टकीर्तिताः॥ज्ञानावरणपूर्वास्ताज

न्मिनांबंधहेतवः।।१०।।ज्ञानर्वृत्तिकरंकर्मपंचभेदंप्रपंचितं।।निरुद्धंयेनजीवानांमतिज्ञानादिपंचकं।।११।।
कर्मदृगावरणासंज्ञकं।।रुध्यतेयेनजंतूनांशश्वदिष्टार्थदर्शनं।।१२।।वेदनीयंविदुःप्राज्ञाद्विधाकर्मशरीरिणाम्।य
न्मधूच्छिष्टलिप्तशस्त्रधारासमप्रभं।।असुरोरगनराधीशसेवितंश्रूयतेसुखं।।सातोदयवशात्प्राणीसंक
रोद्भवं।।१४।।असद्वेद्योदयाज्जीवंशरीरंमानसंद्विधा।।जीवैर्विषह्यतेदुःखंश्वभ्रश्वभ्रादिभूमिषु।।१५।।दृष्टिमोहप्रकोपे
नदृष्टिःसाध्वीविलुप्यते।।तद्विलोपान्निमज्जंतिप्राणिनःश्वभ्रसागरे।।१६।।चारित्रमोहपाकेनरागिभिःप्राप्यतेक्षणं।।
भावशुद्धात्मसात्कर्तुंचरणंस्वांतशुद्धिदं।।लब्ध्वापियत्प्रमाद्यंतियत्सवलंत्यथसंयमात्।।सोपिचारित्रमोहस्य
कःपरिकीर्तितः।।१७।।सुरायुरादिककर्मपाकात्संभूयनाकेप्रथितप्रभावैः।।समर्थ्यतेदेहिभिरायुरग्र्यंसुखामृता

दनलोलचित्तैः॥१९॥नरायुषःकर्मविपाकयोगान्नरत्वमासाद्यशरीरभाजः॥सुखासुखाक्रांतधियोनितांतंनयंतिकाल
बहुभिःप्रपंचैः॥२०॥चरस्थिरविकल्पासुतिर्यग्गतिषुजंतुभिः॥तिर्यगायुःप्रकोपेनदुःखमेवानुभूयते॥२१॥नरका
युःप्रकोपेननरकेचिंत्यवेदने॥निपतंत्यंगिनस्तूर्णं(शीघ्र)कृतार्तकरुणस्वराः॥२२॥नामकर्मोदयःसाक्षाद्धत्तेचित्राण्य
नेकधा॥नामानिगतिजात्यादिविकल्पानीहदेहिनां॥२३॥गोत्राख्यंजंतुजातस्यकर्मदत्तेस्वकंफलं॥शस्ताश
(अंतरायके)स्तेषुगोत्रेषुजन्मनिःपाद्यसर्वथा॥२४॥निरुणद्धिस्वसामर्थ्याद्दानलाभादिपंचकं॥विघ्नसंततिविन्यासैर्विघ्नकृ
त्कर्मदेहिनां॥२५॥मंदवीर्याणिजायंतेकर्माण्यतिबलीन्यपि॥अपक्वपाचनायोगात्फलानीववनस्पतेः॥२६॥अ
पक्वपाकःक्रियतेऽस्ततंद्रैस्तपोभिरुग्रैर्वरशुद्धियुक्तैः॥क्रमाद्गुणश्रेणिसमाश्रयेणसुसंवृतांतःकरणैर्मुनींद्रैः॥२७॥

शुक्लध्यानेन

ऽव्याप्युत्कृष्टसामग्रीमासाद्योग्रतपोबलात्॥ कर्माणि घातयत्युच्चैस्तुर्यध्यानेन योगिनः॥२८॥ विलीनाशेषक

आत्मान

र्माणं स्फुरंतमतिनिर्मलं॥ स्वं ततः पुरुषाकारं स्वांगगर्भगतं स्मरेत्॥२९॥ इति विविधविकल्पं कर्म चित्रस्वरूपं प्रति

पापवन

समयमुदीर्णं जन्मवत्यंगभाजां॥ स्थिरचरविषयाणां भावयन्नस्ततंद्रो दहति दुरितकक्षं संयमी शांतमोहः॥

३०॥ इत्थं कर्मकटुप्रपाककलिता संसारघोरार्णवे जीवा दुर्गतिदुःखवाडवशिखासंतानसंतापिता॥ मृ

पवने प्रेरिता

महोर्मिजालनिचिता मिथ्यात्ववातेरिताः॥ क्लिश्यंते तदिदं स्मरंतु नियतं धन्याः स्वसिद्ध्यर्थिनः॥३१॥ दू

र्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे विपाकविचयप्रकरणं॥३४॥ अनंतानंतमाकाशं सर्व

स्वभावे स्थितं

सुप्रतिष्ठितं॥ तन्मध्येयं स्थितो लोकः श्रीमत्सर्वज्ञवर्णितः॥१॥ स्थित्युत्पत्तिव्ययोपेतैः पदार्थैश्चेतनेतरैः॥ सं

नादिमं सिद्धं कर्तृव्यापारवर्जितं॥ऊर्ध्वाधोमध्यभागैर्यैर्विभर्ति भुवनत्रयं॥अतः स एव सूत्रज्ञैस्त्रैलोक्याधार
इष्यते॥३॥५॥पर्युपरि संक्रांतैः सर्वतोपि निरंतरैः॥त्रिभिर्वायुभिराकीर्णो महावेगैर्महाबलैः॥६॥घनाब्धिः प्रथ
मस्तेषां ततोन्यो घनमारुतः॥तनुवातस्तृतीयोंते विज्ञेया वायवः क्रमात्॥७॥उद्धृत्य सकलं लोकं स्वशक्त्यै
व व्यवस्थिताः॥पर्यंतरहिते व्योम्नि मरुतः प्रांशुविग्रहाः॥८॥घनाब्धिवलये लोकस्तच्च नाते व्यवस्थितः॥तनुवात
तरेसोपि संचाकाशे स्वयं स्थितिः॥९॥अधो वेत्रासनाकारो मध्ये स्यात् झल्लरीनिभः॥मृदंगसदृशश्चाग्रे स त्रि
धेति व्यवस्थितः॥१०॥अस्य प्रमाणमुन्नत्या सप्तसप्त च रज्जवः॥सप्तैकापंचैकाश्च मूलमध्यांतविस्तरे॥११॥तत्राधो
भागमासाद्य संस्थिताः सप्त भूमयः॥यासु नारकषंढानां निवासाः संति भीषणाः॥१२॥काश्चिद्दुर्जानलप्रख्याः का

श्विच्छीतोष्मसंकुलाः॥तुषारबहुलाः काश्चिद्भूमयोऽत्यंतभीतिदाः॥११॥उदीर्णानलदीप्तासु निमग्नोष्मासु भू
मिषु॥मेरुमात्रोऽप्ययःपिंडः क्षिप्तः सद्यो विलीयते॥१२॥शीतभूमिषु पिंडःप्राप्तो मेरुमात्रोऽपि विशीर्यते॥शतधा स
वयःपिंडः प्राप्य भूमिं क्षणांतरे॥१३॥हिंसास्तेयानृताब्रह्मबह्वारंभादिपातकैः॥विशंति नरकं घोरं प्राणिनो
निर्दयाः॥१४॥मिथ्यात्वाविरतिक्रोधरौद्रध्यानपरायणाः॥पतंति जंतवः श्वभ्रे कृष्णलेश्यावशंगताः॥१५॥
सिपत्रवनाकीर्णे शूलासिसंकुले॥नरकेऽत्यंतदुर्गंधे वसासृक्कृमिकर्दमे॥१६॥शिवाश्वव्या
मांसाशिविहगाचिते वज्रकंटकसंकीर्णे शूलशाल्मलिदुर्गमे॥१७॥संभूय कुंभिकामध्ये ऊर्ध्वपादाव
धोमुखाः॥ततः पतंति साक्रंदं वज्रज्वलनभूतले॥१८॥अयःकंटककीर्णासु स्फुटल्लोहाग्निवीथिषु॥छिन्नानि

सामस्तेन

विशीर्णांगा उत्पतंति पतंति च ॥१९॥ दुःसहा निःप्रतीकारा ये रोगाः संति केचन ॥ साकल्येनैव गात्रेषु नारका
णां भवंति ते ॥२०॥ अदृष्टपूर्वमालोक्य तस्य रौद्रं भयास्पदं ॥ दिशः सर्वाः समीक्षंते वराकाः शरणार्थिनः ॥२१॥
शरीरा.
न तत्र सुजनः कोपि न मित्रं न च बांधवाः ॥ सर्वे ते निर्दयाः पापाः क्रूरा भीमोग्रविग्रहाः ॥२२॥ सर्वे च कुंडसंस्थान
शब्दे.
स्फुलिंगसदृशेक्षणाः ॥ विवर्द्धिताशुभध्यानाः प्रचंडाश्चंडशासनाः ॥२३॥ तत्राक्रंदरवैः सार्द्धं श्रूयते कर्कश
स्वनाः ॥ दृश्यंते गृध्रगोमायुसर्प्पशार्दूलमंडलाः ॥२४॥ घ्रायंते पूतयो गंधाः स्पृश्यंते वज्रकंटकाः ॥ जलानि
पूतिगंधीनि नद्यो स्रङ्मांसकर्दमाः ॥२५॥ चिंतयंति तदा लोकपरोऽत्यंतशंकिताः ॥ केयं भूमिः क्व चानीताः के
वयं केन कर्मणा ॥२६॥ ततो विदुर्विभंगात्त्वं पतितं श्वभ्रसागरे ॥ कर्मणात्यंतरौद्रेण हिंसाद्यारंभजन्मना ॥२७॥

ततः प्रादुर्भवत्युच्चैः पश्चात्तापोऽतिदुःसहः। दहन्नविरतं चेतो वज्राग्निरिव निर्दयः ॥२८॥ मनुष्यत्वं समासाद्य
कैश्चिन्महात्मभिः। अपवर्गाय संविग्नैः कर्म पूज्यमनुष्ठितं ॥२९॥ विषयाशामपाकृत्य विध्याप्य दहनानलं
सावधानै आचरित
प्रमत्तैस्तपश्चीर्णं धन्यैर्जन्मार्तिशांतये ॥३०॥ उपसर्गाग्निपातेऽपि धैर्यमालंब्य चोन्नतं। तैः कृतं तदनुष्ठानं ये
सिद्धं समीहितं ॥३१॥ प्रमादमदमुत्सृज्य भावशुद्ध्या मनीषिभिः। केनाप्यचिंत्यवृत्तेन स्वर्गमोक्षश्च साधितः
पू अवगणिताः =
शिवाभ्युदयदं मार्गं दिशंतोऽप्यतिवत्सलाः। मयावधीरिताः संतो निर्भर्त्स्य कटुकाक्षरैः ॥३२॥ आतस्मिन्नपि
ष्यत्वे परलोकैककशुद्धिदे। मयात्तं संचितं कर्म यज्ज्ञातं श्वभ्रसंबलं ॥३३॥ अविद्याक्रांतचित्तेन विषयांधीकृता
ना। चरस्थिरांगिसंघातो निर्दोषोऽपि हतो मया ॥३४॥ परवित्तामिषासक्तः परस्त्रीसंगलालसः। बकुव्यसनवि

२ नरकसामग्री

कारणाय = प्राय
प्रेतस्य = शोधनं दंडं

स्तो रौद्रध्यानपरायणः॥३६॥ यत्स्थितः प्राक्चिरं कालं तस्यैतत्फलमागतं। अनंतयातनासारे दुरंते श्वभ्रसाग
रे॥३७॥ यन्मया वंचितो लोको वराको मूढमानसः। उपायैर्बहुभिर्निंद्यैः स्वाक्षसंतर्पणार्थिना॥३८॥ कृतः पर
भवो येषां धनभूस्त्रीकृते मया। घाताश्च ते त्र संप्राप्ताः कर्तुं तस्याद्य निःक्रयं॥३९॥ ये तदा शशकप्राया मया बल ²मनुष्यभवे
वता हताः। ते त्र जाता मृगेंद्राभा हंतुं मां विविधैर्वधैः॥४०॥ मनुष्येपि स्वतंत्रेण यत्कृतं नात्मनो हितं। तदद्य किं क
रिष्यामि दैवपौरुषवर्जितः॥४१॥ मदांधेनातिपापेन निस्त्रिंशेनास्तबुद्धिना। विराध्याराध्यसंतानं कृतं कर्मा
ति निंदितं॥४२॥ यत्पुरग्रामविंध्येषु मयाक्षिप्तो हुताशनः। जलस्थलबिलौकाःप्रचारिणो जंतवो हताः॥४३॥ अर्जं
तं ति मम मर्माणि स्मर्यमाणान्यनारतं। प्राचीनान्यद्य कर्माणि क्रकचानीव निर्दयं॥४४॥ किं करोमि क्व गच्छामि

(interlinear glosses: आत्माधीनेन — हितं — निर्दयेन)

१पूर्वोपार्जितानी = करवतानीव

२ सागरोपमै

कर्मजाते पुरस्थिते। शरणं किं प्रपद्यामि वराको दैववंचितः॥४५॥ यन्निमेषमपि द्रष्टुं स्मर्तुं श्रोतुं न शक्यते। तद्दु
:खमत्र सोढव्यं वार्द्धिमानैः कथं मया॥४६॥ एतान्यदृष्टपूर्वाणि बिलानि च कुलानि च। यातनाश्च महाघोरा नारका
अवलोकिताः कर्मणा
णां मयेक्षिता॥४७॥ विषज्वलनसंकीर्णं वर्द्धमानं प्रतिक्षणं। मम मूर्द्ध्नि विनिक्षिप्तं दुःखं दैवेन निर्दयं॥४८॥ न ह्यु
निमित्ते
पतैत्र ते भृत्या न पुत्राः न च बांधवाः। येषां कृते मया कर्म कृतं स्वस्यैव घातकं॥४९॥ न कलत्राणि मित्राणि न पा
निर्दूय = निर्दय
पे प्रेरको जनः। पदमप्येकमायातो मया सार्द्धं गतत्रपः॥५०॥ आश्रयंति यथा वृक्षं फलितं पत्रिणः पुरा। फलापा
ये पुनर्यांति तथा ते स्वजना गताः॥५१॥ शुभाशुभानि कर्माणि यांत्येव सह देहिनि। स्वार्जितानीति यत्प्रोचुः संत ६ कथयन्तिस्म
धर्म
स्तत्सत्यतां गतं॥५२॥ धर्म एव समुद्धर्तुं शक्तोऽस्माच्छ्वभ्रसागरात्। न स स्वप्नेऽपि पापेन मया सम्यक् पुरार्जितः॥५३॥ स

हा यः को ऽपि कस्यापि नाभून्न च भविष्यति ॥ सुखैकं प्राकृतं कर्म सर्वसत्वाभिनंदकं ॥५४॥ तत्कुर्वंत्यधमाः कर्मजिह्वो
पस्थादिदंडिताः ॥ येन श्वभ्रेषु पच्यंते कृतार्तिकरुणास्वनाः ॥५५॥ च सुरूं निमेषमात्रस्य सुखस्यार्थे कृतं मया ॥ तत्पा
पं येन संपन्ना अनंता दुःखराशयः ॥५६॥ घातिमाद्धे ततः पाति करोति नियतं हितं ॥ हंति दुःखं सुखं दत्ते यः स बंधुर्नि
पोषितः ॥५७॥ परिग्रहमहाग्राहसंग्रस्तेनार्तचेतसा ॥ न दृष्टा यमशार्दूलचपेटा जीवनाशिनी ॥५८॥ पातयित्वा म
हाघोरे मां श्वभ्रे चिंत्यवेदने ॥ क्व गतास्ते ऽधुना पापा मद्वित्तफलभोजिनः ॥५९॥ इत्यजस्रं सुदुःखार्त्ता विलापमुखरा
नना ॥ शोचंतः पापकर्माणि वसंति नरकालये ॥६०॥ यावंति संति लोमानि शरीरे देहधारिणः ॥ तावंतो नरके कल
वसंति पिशिताशनाः ॥६१॥ इति चिंतानलेनोच्चैर्दह्यमानस्य ते तदा ॥ धावंति शरशूलासिकराः क्रोधाग्निदीपिताः ॥६२॥

७ नारकाः

१३ दीरयित्वा = पूर्ववैरं

२ मुशिषु = गात्र यति

वैरं पराभवं पापं स्मारयित्वा पुरातनं ॥ निर्भर्त्स्य कटुकालापैः पीडयंत्यतिनिर्दयं ॥९३॥ उत्पाटयंति ने-
त्रे अस्थिसंचयं दारयंत्युदरं क्रुद्धाः स्फोटयंत्यंत्रमालिकां ॥९४॥ निःपीडयंति यंत्रेषु दलंति विषमोपलैः ॥ ष्पाल्म-
निघर्षंति कुंभीषु क्वाथयंति च ॥९५॥ असह्यदुःखसंतानदानदक्षाः कलिप्रियाः ॥ तीक्ष्णदंष्ट्राकरालास्याभि-
न्नसमप्रभाः ॥९६॥ क्षमलेश्योद्धताः पापा रौद्रध्यानैकभाविताः ॥ भवंति क्षेत्रदोषेण सर्वे ते नारकाः खलाः ॥९७॥ अ-

जतुविकारे

क्रियिकशरीरत्वाद्विक्रियंते यदृच्छया ॥ यंत्राग्निश्वापदाकारैर्हंतुं चित्रैर्वधैः परान् ॥९८॥ न तत्र बांधवः स्वामी
भृत्यांगनांगजाः ॥ अनंतयातनासारे नरकेत्यंतभीषणे ॥९९॥ तत्र ताम्रमयाग्रध्रा लोहतुंडाश्च वायसाः ॥
वममार्णि चंचुभिर्नखरैः खरैः ॥१००॥ क्रमयः पूतिकुंडेषु वज्रसूचीसमाननाः ॥ त्वचमांस्थिमांसानि पिवंत्याक-

लोहितं॥७१॥बलाद्विदार्य संदंशै र्वदनं क्षिप्यते क्षणात्॥ विलीनं प्रज्वलं ताम्रं यैः पीतं मद्यमुद्धतैः॥७२॥परमांसा
नि यैः पापै र्भक्षितान्यत्र निर्दयैः॥ शूलपक्वानि मांसानि तेषां खादंति नारकाः॥७३॥ यैः प्राक् परकलत्राणि सेवि
तान्यात्मवंचकैः॥ योज्यंते प्रज्वलंतीभिः स्त्रीभिस्ते ताम्रजन्मभिः॥७४॥ न सौख्यं चक्षुरुन्मेषमात्रमप्युपलभ्यते
नरके नारकैर्दीनै र्हन्यमानैः परस्परं॥७५॥ किमत्र बहुनोक्तेन जन्मकोटिशतैरपि॥ केनापि शक्यते वक्तुं न दुःखं न
रकोद्भवं॥७६॥ विस्मृतं यदि केनापि कारणेन क्षणांतरं॥ स्मारयंति तदाभ्येत्य पूर्ववैरं सुराधमाः॥७७॥ बुभुक्षा जाय ५आग
तृप्तयितु
ते त्यर्थं नरके तत्र देहिनां॥ यां न शामयितुं शक्ताः पुद्गलप्रचयोऽखिलः॥७८॥ तृष्णा भवति या तेषु वाडवाग्निरिवोल्ब ६उत्कट
णा॥ न सा प्रशाम्यति निःशेषैः पीतैरप्यंबुराशिभिः॥७९॥ बिंदुमात्रं न तैर्वारि प्राप्यते पातुमातुरैः॥ तिलमात्रोपि नाहा

भ्रमितुं लभ्यते हि तैः ॥८०॥ तिलादप्यतिसूक्ष्माणि कृतं खंडानि निर्द्दयैः । वपुर्मिलति वेगेन न पुनस्तेषां वि
पीडा रोग ज्ञातव्यः
शात्यं ॥८१॥ यातनारुक्शरीरायुर्लेश्यादुःखभयादिकं । वर्द्धमानं विनिश्चेयं मघोघः श्वभ्रभूमिषु ॥८२॥ अमध्यभाग
मध्यलोके गोलाकृति
स्ततो मध्ये आस्ते सौझल्लरीनिभः । यत्र द्वीपसमुद्राणां व्यवस्था वलयाकृतिः ॥८३॥ जंबूद्वीपादयो द्वीपा लवणोदा
विस्तारा वेष्टनेन
दयोर्णवाः । स्वयंभुरमणांतास्ते प्रत्येकं द्वीपसागराः ॥८४॥ द्विगुणद्विगुणाभोगाः प्रावृत्यान्योन्यमास्थिताः
भ नामानो वलयाकारधारिणः ॥८५॥ मानुषोत्तरशैलेंद्रमध्यस्थमतिसुंदरं । नरक्षेत्रं सरिच्छैलसुराचलवि हिमवतादि
नरक्षेत्रेषु
तं ॥८६॥ तत्रार्यम्लेच्छखंडानि भूरिभेदानि तेषु मी । आर्यम्लेच्छा नराः संति तत्क्षेत्रजनितैर्गुणैः ॥८७॥
नुष्योपेतं क्वचिद्व्यंतरसंभृतं । क्वचिद्भोगधराकीर्णं नरक्षेत्रं निरंतरं ॥८८॥ ततो नभसि तिष्ठंति विमानानि दिवौ ॥११७॥
देवानां

१ भेदानी

कर्मा॥ चरस्थिरविकल्पानि ज्योतिष्काणां यथाक्रमं॥८०॥ तदूर्ध्वं संति देवेश कल्पाः सौधर्मपूर्वकाः॥ ते षोडश
च्युतास्वर्गपर्यंतान भसि स्थिताः॥८१॥ उपर्युपरि देवेश निवासयुगलं क्रमात्॥ अच्युतांतं ततोप्यूर्ध्वमेकैकं
त्रिदशास्पदं॥८२॥ निशादिनविभागोयं न यत्र त्रिदशास्पदे॥ रत्नालोकः स्फुरत्युच्चैः सततं नेत्रसौख्यदः॥८३॥
वर्षातपतुषारादिसमयैः परिवर्जितः॥ सुखदः सर्वदा सौम्यस्तत्र कालः प्रवर्तते॥८४॥ उत्पातभयसंतापभंगवै
रादिविद्रुराः॥ नहि स्वप्नेपि दृश्यंते क्रुद्धसत्वाश्च दुर्जनाः॥८५॥ तद्भूषा॥ चंद्रकांतशिलानद्धाः प्रवालदलदंतु
राः॥ वज्रेंद्रनीलनिर्माणा विचित्रास्तत्र भूमयः॥८६॥ माणिक्यरोचिषां चक्रैः कर्बुरीकृतदिङ्मुखाः॥ वाप्यः स
र्णांबुजच्छन्ना रत्नसोपानराजिताः॥८७॥ सरांस्यमलवारीणि हंसकारंडमंडलैः॥ वाचालैरुद्धतीर्थानि दिव्य

७ समूहे ७ तटानि

चिंतामणिरत्न

नारीजनेनच॥८९॥वः कामदुघाः सर्वाः कल्पवृक्षाश्च पादपाः॥ चिंतारत्नानि रत्नानि स्वर्गलोके स्वभावतः

इंद्राः

॥९०॥ ध्वजचामरछत्राद्यैर्विमानैर्वनितासखाः॥ संचरंति सुरा सारैः सेव्यमानाः सुरेश्वराः॥९१॥ यक्षकिन्न

आलिंगिताभि. पुष्पलतापिहितोदरेषु

रीभिर्मंदारवनवीथिषु॥ कांताश्लिष्टाभिः सानंदं गीयंते त्रिदशेश्वराः॥९२॥ क्रीडागिरिनिकुंजेषु पुष्पश

गृहेषु च॥ रमंते त्रिदशा यत्र वरस्त्रीवृंदवेष्टिताः॥९३॥ मंदारचंपकाशोकमालतीरेणुरंजिताः॥ भ्रमंति यत्र

सुगंधपवन मंदं मंदं

ह्यागंधवाहाः शनैः शनैः॥९४॥ लीलावनविहारैश्च पुष्पावचयकौतुकैः॥ जलक्रीडादिविज्ञानैर्विलासा

मृदंगा ताडिता

स्तत्र योषितां॥९५॥ वीणामादाय रत्यंते कलं गायंति योषितः॥ ध्वनंति मुरजा धारं दिवि देवांगनाहताः॥९६॥

किलाः कल्पवृक्षेषु चैत्यागारेषु योषितः॥ विबोधयंति देवेशान्ललितैर्गीतनिस्वनैः॥९७॥ नित्योत्सवयुतं ॥११८॥

संबोधयंति इंद्रान्

सर्वाभ्युदयमंदिरं।सुखसंपत्गुणाधारकैः स्वर्गमुपमीयते।६।पंचवर्णमहारत्ननिर्माणाः सप्तभूमिकाः।प्रासा
दाः पुष्करिण्यश्च जशालावनांतरे।७।प्राकारपरिखावप्रगोपुरोत्तुंगतोरणैः।चैत्यद्रुमसुरागारैर्नगर्यो रत्नरा
जिताः।८।इंद्रपुरश्रियं धत्ते यत्रा नित्यं नभस्तलं।हर्म्याग्रलग्नमाणिक्यमयूखैः कर्बुरीकृतं।९।सप्तभित्ति
दृप्तानीकैर्विमानैरंगनान्वितैः।कल्पद्रुमगिरींद्रेषु रमंते विबुधेश्वराः।१०।हस्त्यश्वरथपादातवृषान्गंधर्वन
र्तकीम्।सप्तानीकानि संत्यस्य प्रत्येकं च महत्तरान्।११।शृंगारसारसंपूर्णा लावण्यवनदीर्घिकाः।पीनस्तन
भराक्रांताः पूर्णचंद्रनिभानना।१२।विनीताः कामरूपिण्यो महर्द्धिमहिमान्विताः।हावभावविलासाढ्या नि
तंबभरमंथराः।१३।अनन्ये शृंगारसर्वस्वमेकीकृत्य विनिर्मिताः।स्वर्गवासिविलासिन्यः संति मूर्ता इव श्रियः।१४।

आलिंगनादि

तवादित्रविद्यासु शृंगाररसभूमिषु ॥ परिरंभादिसंगेषु स्त्रीणां दाक्ष्यं स्वभावतः ॥१५॥ सर्वावयवसं

काम देवसमानो … उच्चशरीरा

दिव्यलक्षणलक्षिताः ॥ अनंगप्रतिमाधीराः प्रसन्नाः प्रांशुविग्रहाः ॥१६॥ हारकुंडलकेयूरकिरीटांगदभू

प्रभूत्वउत्साह मंत्र २

ताः मंदारमालतीगंधा अणिमादिगुणान्विताः ॥१७॥ प्रसन्नामलपूर्णेंदुकांताः कांतजनप्रियाः ॥ प्राक्तित्र

क्रीडा

णोपेताः प्रासादलीलावलंबिनः ॥१८॥ विज्ञानविनयोद्दामप्रीतिप्रसरसंभृताः ॥ निसर्गसुभगाः स्वर्गे भवंति

देवा.

दिवौकसः ॥१९॥ न तत्र दुःखितो दीनो वृद्धो रोगी गुणच्युतः ॥ विकलांगो गतश्रीकः स्वर्गलोके विलोक्यते ॥२०॥

सभापति—

देवाना निकटवर्ती परिवार

भ्यसामानिकामात्यलोकपालप्रकीर्णकाः ॥ मित्राद्यं निमतस्तेषां पार्श्ववर्ती परिग्रहः ॥२१॥ बंदिगायकपौ

अति-चतुरस्त्री

अतिमनोज्ञता

श्रीस्वांगरक्षापदातयः ॥ नटवेत्रिविलासिन्यः सुराणां सेवकोजनः ॥२२॥ तत्रातिभव्यताधारे विमाने

२ व्यापितदिक्शांतराः
३ चंद्रविंबाभाः – वात
पित्तश्लेष्मरहिताः
७ देवानां

मले उपपादपुष्पलागर्भे संभवंति स्वयं सुराः॥२३॥सर्वाक्षसुखदे रम्ये नित्योत्सवविराजिते॥गीतवादित्रली
लाढ्ये जयजीवस्वनाकुले॥२४॥दिव्याकृतिसुसंस्थानाः सप्तधातुविवर्जिताः॥कायकांतिपयःपूरैः प्रसा
धितदिगंतराः॥२५॥निरीषसुकुमारांगाः पुण्यलक्षणलक्षिताः॥अणिमादिगुणोपेताः ज्ञानविज्ञानपारगाः
॥२६॥मृगांकमूर्तिसंकाशाः प्रांतदोषाः शुभाशयाः॥अचिंत्यमहिमोपेता भयक्लेशार्तिवर्जिताः॥२७॥वर्द्धमा
नमहोत्साहा वज्रकाया महाबलाः॥अचिंत्यपुण्ययोगेन गृह्णंति वपुरूर्जितं॥२८॥सुखामृतमहांभोधेर्म
ध्यादिव विनिर्गताः॥भवंति त्रिदशाः सद्यः क्षणेन नवयौवनाः॥२९॥किं च पुष्पफलाक्रांतैः प्रवालदलदंतुरैः॥
तेषां कोकिलवाचालैर्द्रुमैर्जन्म निगद्यते॥३०॥गीतवादित्रनिर्घोषैर्जयमंगलपाठकैः॥विबोध्यंते शुभैः शब्दै

५ गाद्यदिवं
६ रवचि

सुखसुप्ताइवस्वयं॥३१॥किंचिद्भ्रममपाकृत्यवीक्षतेसन्शनैःशनैः॥यावदाशामुकुःस्निग्धैस्तदाकर्णितलोच
नैः॥३२॥इंद्रजालमथस्वप्नःकिंतुमायाभ्रमोनुकिं॥दृश्यमानमिदंचित्रंनायातिममनिश्चयं॥३३॥इदंरम्या
सेव्यमिदंश्लाघ्यमिदंहितं॥इदंप्रियमिदंभव्यमिदंचित्तप्रसादिदं॥३४॥एतत्कंदलितानंदमेतत्कल्याणमं
एतन्नित्योत्सवाकीर्णमेतदत्यंतसुंदरं॥३५॥सर्वर्द्धिमहिमोपेतंमहर्द्धिकसुरार्चितं॥सप्तानीकान्वितंभातित्रि
प्रांगणसभाजिरं॥३६॥किंच॥मामेवोद्दिश्यसानंदःप्रवृत्तःकिमयंजनः॥पुण्यमूर्तिःप्रियःश्लाघ्योविनीतो
तवत्सलः॥३७॥अत्रैलोक्यनाथसंसेव्यःकोयंदेशःसुखाकरः॥अनंतमहिमाधारोविश्वलोकाभिनंदितः॥३८॥
पुरमतिस्फीतंवनोपवनराजितं॥अभिभूयजगन्नृत्यावलातीवध्वजांशुकैः॥३९॥प्राकलय्यतदाकूतंस

१ देव । १ दिशाः । १ तदाइतिचिंतयति । मनोज्ञ । स्थान । विकसितं । अंगण । ३ अभिक्रम्य । ४ सप्तसेनाख्य । विस्तीर्ण । अतिक्रम्य । नृत्यतीव । शीला । ६ वर्द्धितः । ७ तस्यइंद्रस्याभिप्रायं । सभापतय.

नम्रिभूतं अवसरयोग्य नम्रिभूतानां दृष्ट्या

वादिव्यचक्षुषः॥ नतिपूर्वं प्रवर्त्तंते वक्तुं कालोचितं तदा॥४॥ प्रमादः क्रियतां देव नतानां स्वेच्छया दृशा॥ श्रूय
तां चैव वचोस्माकं पौर्वापर्यप्रकाशकं॥१॥ तद्यथा॥ अद्य नाथ वयं धन्याः सफलं चाद्य जीवितं अस्माकं यत्व
यास्वर्गः संभवेन पवित्रितः॥२॥ प्रसीद जय जीव त्वं देव पुण्यस्तवोद्भवः॥ भवः प्रभुः समग्रस्य स्वर्गलोकस्य
संप्रति॥३॥ सौधर्मोयं महाकल्पः सर्वामरशतार्च्चितः॥ नित्यां जिनेंद्रकल्याणवार्द्धिवर्द्धनचंद्रमाः॥४॥ कल्प
सौधर्म्मनामायमीशानप्रमुखाः सुराः॥ इहोत्पन्नस्य शक्रस्य कुर्वंति परमोत्सवं॥५॥ पाठांतरं॥ अत्र संकल्पि
ताः कामानवं नित्यं च यौवनं॥ अत्रा विनश्वरी लक्ष्मीः सुखं चात्र निरंतरं॥६॥ त्वद्विमानमिदं रम्यं कामगं कांत
दर्पणं॥ पादांबुजनता चेयं तव त्रिदशमंडली॥७॥ एते दिव्यांगनाकीर्णाश्चंद्रकांतमनोहराः॥ प्रासादा रत्न

उत्पत्ते त्वं ६ वांछित मनोज्ञ

प्रकाशं

पर्यंकक्रीडानद्यश्च भूधराः॥४०॥सभाभवनमेतत्ते नतामरव्रातार्चितं। रत्नदीपकृतालोकं पुष्पप्रकरशोभितं॥
४१॥विनीतवेषधारिण्यः कामरूपा वरस्त्रियः। तवादेशं प्रतीक्ष्यंते लास्यलीलारसोत्सुकाः॥४२॥
मिदं च हरिविष्टरं। एतच्च चामरव्रातमेते विजयकेतवः॥४३॥ एता अग्रमहादेव्यो वरस्त्रीवृंदवंदिताः॥त्वणी
रांधीशलावण्यैश्वर्यसंपदः॥४४॥श्रृंगारजलधेर्वेला विलासोद्भासितभ्रुवः॥लीलालंकारसंपूर्णास्तवना
॥४५॥सर्वा विवयवनिर्म्माणश्रीरासां नोपमास्पदं। यासां श्लाघ्यमलं स्निग्धपुलकपाणुप्रभवं वपुः॥४६॥अयमै
णो नामदेवदंती महामनाः॥४७॥ते गुणाष्टकैश्वर्यो ऽद्भुयं विश्वातिशायिनी॥४८॥इदं मत्तगजानीकमितोश्वी
वा। एते स्वर्णरथास्तुंगा वल्गंत्येते पदातयः॥४९॥एतानि सप्तसैन्यानि पालितान्यमरेश्वरैः। नमंति ते पदद्वंद्वं वेत्ति

सिंहासन · वाञ्छति · नृत्य · भृकुटी · ऐरावतहस्ती · गरिष्ठः · अणिमादि · पायदल

पृ देवानां =

६ अश्वसमूहं

तव

१ कथिते सति —

त्तिपूर्वकं ॥४॥ तमग्रं स्वर्गसाम्राज्यं दिव्यभूत्योपलक्षितं । पुण्यैस्ते संमुखीभूतं गृहाण प्रणतामर ॥५०॥ इति वादिनि सु
स्निग्धे मयि विवेत्यं तत्वत्सले । अवधिज्ञानमासाद्य सो व्यापर्य संबुध्यते ॥५१॥ अहो तपः पुराचीर्णं मयान्यजनदुश्चरं
दर्शनज्ञानचारित्रतप
विस्तीर्णं चाभयं दानं प्राणिनां जीवितार्थिनां ॥५२॥ आराधितं मनःशुध्या दृग्बोधादि चतुष्टयं । देवश्च जगतां नाथः
सर्वज्ञः परमेश्वरः ॥५३॥ निर्दग्धं विषयारण्यं स्मरवैरी निपातितः । कषायतरवश्छिन्ना रागशत्रुर्नियंत्रितः ॥५४॥ स
वी
र्वसत्स्य प्रभायमह्यं येनाद्य दुर्गतेः । उद्धृत्य स्थापितः स्वर्गराज्ये त्रिदशवंदिते ॥५५॥ रागादिदहनज्वाला न प्रशाम्यंति
चारित्र
देहिनां । सद्वृत्तवार्यसंसिक्ताः क्वचिज्जन्मशतैरपि ॥५६॥ तन्नात्र सुलभं मन्ये तत्किं कुर्मोऽधुना वयं । सुराणां स्वर्गलो
केऽस्मिन्न दर्शनस्यैव योग्यता ॥५७॥ अतस्तत्वार्थश्रद्धां मे श्रेयसी स्वार्थसिद्धये । अर्हद्देवपदद्वंद्वे भक्तिश्चात्यंतनिश्च

ला:॥६६॥ यान्यत्र प्रतिबिंबानि स्वर्गलोके जिनेशिनां॥ विमानचैत्यवृक्षेषु मेर्वाद्युपवनेषु च॥६७॥ तेषां पूर्वं
कृत्वा सद्द्रव्यैः स्वर्गसंभवैः॥ पुष्पचंदननैवेद्यैर्गंधदीपाक्षतोत्करैः॥६८॥ गीतवादित्रनिर्घोषैः स्तुतिस्तोत्रैर्मनो
हरैः॥ स्वर्गैश्वर्यं ग्रहीष्यामि ततस्त्रिदशवंदितं॥६९॥ इति सर्वज्ञदेवस्य कृत्वा पूजामहोत्सवं॥ स्वीकुर्वंति तदा
पट्टबंधादिलक्षणं॥७०॥ तस्मिन्मनोजवैर्यानैर्विचरंतो यदृच्छया॥ वनाद्रिसागरांतेषु दीव्यंति त्रिदिवौकसः
॥७१॥ संकल्पानंतरोत्पन्नैर्दिव्यभोगैः समर्पितं॥ सेव्यमानाः सुरानीकैः प्रयांति स्वर्गिणः सुखं॥७२॥ महाप्र
पन्नैर्महाभूत्योपलक्षितैः॥ कालं गतं न जानंति निमग्नाः सौख्यसागरे॥७३॥ क्वचिद्गीतैः क्वचिन्नृत्यैः क्वचिद्वाद्यै
र्मनोहरैः॥ क्वचिद्विलासिनीव्रातक्रीडाशृंगारदर्शनैः॥७४॥ मद्यतूर्यग्रहज्योतिर्भूषाभोजनविग्रहाः॥ स्रग्दी

१ जिनबिंबाना — स्वर्गे — निश्चयानीत — इंद्रादिदेवाः — ४ क्रिडयंति — समूह

मद्यकवस्तु वाद्य उद्योत आभूषण पुष्पमाला

१ देवांगना १ कल्पवृत्ती. १ स्वर्गवासिनः

त्रपात्रांगादशधा कल्पपादपाः॥७५॥ दशांगभोगजैः सौख्यैर्लाल्यमानाः क्वचित्क्वचित्॥ वसंति स्वर्गिणः स्वर्गे
कल्पनातीतवैभवाः॥७६॥ यत्सुखं नाकिनां (देवानां) स्वर्गे तद्वक्तुं केन पार्यते॥ स्वभावजमनातंकं (निरोगं) सर्वाक्षप्रीणनक्षमं॥७७
अशेषविषयोद्भूतं दिव्यस्त्रीसंगसंभवं॥ विनीतजनविज्ञानैर्ज्ञानाद्यैश्वर्यलांछितं॥७८॥ सौधर्माद्यच्युतांतास्ये
कल्पाः षोडश वर्णिताः॥ कल्पातीताः (स्वर्गरहिताः) स्ततो ज्ञेया देवा वैमानिकाः परे॥७९॥ अहमिंद्राभिधानास्ते प्रवीचारविवर्जि (स्त्रीसुरत)
ताः॥ विवर्द्धितशुभध्यानाः शुक्ललेश्यावलंबिनः॥८०॥ अनुत्तरविमानेषु श्रीजयंतादिपंचसु॥ संभूय (उत्पद्य) स्वर्गिणश्च्यु (देवा)
त्वा व्रजंति पदमव्ययं॥८१॥ कल्पेषु च विमानेषु परतः परतोऽधिकाः॥ सुखलेश्यायुर्विज्ञानप्रभावैः स्वर्गिणः स्वयं॥
८२॥ ततोऽग्रे शाश्वतं धाम जन्मजातंकविच्युतं॥ ज्ञानिनां यदधिष्ठानं क्षीणनिःशेषकर्मणां॥८३॥ चिदानंदगुणो

१ सिद्धत्वे १ज्ञानपिंडात्मका

तानिष्ठितार्था विबंधना॥ यत्रसंतिस्वयंबुध्यः सिद्धाः सिद्धेः स्वयंवराः॥८४॥ समस्तोयंमहालोकः केव

समदीद

नगोचरः केवलज्ञानगोचरः॥ तंव्यस्तंवासमस्तंवास्वपुत्त्यांचिंतयेद्यति॥८५॥ विलीनाशेषकर्माणां

समीपे

मतिनिर्मलं॥ स्वततः पुरुषाकारंस्वांगगर्भगतंस्मरेत्॥८६॥ इतिनिगदितमुच्चैर्लोकसंस्थानमित्थंनियत

२ आमोन=

अमर्याद

मनियतंवाध्यायतः शुद्धबुद्धेः॥ भवतिसततयोगाद्योगिनोनिःप्रमादंनियतमनतिदूरेकेवलज्ञा

८७॥ इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेसंस्थानविचयप्रकरणं॥३३॥ पिंडस्थंचप

कथित

स्थंरूपवर्जितं॥ चतुर्द्धाध्यानमाम्नातंभव्यराजीवभास्करैः॥१॥ पिंडस्थेपंचविज्ञेया

पवनाख्या

र्णीतः॥ संयमीयास्वसंमूढोजन्मपाशान्निकृंतति॥२॥ पार्थिवीस्यात्तथाग्नेयीश्वसनाख्याथवारुणी॥ तत्व

७ अथधारणा

७छेदयति

७धारणासु = दक्ष

१ धारणाः

पवतीचेति विज्ञेयास्तायथाक्रमं ॥३॥ तद्यथा ॥ तिर्यग्लोकसमं योगी स्मरति क्षीरसागरं ॥ निःशब्दं शांतकल्लोलं

क्षीरसागरस्य = निष्पन्नं अमर्यादभूत कमल

मौक्तिकहार = हारनीहारसंनिभं ॥४॥ तस्य मध्ये सुनिर्माणं सहस्रदलमंबुजं ॥ स्मरत्यमितभादीप्तं द्रुतहेमसमप्रभं ॥५॥ अभ्र

रागसमुद्भूतकेसराली विराजितं ॥ जंबूद्वीपप्रमाणं च चित्तभ्रमररंजकं ॥६॥ स्वर्णाचलमयीं दिव्यां तत्र स्मरति क २ कमले

पीतकृत कर्णिकायां

र्णिकां ॥ स्फुरत्पिंगप्रभाजालपिशंगितदिगंतरां ॥७॥ शरच्चंद्रनिभं तस्यामुन्नतं हरिविष्टरं ॥ तत्रात्मानं सुखा

सीनं प्रशांतमिति चिंतयेत् ॥८॥ रागद्वेषादिनिःशेषकलंकक्षपणक्षमं ॥ उद्युक्तं च भवोद्भूतकर्मसंतानशात ५ छेदने:

६ योगी = ने ॥९॥ पार्थिवी ॥ ततोऽसौ निश्चलाभ्यासात्कमलं नाभिमंडले ॥ स्मरत्यतिमनोहारि षोडशोन्नतपत्रकं ॥१०॥ प्रति

७ स्थित पत्रंसमासीनं स्वरमालाविराजितं ॥ कर्णिकायां महामंत्रं विस्फुरंतं विचिंतयेत् ॥११॥ रेफरुद्धं कलाबिंदुलांछि

७-चतुर्दशस्वरसंयुक्तं =

१ निर्गच्छंति — १ दिशा —

तंशून्यमक्षरं॥ लसद्बिंदुच्छटाकोटिकांतिव्याप्तहरिन्मुखं॥१२॥ अर्हं॥ तस्यरेफाद्विनिर्यांतीं प्रानैर्धूमशिखां
त्॥ स्फुलिंगसंततिंपश्चाज्ज्वालालींतदनंतरं॥१३॥ तेनज्वालाकलापेनवर्द्धमानेनसंततं॥ दहत्यविरतंधीर
पुंडरीकंहृदिस्थितं॥१४॥ तदष्टकर्मनिर्माणमष्टपत्रमधोमुखं॥ दहत्येवमहामंत्रध्यानोत्थप्रबलानलः॥
१५॥ ततोबहिःशरीरस्यत्रिकोणंवह्निमंडलं॥ स्मरेज्ज्वालाकलापेनज्वलंतमिववाडवं॥१६॥ वह्निबीजसमा
पर्यंतेस्वस्तिकांकितं॥ ऊर्द्धवायुपुरोद्भूतंनिर्धूमंकांचनप्रभं॥१७॥ अंतर्दहतिमंत्रार्चिर्बहिर्वह्निपुरंपरं॥ ध
द्धगितिविस्फुर्यत्ज्वालाप्रचयभासुरं॥१८॥ भस्मभावमसौनीत्वाशरीरंतच्चपंकजं॥ दाह्याभावात्स्वयं
समीरणं॥ स्मरत्यविरतंयोगीमहावेगंमहाब ॥१२
तिवह्निःशनैःशनैः॥१९॥ आग्नेयी॥ विमानपथमापूर्यसंचरंतं

कमल — ५ मंडलं — मंडल — ७ आकाशं — २ योग

२ जगत्गृहे १ मेरु १ मेघसमूहं

चालयंतं सुरानीकं धुन्वंतं त्रिदशाचलं । दारयंतं घनव्रातं क्षोभयंतं महार्णवं ॥ २१ ॥ व्रजंतं भुवनाभोगे संचरंतं

दिशा स्फेटयित्वा

हरिन्मुखे ॥ विसर्पंतं जगन्नीडे निर्विशंकं धरातले ॥ २२ ॥ उद्धूयेत ध्रजः शीघ्रं तेन प्रबलवायुना ॥ ततः स्थिरीकृ

मेघसमूह

ताभ्यासः समीरं शांतिमानयेत् ॥ २३ ॥ मारुती ॥ वारुण्यां महिपुण्यात्मा घनव्रातचितं नभः । इंद्रायुधतडि

घनै मेघं

ज्जिंचमत्काराकुलं स्मरेत् ॥ २४ ॥ सुधांबुप्रभवैः सांद्रै बिंदुभिर्मौक्तिकोज्वलैः । वर्षंतं तं स्मरेद्धीरः स्थूलस्थूलै

५ अप्मंडलं ५ बीजाक्षरं

र्निरंतरैः ॥ २५ ॥ ततोर्द्धेंदुसमं कांतं पुरं वरुणलांछनं । ध्यायेत्सुधापयः पूरैः प्लावयंतं नभस्तलं ॥ २६ ॥ तेनाचिं ५ अंबुना

त्यप्रभावेन दिव्यध्यानोत्थितांबुना । प्रक्षालयति निःशेषं तद्रजः कायसंभवं ॥ २७ ॥ वारुणी ॥ सप्तधातुवि

दीप्ति

निर्मुक्तं पूर्णचंद्रामलत्विषं । सर्वज्ञकल्पमात्मानं ततः स्मरति शुद्धधीः ॥ २८ ॥ मृगेंद्रविष्टरारूढं दिव्यातिश

७ सर्वज्ञसदृशं

ज्ञानार्णव॥
॥१२५॥

यसंयुतं॥कल्याणमहिमोपेतं देवदैत्योरगार्चितं॥२९॥विलीनाशेषकर्माणं स्फुरंतमतिनिर्मलं॥स्वं
:पुरुषाकारं स्वांगगर्भगतं स्मरेत्॥३०॥रूपवती॥इत्यविरतं स योगी पिंडस्थे जातनिश्चलाभ्यासः
वसुखमनन्यसाध्यं प्राप्नोत्यचिरेण कालेन॥३१॥इत्थं यत्रानवद्यं (ध्याने) स्मरति नवसुधासांद्रचंद्रांशुगौरं श्री
ज्ञकल्पं कनकगिरितटे (मेरुशिखरे) वीतविश्वप्रपंचं॥आत्मानं निर्विकल्पं त्रिदशगुरुगणैर (इंद्रसमूहै) प्यचिंत्यप्रभावं तत्त्वं
ष्ठ्यं प्रणीतं जिनसमयमहांभोधिपारं प्रयाते॥३२॥विद्यामंडलयंत्रमंत्रकुहककूराभिचारक्रियाः (कंपरहिता) सिं
पूीविषदैत्यदंतिसरभा (शार्दूलाः) यांत्येव निःसारतां॥शाकिन्यो ग्रहराक्षसप्रभृतयो मुंचंत्यसद्वासनामैतं ध्यानध
(योगिन) संनिधिवशाज्ज्ञानोर्यथा कौशिका॥३३॥इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे ॥१२

पवित्राणि क्रियते द्रव्यार्थिकपर्यायार्थिक

पिंडस्थध्यानप्रकरणं॥ ॥छ॥ पदान्यालंब्य पुण्यानि योगिभिर्यद्विधीयते॥ तत्पदस्थं मतं ध्यानं विचित्रनयपा
रगैः॥१॥ तद्यथा॥ ध्यायेदनादिसिद्धांतप्रसिद्धां वर्णमातृकां॥ निःशेषशब्दविन्याससजन्मभूमिं जगन्नुतां॥२॥ द्वि
गुणाष्टदलांभोजे नाभिमंडलवर्तिनि॥ भ्रमंतीं चिंतयेद्ध्यानी प्रतिपत्रं स्वरावलीं॥३॥ चतुर्विंशतिपत्राढ्यं हृदि
४ कमलं कंजं सकर्णिकं॥ तत्र वर्णानिमान् ध्यायेत्संयमी पंचविंशतिं॥४॥ ततो वदनराजीवे पत्राष्टकविभूषिते॥ परं व
र्णाष्टकं ध्यायेत्संचरंतं प्रदक्षिणं॥५॥ इत्यजस्रं स्मरन् योगी प्रसिद्धां वर्णमातृकां॥ श्रुतज्ञानांबुधेः पारं प्रयाति
विगतभ्रमः॥६॥ उक्तं च॥ कमलदलोदरमध्ये ध्यायेद्वर्णाननादिसंसिद्धान्॥ नष्टादिविषये बोधं ध्यातास्संपद्य ६
ते कालात्॥७॥ उक्तं च॥ आप्याज्ञयेत्क्षयमरोचकमग्निमांद्यं कुष्टोदरामकसनश्वसनादिरोगान्॥ प्राप्नोति वा

(interlinear glosses: रचना; कमले; अष्टांगनिमित्तज्ञान; ति)

अष्टशावाच्यागारिष्टां = महत्पुरुषेभ्य·

तिमवाममहतीं महद्भ्यः पूजां परत्र च गतिं पुरुषोत्तमां प्रां ।।९।। अथ मंत्रपदाधीशं सर्वतत्वैकनायकं ।। आदि
मध्यांतभेदेन स्वरव्यंजनसंभवं ।।१०।। अर्हं ।। अर्हा ऊर्द्धाधोरेफसंरुद्धं सकलं बिंदुलांछितं ।। अनाहतयुतं त
त्वं मंत्रराजं प्रचक्षते (कथ्यते) ।।११।। ॐ ।।११।। देवासुरनतं भीमं दुर्बोधध्वांतभास्करं ।। ध्यायेन्मूर्द्ध (मस्तक) स्थचंद्रांशुकलापाक्रां
तदिङ्मुखं ।।१२।। अपिच कनककमलगर्भे कर्णिकायां निविष्टं (उपविष्ट) विगतमलकलंकं सांद्रचंद्रांशुगौरं ।। गगन
मनुसरंतं संचरंतं हरित्सु (दिक्षु) स्मर जिनपतिकल्पं मंत्रराजं यतींद्र ।।१३।। अत्र मतानि ।। बुद्धः केचिद्ब्रह्मजः केचिद्धरि
श्चिन्महेश्वरः ।। शिवः सार्वस्तथेशानः सोऽयं वर्णः प्रकीर्तितः ।।१४।। मंत्रमूर्तिं समादाय देवदेवः स्वयं जिनः
सर्वज्ञः सर्वगः शांतः सोऽयं साक्षाद्व्यवस्थितः ।।१५।। ज्ञानबीजं जगद्वंद्यं जन्मज्वलनचा (मेघ) र्मुचां पवित्रं मतिमान्

।।१२६।।

एकबार  २ अंकुर = उत्पद्यते  मोक्षाय  सज्जीकृत

ध्यायेदिदं मंत्रं महेश्वरं ॥१६॥ सकृदुच्चरितं येन हृदये न स्थिरीकृतं ॥ तत्वं तेनापवर्गाय पाथेयं प्रगुणीकृतं ॥१७
यदैवैदं महातत्वं मुनेर्द्दत्ते हृदि स्थितिं ॥ तदैव जन्मसंतानप्ररोहः प्रविशीर्यते ॥१८॥ स्फुरंतं भ्रूलतामध्ये वि
शंतं वदनांबुजे ॥ तालुरंध्रेण गच्छंतं स्रवंतममृतांबुभिः ॥१९॥ स्फुरंतं नेत्रपत्रेषु कुर्वंतमलिके स्थितिं ॥ ३ ललाटके
भ्रमंतं ज्योतिषां चक्रे स्पर्द्धमानं शितांशुना ॥२०॥ संचरंतं दिशामास्ये ४ चंद्रेण
छलंतं नभस्तले ॥ छेदयंतं कलंकौघं स्फेटयंतं भवभ्रमं ॥२१॥ नयंतं परमस्थानं योजयंतं शिवश्रियं ॥ इति
मंत्राधिपं धीरः कुंभकेन विचिंतयेत् ॥२२॥ अर्हं ॥ अनन्यशरणः साक्षात्तत्संलीनैकमानसः ॥ तथा स्मरन्
सो ध्यानी यथा स्वप्नेऽपि न स्खलेत् ॥२३॥ इति मत्वा स्थिरीभूतं सर्वावस्थासु सर्वथा ॥ नासाग्रे निश्चलं धत्ते यदि

वाम्भूलतांतरे॥२४॥ तत्र केश्चिच्च वर्णादिभेदैस्तत्त्वं प्रकल्पितं॥ मंत्रमंडलमुद्रादिसाधनैरिष्टसिद्धिदं॥२५॥ उक्तं च॥
कारादिहकारांतं रेफमध्यं सबिंदुकं॥ तदेव परमं तत्त्वं यो जनानि सं तत्त्ववित्॥२६॥ सर्वावयवसंपूर्णं
विच्युतं॥ क्रमेण चिंतयेद्ध्यानी वर्णमात्रं त्रिपभं॥२७॥ हा॥ बिंदुहीनं कलाहीनं रेफद्वितयवर्जितं॥ अन
मापन्नमनुच्चार्यं च चिंतयेत्॥२८॥ अ॥ चंद्ररेखासमं सूक्ष्मं स्फुरंतं भानुभास्वरं॥ अनाहताभिधं देवं दिव्यरूपं
विचिंतयेत्॥२९॥ अस्मिन् स्थिरीकृताभ्यासाः संतः शांतिं समाश्रिताः॥ अनेन दिव्यपोतेन तीर्त्वा जन्मोग्र
३०॥ तदेव च पुनः सूक्ष्मं क्रमाद्वालाग्रसन्निभं॥ ध्यायेदेकाग्रतां प्राप्य कर्तुं चेतः सुनिश्चलं॥३१॥ ततो पिंगलितां
षविषयीकृतमानसः॥ अध्यक्षमीक्षते साक्षाज्जगज्ज्योतिर्मयं क्षणे॥३२॥ सिध्यंति सिद्धयः सर्वा अणिमा

रेफकलाबिंदुरहितं

परित्यज्य —

श्रयः ॥३३॥ सेवां कुर्वंति दैत्याद्या आज्ञैश्वर्यं च जायते ॥ क्रमात्प्रच्याव्य लक्षेभ्यस्ततोऽलक्ष्ये स्थिरं मनः ॥ दधतोऽस्य स्फु
रत्यंतर्ज्योतिरत्यक्षमक्षयं ॥३४॥ इति लक्षानुसारेणालक्ष्यभावः प्रकीर्तितः ॥ तस्मिन् स्थितस्य मन्येऽहं मुनेः सिद्ध
समीहितं ॥३५॥ एतत्तत्त्वं शिवाख्यं वा समालंब्य मनीषिणः ॥ उत्तीर्णा जन्मकांतारमनंतक्लेशसंकुलं ॥३६॥ मंत्रराज
मेघ ॐकार
अनाहतं च ॥ क्ष्वीं ॥ स्मर दुःखानलज्वालाप्रशांतेर्नवनीरदं प्रणवं वाऽप्ययं ज्ञानप्रदीपं पुण्यशासनं ॥३७॥ यस्माच्छ
ॐकारः
अर्थशब्द — पंचपरमेष्ठी = ब्दात्मकं ज्योतिः प्रसूतमतिनिर्मलं ॥ वाच्यवाचकसंबंधस्तेनैव परमेष्ठिनः ॥३८॥ हृत्कंजकर्णिकासीनं स्वरव्यंजन १ हृदयक
विस्तीर्ण दुराधर्ष गलत् संक्रमित संश्लिष्ट
वेष्टितं ॥ स्फीतमत्यंतदुर्द्धर्षं देवदैत्येंद्रपूजितं ॥३९॥ प्रक्षरन्मूर्द्धसंक्रांतं चंद्रलेखामृतप्लुतं ॥ महाप्रभावसंपन्नं क
वन
र्मकक्षहुताशनं ॥४०॥ महातत्त्वं महाबीजं महामंत्रं महत्पदं ॥ शरच्चंद्रनिभं ध्यानी कुंभकेन विचिंतयेत् ॥४१॥ सांद्र

१ सुवर्णसमं =

सिंदूरवर्णाभं यदि वा विद्रुमप्रभं। चिंत्यमानं जगत्सर्वं क्षोभयत्यतिसंगतं॥४२॥ जांबूनदनिभं स्तंभे विद्वेषे कज्ज
लत्विषं। ध्येयं वश्यादिके रक्तं चंद्राभं कर्मशातने॥४३॥ ॐ॥ पंचगुरुनमस्कारलक्षणं मंत्रमूर्जितं। चिंतयेज्ज
गज्जंतुपवित्रीकरणक्षमं॥४४॥ स्फुरद्विमलचंद्राभे दलाष्टकविभूषिते। कंजे तत्कर्णिकासीनं मंत्रं सप्ताक्षरं
॥४५॥ दिग्दलेषु ततोन्येषु विदिक्पत्रेष्वनुक्रमात्। सिद्धादिकं चतुष्कं च दृष्टिबोधादिकं तथा॥४६॥ ॐ णमो अ
पां णमो सिद्धाणं णमो आयरियाणं॥ णमो उवज्झायाणं णमो लोए सव्वसाहूणं॥ अपराजितमंत्रोयं॥ दर्शनज्ञा
चारित्रतपांसि। श्रियमात्यंतिकीं प्राप्ता योगिनो ये त्र केचन। अमुमेव महामंत्रं ते समाराध्य केवलं॥४७॥ प्रभा
अज्ञानी
स्यानिःप्रोपं योगिनामप्यगोचरं। अनभिज्ञो जनो ब्रूते यः स मन्ये निलार्दितः॥४८॥ अनेनैव विशुध्यंति जंतवः

७ वातपीडितः =

मंत्रः

पंकिताः॥ अनेनैव विमुच्यंते भवक्लेशान्मनीषिणः॥४९॥ असावेव जगत्यस्मिन् भवव्यसनबांधवः॥ अमुं विहा
य सत्वानां नान्यः कश्चित्कृपाकरः॥५०॥ पतद्व्यसनपाताले भ्रमत्संसारसागरे॥ अनेनैव जगत्सर्वमुद्धृत्य विधृतं शि
वे॥५१॥ कृत्वा पापसहस्राणि हत्वा जंतुशतानि च॥ अमुं मंत्रं समाराध्य तिर्यंचोपि दिवं गताः॥५२॥ शतमष्टोत्तरं चास्य

चतुर्थउपवासस्य फलं=

विशुद्ध्या चिंतयेन्मुनिः॥ भुंजानोपि चतुर्थस्य प्राप्नोत्यविकलं फलं॥५३॥ स्मर मंत्रपदोद्भूतां महाविद्यां जगन्नुतां॥ गु
रुपंचकनामोत्थां षोडशाक्षरराजितां॥५४॥ अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यो नमः॥ षोडशाक्षरं विद्यां॥ अ
स्याः शतद्वयं ध्यानी जपन्नेकाग्रमानसः॥ अनिच्छन्नप्यवाप्नोति चतुर्थतपसः फलं॥५५॥ विद्यां षड्वर्णसंभूताम
जय्यां पुण्यशालिनीं॥ जपन्प्रागुक्तमभ्येति फलं ध्यानी शतत्रयं॥५६॥ अरहंत सिद्ध॥ चतुर्वर्णमयं मंत्रं चतुर्वर्गफ

एकाक्षर — कमले — चतुर्दशस्वरा —

पिंकमात्॥एकषुः प्रतिपत्रं तु तस्मिन्नेव निवेशयेत्॥७१॥स्वर्णगौरीस्वरोद्भूतां केशराली ततः स्मरेत्॥कर्णिकां च
सुधास्यंदबिंदुव्रजविभूषितां॥७२॥प्रोद्यत्संपूर्णचंद्राभं चंद्रबिंबाच्छनैः शनैः॥समागच्छत्सुधाबीजं मायावर्णं
चिंतयेत्॥७३॥विस्फुरंतमतिस्फीतं प्रभामंडलमध्यगं॥संचरंतं मुखांभोजे तिष्ठंतं कर्णिकोपरि॥७४॥ह्रीँ॥भ्रमंतं प्र
तिपत्रेषु चरंतं वियति क्षणे॥छेदयंतं मनोध्वांतं स्रवंतममृतांबुभिः॥७५॥व्रजंतं तालुरंध्रेण स्फुरंतं भ्रूलतांतरे
तिर्मयमिवाचिंत्यप्रभावं भावयेन्मुनिः॥७६॥वाक्पथातीतमाहात्म्यं देवदैत्योरगार्चितं॥विद्यार्णवमहापोतं वि
तत्वप्रदीपकं॥७७॥अमुमेवं महामंत्रं भावयन्नत्र संप्रायः॥अविद्याव्यालसंभूतं विषवेगं निरस्यति॥७८॥इति ध्या
यन्नसौ ध्यानी तत्संलीनैकमानसः॥वाङ्मनोमलमुत्सृज्य श्रुतांभोधिं विगाहते॥८०॥ततो निरंतराभ्यासान्मासैः

२धर्मानुरागः = वैराग्य

वर्षपर्यंतं =

षड्भिः स्थिराशयः मुखरंध्राद्विनिर्यांतीं धूमवर्तिं प्रपश्यति ॥७१॥ ततः संवत्सरं यावत्तथैवाभ्यासतो यदि प्रपश्य

ति महाज्वालां निःसरंतीं मुखोदरात् ॥७२॥ तदातौ तिजातसंवेगो निर्वेदालंबितो वशी ॥ ध्यायन्पश्यत्यविश्रांतं स

र्वज्ञमुखपंकजं ॥७३॥ अथा प्रतिहतानंदप्रीणितात्माजितश्रमः ॥ श्रीमत्सर्वज्ञदेवं स प्रत्यक्षमिव वीक्षते ॥७४॥ स

र्वातिशयसंपूर्णदिव्यरूपोपलक्षितं ॥ कल्याणमहिमोपेतं सर्वसत्वाभयप्रदं ॥७५॥ प्रभावलयमध्यस्थं भव्यरा

जीवरंजकं ॥ ज्ञानलीलाधरं धीरं देवदेवं स्वयंभुवं ॥७६॥ ततो विधूततंद्रोसौ तस्मिन्संजातनिश्चयः (सर्वज्ञे) ॥ भवभ्रममपा

कृत्य लोकाग्रमधिरोहति ॥७७॥ स्मर सकलसिद्धविद्यां प्रधानभूतां प्रसन्नगंभीरां ॥ विधुबिंबनिर्गतामिवक्षर (चंद्रः)

त्सुधार्द्रां महाविद्यां ॥७८॥ अविचलमनसा ध्यायन्ललाटदेशस्थितामिमां देवीं ॥ प्राप्नोति मुनिरजस्त्रं समस्तक

समूहं= ललाट=

ल्याणनिकुरंबं॥८९॥अमृतजलधिगर्भान्निःसरंतीसुदीप्तांमेलिकतलनिषण्णांचंद्रलेखांस्मरत्वं॥अमृत
प्लाविकीर्णांप्लावयंतीसुधाभिःपरमपदधरित्र्यांधारयंतीप्रभावं॥९०॥एतांविचिंतयन्नेवंत्तिमितेनांतरात्म
निर्विग्नो
ना॥जन्मज्वरजयंछित्वायातियोगीशिवास्पदं॥९१॥यदिसाक्षात्समुद्विग्नोजन्मदावोग्रसंक्रमात्॥तदास्म
दिमंत्रस्यप्राचीनंवर्णसप्तकं॥९२॥णमोअरहंताणं॥यदत्रप्रणवंशून्यमनाहतमितित्रयं॥एतदेवविदुःप्रा
ज्ञास्त्रैलोक्यतिलकोपमं॥९३॥नासाग्रदेशसंलीनंकुर्वन्नत्यंतनिश्चलं॥ध्याताज्ञानमवाप्नोतिप्राप्यपूर्वंगुणा
ज्ञान
कं॥९४॥ॐ ह्रीं॥ नमः॥ पोषे इंदुः कुंदधवलां ध्यातादेवास्त्रयोविधानेन॥जनयंतिसर्वविषयंबोधंकालेनत — ६ सर्वपदार्थ गोचर
नातं॥९५॥प्रणवयुगलस्ययुग्मंपार्श्वेमायायुगंविचिंतयति॥मूर्द्धस्थंहंसपदंछित्वाव्यस्तंवितंद्रात्मा॥९६॥ ॥१३१॥

सोऽहं ७ निरालस्य=

ॐ ॐ क्ष्रौं ॥ ततो ध्यायेन्महाबीजं स्त्रीकारं छिन्नमस्तकं ॥ अनाहतयुतं दिव्यं विस्फुरंतं मुखोदरे ॥ ९७ ॥ स्त्री ॥ श्रीवीर

वदनोद्भूतां विद्यां चाचिंत्यविक्रमां ॥ कल्पवल्लीमिवाचिंत्यफलसंपादनक्षमां ॥ ९८ ॥ विद्या च ॥ ॐ जोग्गे मग्गे तच्चे

भूये भव्वे भविस्से अरके परके जिण पार्श्वे स्वाहा ॥ ९९ ॥ ॐ ह्रीं स्वऽर्हन्नमो ऽर्हतां णं ह्रीं नमः ॥ १०० ॥ विद्यां जपति य

दं मां निरंतरं शांत विस्पंदः ॥ अणिमादिगुणान् लब्ध्वा ध्यानी शास्त्रार्णवं तरति ॥ १ ॥ त्रिकालविषयं साक्षात् ज्ञानम

स्योपजायते ॥ विश्वतत्त्वप्रबोधश्च संततभ्यासयोगतः ॥ २ ॥ शाम्यंति जंतवः क्रूरास्तथान्ये व्यंतरादयः ॥ ध्यान

5 मुने · विध्वंसकर्त्तारो येनंतद्धि प्रपंच्यते ॥ ३ ॥ दिग्दलाष्टकसंपूर्णराजीवे सुप्रतिष्ठितं ॥ स्मरत्यात्मानमत्यंतस्फुरद्ग्रीष्म

वेस्तार्थतेमयाकिं

र्कभास्वरं ॥ ४ ॥ प्रणवाद्यस्य मंत्रस्य पूर्वादिषु प्रदक्षिणं ॥ विचिंतयति पत्रेषु वर्णैकैकमनुक्रमात् ॥ ५ ॥ ॐ णमो अ

स्वीकृत्य= दलं=

रहंताणं॥अधिकृत्यंछदंपूर्वंमर्वाशासंमुखःपरं॥स्मरत्यष्टाक्षरंमंत्रंसहस्रैकंशताधिकं॥२॥प्रत्यहंप्रतिप
सुमेहेंद्राशाद्यंनुक्रमात्॥अष्टरात्रंजपेद्योगीप्रसन्नांमलमानसः॥तस्यांचिंत्यप्रभावेनक्रूराशयकलंकि
तां॥त्यजंतिजंतवोदर्प्पसिंहस्त्रस्तांइवंद्विपाः॥४॥अष्टरात्रेव्यतिक्रांतेकमलस्यास्यवर्तिनः॥निरूपयतिप २स्थापयति=
२पूर्वोक्तान्= त्रेषुवर्णानेतानंनुक्रमात्॥५॥आलंब्यप्रक्रियामेतांपूर्वंविघ्नौघशांतये॥पश्चात्सप्ताक्षरंमंत्रंध्यायेत्प्र २पूर्वोक्तान्=
इहलोकार्थं
णववर्जितं॥६॥मंत्रःप्रणवपूर्वोयंनिःशेषाभीष्टसिद्धिदः॥ऐहिकानेकधर्म्मार्थंमुत्पर्थंप्रणवच्युतः॥७॥ पूर्वोक्तां=
णमोअरहंताणं॥स्मरमंत्रपदंचान्यज्जन्मसंघातघातकं॥८॥रागाद्युग्रतमस्तोमप्रध्वंसरविमंडलं॥९॥श्री
वृषभादिवर्द्धमानांतेभ्योनमः॥मनःकृत्वासुनिःकंपंतांविद्यांपापभक्षिणीम्॥स्मरसत्वोपकाराययां॥

डैः प्रकीर्तिता॥१३॥ ॐ अर्हन्मुखकमलवासिनि पापात्मक्षयंकरि श्रुतज्ञानज्वालासहस्रप्रज्वलिते सरस्वति

मत्पापं हन हन दह दह क्षां क्षीं क्षूं क्षौं क्षः क्षीरवरधवले अमृतसंभवे वं वं हूं हूं स्वाहा॥१५॥ पापभक्षिणी॥

प्रकटी भवति

२ निर्मलता =

चेतः प्रसत्तिमाधत्ते पापपंकः प्रलीयते॥ आविर्भवति विज्ञानं मुनेरस्याः प्रभावतः॥१६॥ मुनिभिः संजयंत

अगात्

सिद्धचक्रस्य

घैर्विद्यावादात्समुद्धृतं॥ भुक्तिमुक्त्योः परं धाम सिद्धचक्राभिधं स्मर॥१७॥ तस्य प्रयोजकं शास्त्रं तदाम्नित्योप

देशतः॥ ध्येयं मुनीश्वरैर्जन्ममहाव्यसनशांतये॥१८॥ सिद्धचक्रं॥ स्मर मंत्रपदाधीशं मुक्तिमार्गप्रदीपकं॥

सर्वव्यापि

नाभिपंकजसंलीनमवर्णं विश्वतोमुखं॥१९॥ अ॥ सिवर्णं मस्तकांभोजे माकारं मुखपंकजे॥ आकारं कंठ

उ

कंजस्थं स्मरोंकारं हृदि स्थितं॥२०॥ असिआउसा॥ सर्वकल्याणबीजानि बीजान्यन्यान्यपि स्मरेत्॥ यान्यार

ध्यशिवंप्राप्ता योगिनः शीलसागराः॥२१॥ नमः सर्वसिद्धेभ्यः॥ श्रुतसिंधुसमुद्भूतमन्यद्वापदमक्षरं॥ त
न्निःध्येयं स्यात्पदस्थप्रसिद्धये॥२२॥ एवं समस्तवर्णेषु मंत्रविद्यापदेषु च॥ कार्यः क्रमेण विश्लेषो लक्ष्य
सिद्धये॥२३॥ अन्यद्वा यद्बृहच्छ्रुतस्कंधबीजं निर्वेदकारणं॥ तत्तद्ध्यायन्नसौ ध्यानी नापवर्गपथि स्खलेत्॥२४॥ उक्तं
च॥ ध्येयं स्याद्वीतरागस्य विश्ववर्त्यर्थसंचयं॥ तद्धर्मव्यत्ययाभावान्माध्यस्थ्यमधितिष्ठति॥२५॥ उक्तं च॥ वीत
गो भवेद्योगी यत्किंचिदपि चिंतयेत्॥ तदेव ध्यानमाम्नातमतोन्ये ग्रंथविस्तराः॥२६॥ वीतरागस्य विज्ञेया ध्यान
सिद्धिर्ध्रुवं मुने॥ क्लेश एव तदर्थं स्याद्रागार्तस्येह देहिनः॥२७॥ निर्मथ्य श्रुतसिंधुमुन्नतधियः श्रीवीरचं
येतत्वान्येवसमुद्धरंति मुनयो यत्नेन रत्नान्यतः॥ तान्येतानि हृदि स्फुरंति सुभगन्यासानि भव्यात्मनां येवां

(interlinear glosses: १ समुद्भूतं = अन्यत् = तत्वानि = ; २ भिन्नत्व = ; कथितजीवादिपदार्थविपर्यया ऽभावात् ; ४ जीवादिपदार्थसमूहं = ; ६ स्वभावविपरीतत)

1 आत्मानं =

त्यं निशं विमुक्तिललनासंभोगसंभावनां ॥२५॥ विलीनाशेषकर्माणं स्फुरंतमतिनिर्म्मलं ॥ स्वं ततः पुरुषाकारं स्व
गगर्भगतं स्मरेत् ॥२६॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे पदस्थध्यानप्रकरणं ॥

समवशरणादिक =

॥छ॥ आर्हंत्यमहिमोपेतं सर्व्वज्ञं परमेश्वरं ॥ ध्यायेद्देवेंद्रचंद्रार्क्कसभांतस्थं स्वयंभुवं ॥१॥ सर्व्वातिशययुक्तं पूर्णं सर्व्वल
क्षणलक्षितं ॥ सर्व्वभूतहितं देवं शीलशैलेंद्रशेखरं ॥२॥ सप्तधातुविनिर्मुक्तं मोक्षलक्ष्मीकटाक्षितं ॥ अनंतम
मुनिभिः सेवितं त्रैलोक्य
हिमाधारं सयोगी परमेश्वरं ॥३॥ अचिंत्यचरितं चारुचारित्रैः समुपासितं ॥ विचित्रनयनिर्न्नीतविश्वं विश्वैकबांधवं
मघ
॥४॥ निरुद्धकरणग्रामं निषिद्धविषयद्विषं ॥ ध्वस्तरागादिसंतानं भवज्वलनवार्मुचं ॥५॥ दिव्यरूपधरं धीरं विशुद्धज्ञा
वज्र पर्वतं
नलोचनं ॥ अपि त्रिदशयोगींद्रैः कल्पनातीतवैभवं ॥६॥ स्याद्वादपविनिर्घातभिन्नान्यमतभूधरं ॥ ज्ञानामृतपयः

पूरैः पवित्रितजगत्त्रयम् ॥७॥ अथ वा सवा ॥ इत्यादिगणनातीतगुणरत्नमहार्णवं देवदेवं स्वयंबुद्धं स्मराद्यं जिन
रां ॥ अथवा ॥ जन्ममृत्युजराक्रांतं रागादिविषमूर्छितं ॥ सर्वसाधारणैर्दोषैर्दृष्टाभिदपुराकृतं ॥९॥ अनेकव्य
संयमज्ञानविच्युतं ॥ संज्ञामात्रेण केचिच्च सर्वज्ञं प्रतिपेदिरे ॥१०॥ अन्यच्च ॥ इतरोपि नरः षड्भिः प्रमाणैर्वस्तुसंचयं ॥ प्र
दन्मतः केश्चित्सर्वज्ञः सोपि नेष्यते ॥११॥ अतः सम्यक्त्वविज्ञेयः परित्यज्यान्यशासनं ॥ युक्त्यागमविभागेन ध्या
निराकृत्य चेष्टितं सर्वज्ञस्य
र्म्मनीषिभिः ॥१२॥ युक्त्याद्वृषभसेनाद्यैर्निर्धूयासाधुवल्गितं ॥ यस्य सिद्धिः सतां मध्ये लिखिता चंद्रमंडले ॥१३॥ तद्य
था ॥ अनेकवस्तुसंपूर्णं जगद्यस्य चराचरं ॥ स्फुरत्यविकलं बोधविशुद्धादर्शमंडले ॥१४॥ स्वभावजमसंदिग्धं निर्दोषं
सर्वदोदितं ॥ यस्य विज्ञानमत्यक्षं लोकालोकं विसर्पति ॥१५॥ यस्य विज्ञानघर्मांशुप्रभाप्रसरपीडिताः ॥ क्षणादेव

७ जानन् =
६ जिनस्य =

३ प्रत्यक्ष । अनुमान । आगम उपमान । अर्थापत्ति । अभाव ॥ ६ णसहित = बांछके:

यांति खद्योता इव दुर्णयाः॥१८॥ पादपीठीकृताशेषत्रिदशेंद्रसभाजिरं। योगिगम्यं जगन्नाथं गुणरत्नमहार्णवं॥१९॥
पवित्रितधरापृष्ठं समुद्धृतजगत्त्रयं। मोक्षमार्गप्रणेतारमनंतं पुण्यशासनं॥२०॥ प्रभामंडलनिरुद्धार्कचंद्रकोटिसम
प्रभं। शरण्यं सर्वगं शांतं दिव्यवाणीविशारदं॥२१॥ अक्षोरगशकुंतेशं सर्वाभ्युदयमंदिरं। दुःखार्णवपतत्सत्वादत्त
हस्तावलंबनं॥२२॥ मृगेंद्रविष्टरारूढं मारमातंगघातकं। इंदुत्रयसमोद्दामछत्रत्रयविराजितं॥२३॥ हंसालीपातलील
त्वचामरव्रजवीजितं। वीततृष्णं जगन्नाथं वरदं विश्वरूपिणं॥२४॥ दिव्यपुष्पानकाशोकराजितं रागवर्जितं। प्राति
हार्यमहालक्ष्मीलक्षितं परमेश्वरं॥२५॥ नवकेवललब्धिश्रीसंभवं स्वात्मसंभवं। तुर्यध्यानमहावह्नौ कृतकर्मेंधनो
त्करं॥२६॥ रत्नत्रयसुधास्यंदमंदीकृतभवभ्रमं। वीतरागं जितद्वैतं शिवं शांतं सनातनं॥२७॥ अर्हंतमजमव्यक्तं कामदं

दत्तं इन्द्रियसर्प गरुड उत्कट हंसपंक्ति अविनश्वरं

कामघातकं॥ पुराणपुरुषं देवं देवदेवं जिनेश्वरं॥२६॥ विश्वचक्षुर्जगद्वंद्यं योगिनाथं महेश्वरं॥ ज्योतिर्मयमना
त्रातारं भुवनेश्वरं॥२७॥ योगीश्वरं तमीशानमादिदेवं चतुर्मुखं॥ अनंतमच्युतं शांतं भास्वंतं भूतनायकं॥२८॥ सन्म
तिं सुगतं सिद्धं जगज्ज्येष्ठं पितामहं॥ महाधीरं मुनिश्रेष्ठं पवित्रं परमाक्षरं॥२९॥ नित्यमव्ययमव्यक्तं परिपूर्णं
नं॥ इत्यादिसान्वयानेकपुण्यनामोपलक्षितं॥३०॥ सान्वयानीकयोगींद्रवंद्यनामोपलक्षितं॥ स्मरं सर्वगतं
वीरममरनायकं॥३१॥ अनन्यशरणः साक्षात्तत्संलीनैकमानसः॥ तत्स्वरूपमवाप्नोति ध्यानी तन्मयतां गतः॥
आत्मानं ३२॥ यमाराध्य शिवं प्राप्ता योगिनो जन्मनिःस्पृहाः॥ यं स्मरंत्यनिशं भव्याः शिवश्रीसंगमोत्सुकाः॥३३॥ य
गमृतस्यैकमासाद्य कणिकामपि॥ शाश्वतं पथि तिष्ठंति प्राणिनः प्रास्तकल्मषाः॥३४॥ देवदेवः स ईशानो भव्यां

परमात्मनि=

जैकभास्करः॥ ध्येयः सर्वात्मना धीरैर्निश्चलीकृतमानसैः॥ तस्मिन्निरंतराभ्यासवशात्संजातनिश्चयाः॥ सर्वाव
स्थासु पश्यंति तमेव परमेष्ठिनं॥ उद्धातदौर्लभ्यपरंज्योतिस्तद्गुणग्रामरंजितः॥ अविक्षिप्तमना योगी तत्स्वरूपमु
प्राप्यते स्खलते
पाश्नुते॥३१॥ इत्थं तद्भावनानंदसुधास्यंदाभिनंदितः॥ न हि स्वप्नाद्यवस्थासु ध्यायन्प्रच्यवते मुनिः॥३२॥ अथ
सहितानां
वा तस्य लोकत्रयैश्वर्यं ज्ञानराज्यं स्वभावजं॥ ज्ञानत्रययुषामन्येयोगिनामप्यगोचरं॥३३॥ किंच॥ साक्षान्नि
र्विषयं कृत्वा साक्षं चेतः ससंयमी॥ नियोजयत्यविश्रांतं तस्मिन्नेव जगद्गुरौ॥३४॥ तद्गुणग्रामसंलीनमानसस्त
द्गताशयः॥ तद्भावभावितो योगी तन्मयत्वं प्रपद्यते॥३५॥ तथा हि॥ यदाभ्यासवशात्तस्य तन्मयत्वं प्रजायते॥ त ६ परमात्मस्य —
दात्मानमसौ ध्यानी सर्वज्ञीभूतमीक्षते॥३६॥ एष देवः स सर्वज्ञः सोऽहं तद्रूपतां गतः॥ तस्मात्स एव नान्योऽहं विश्व

१संबंधंकरोति = आत्मा =    १स्फटिकमणिः =

दर्शीतिमन्यते॥४३॥उक्तंच॥येनयेनहिभावेनयुज्यतेयंत्रवाहकः॥तेनतन्मयतांयातिविश्वरूपोमणिर्यथा॥
४४॥अथवा॥भव्यस्यैवहिभूतानांसाक्षान्मुक्तेर्निबंधनं॥अतःसर्वज्ञताभव्येभवंतीनात्रप्रोक्यते॥४५॥अयमा
त्मस्वसामर्थ्याद्विप्लुष्यातिनकेवलं॥चालयत्यपिसंक्रुद्धोभुवनानिचतुर्दश॥४६॥त्रैलोक्यानंदबीजंजननजल
धेर्यानपात्रंपवित्रंलोकालोकप्रदीपंस्फुरदमलशरच्चंद्रकोटिप्रभाढ्यं॥कस्यामप्यग्रकोटौजगदखिलमति
त्यलब्धप्रतिष्ठंदेवंविश्वैकनाथंशिवमजमनघंवीतरागंभजस्व॥४७॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञाना
र्णवेयोगप्रदीपाधिकारेरूपस्थध्यानप्रकरणं॥छ॥वीतरागंस्मरन्योगीवीतरागोविमुच्यते॥रागीसरागमालं
क्रूरकर्माश्रितोभवेत्॥१॥मंत्रमंडलमुद्रादिप्रयोगैर्ध्यातुमुद्यतः॥सुरासुरनरव्रातंक्षोभयत्यखिलंक्षणात्॥२॥क्रु

४परिज्ञानोत्कृष्टेजाति सति =

३नरक भवनवासी व्यंतर कल्पवासी ज्योतिष्क ग्रीवेयक नवोत्तर पंचोत्तर =

१जीवस्य = २आत्मा =

स्याप्यस्य सामर्थ्यमचिंत्यं त्रिदशैरपि ॥ अनेकविक्रियासारध्यानमार्गावलंबिनः ॥३॥ बहूनि कर्माणि मुनिप्रवीरै
र्विद्यानुवादात्प्रकटीकृतानि ॥ असंख्यभेदानि कुतूहलार्थं कुमार्गकुध्यानगतानि संति ॥४॥ असावनंतप्रथित
प्रभावः स्वभावतो यद्यपि यंत्रनाथः ॥ नियुज्यमानः स पुनः समाधौ करोति विश्वं चरणाग्रलीनं ॥५॥ अथवा ॥ स्व
प्नेपि कौतुकेनापि नासध्यानानि योगिभिः ॥ सेव्यानि यांति बीजत्वं यतः सन्मार्गहानये ॥६॥ सन्मार्गात्प्रच्युतं चेतः
पुनः वर्षशतैरपि ॥ प्राकृतेन हि केनापि व्यवस्थापयितुं पथि ॥७॥ असध्यानानि जायंते स्वनाशायैव केवलं ॥ रा
गाद्यसद्ग्रहावेशात्कौतुकेन कृतान्यपि ॥८॥ निर्भरानंदसंदोहपदसंपादनक्षमं ॥ मुक्तिमार्गमतिक्रम्य कः कुमार्गे
प्रवर्तते ॥९॥ क्षुद्रध्यानपरप्रपंचचतुरा रागानलोद्दीपिता मुद्रामंडलमंत्रयंत्रकरणैराराध्यं त्यादृता ॥ कामक्रोध

आत्मा रत्नत्रयात् परिपूर्ण समूह पुरुषः

२ विख्यातः =

७ आदरपराः =

वशीकृतान्निहंसुरान्संसारमोख्यार्थिनो दुष्टाप्राग्निहतापतंतिनरके भोगार्थिनिर्विचिता ॥१०॥ तस्मैयंतदनु
यंतद्धि चिंत्यंमनीषिभिः ॥ यज्जीवकर्मसंबंधविध्वंसायैवजायते ॥११॥ स्वयमेवहि सिध्यंति सिद्धयः शांतचेत
अनेकफलसंपूर्णामुक्तिमार्गावलंबिनां ॥१२॥ संभवंतिनचाभीष्टसिद्धयः क्षुद्रयोगिनां ॥ भवत्यैवपुनस्तेषां
निर्बीजको मुनयः
प्रभ्रंशो निवारितः ॥१३॥ भवप्रभवसंबंधे निरपेक्षामुमुक्षवः ॥ नहिस्वप्नेपि विक्षिप्तं मनः कुर्वंतियोगिनः ॥१४॥ अ
उपमंकुरुते
५ स्वस्वरूपे — रूपेस्थिरीभूतचित्तः प्रक्षीणविभ्रमः ॥ अमूर्तमजमव्यक्तं ध्यातुंप्रक्रमतेततः ॥१५॥ चिदानंदमयंशुद्धममू
अथ
मार्क्षरं स्मरेद्यत्रात्मनात्मानं तद्रूपातीतमीक्ष्यते ॥१६॥ वदंतियोगिनोध्यानं चित्तमेवमनाकुलं ॥ कथंशिव
॥तद्यथा॥
पन्नमात्मानं संस्मरेन्मुनिः ॥१७॥ विविच्यतद्गुणग्रामं तत्त्वरूपंनिरूप्यच ॥ अनन्यशरणोज्ञानीतस्मिन्नेवल

८ विचार्य —

व्रजेत्॥१८॥ तद्गुणग्रामसंपूर्णं तत्स्वभावैकभावितं॥ कृत्वात्मानं ततो ध्यानी योजयेत्परमात्मनि॥१९॥ द्वयोर्गुणैर्म
तं साम्यं व्यक्तिशक्तिव्यपेक्षया॥ विशुद्धेतरयोः स्वात्मतत्वयोः परमागमे॥२०॥ किंच॥ यः प्रमाणनयैर्नूनं स्वतत्व
मवबुध्यते॥ बुध्यते परमात्मानं स योगी वीतविभ्रमः॥२१॥ व्योमाकारमनाकारं निष्पन्नं शांतमच्युतं॥ चरमांगा
त्कियन्न्यूनं स्वप्रदेशैर्घनैः स्थितं॥२२॥ लोकाग्रशिखरासीनं शिवीभूतमनामयं॥ (नीरोगं) पुरुषाकारमापन्नमर्थमूर्तं वि
(निःशरीरस्य)
चिंतयेत्॥२३॥ तथा हि॥ निःकलस्य विशुद्धस्य निष्पन्नस्य जगद्गुरोः॥ चिदानंदमयस्योच्चैः कथं स्यात्पुरुषाकृ
तिः॥२४॥ तद्यथा॥ विनिर्गतमधूच्छिष्टप्रतिमे मूषिकोदरे॥ यादृग्गगनसंस्थानं तदाकारं स्मरेद्विभुं॥२५॥ सर्वावय
वसंपूर्णं सर्वलक्षणलक्षितं॥ विशुद्धादर्शसंक्रांतप्रतिबिंबसमप्रभं॥२६॥ इत्यसौ सतताभ्यासवशात्संजातनिश्चयः॥

योगी—

अपि स्वप्नाद्यवस्थासु तत्त्वमेवाध्यक्षमीक्षते ॥२७॥ सोहं सकलवित्सार्वः सिद्धः साध्यो भवच्युतः ॥ परमात्मा परं
तिर्विश्वदर्शी निरंजनः ॥२८॥ तदासौ निश्चलो मूर्त्तो निष्कलंको जगद्गुरुः ॥ चिन्मात्रो विस्फुरत्युच्चैर्ध्यान
विवर्जितः ॥२९॥ पृथग्भावमतिक्रम्य तथैक्यं परमात्मनि ॥ प्राप्नोति स मुनिः साक्षाद्यथान्यत्वं न विद्यते ॥३०॥
॥ उक्तं च ॥ निष्कलः परमात्माहं लोकालोकावभासकः ॥ विश्वव्यापी स्वभावस्थो विकारपरिवर्जितः ॥३१॥ इ
विगतविकल्पं क्षीणरागादिदोषं विदितसकलवेद्यं त्यक्तविश्वप्रपंचं ॥ शिवमजमनवद्यं विश्वलोके
पं परमपुरुषमुच्चैर्भावशुद्ध्या भजस्व ॥३२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे
रूपातीतप्रकरणं ॥ छ ॥ प्रसीद शांतिं व्रज संनिरुध्यतां दुरंतजन्मज्वरविप्लुतं मनः ॥ अगाधजन्मार्णव

व्यापित —

प्रसद्धाना=

पारवर्त्तिनांयदिश्रियंवांछसिविश्वदर्शिनां॥४॥यदिरोद्धुंनशक्नोतितुछवीर्योमुनिर्मनः॥तद्वारागेतरध्वं
संहृत्वाकुर्यात्सुनिश्चलं॥२॥अनुप्रेक्षाश्चधर्मस्यस्युःसदैवनिबंधनं॥चित्तभूमौस्थिरीकृत्यताःस्वरूपं
निरूपय॥३॥स्फोटयत्याशुनिःकंपोयथादीपोघनंतमः॥तथाकर्मकलंकौघंमुनेर्ध्यानंमुनिश्चलं॥४॥अ
थवा॥चलत्येवाल्पसत्वानांक्रियमाणमपिस्थिरं॥चेतःशरीरिणांशश्वद्विषयैर्व्याकुलीकृतं॥५॥नस्वा
त्वमतःशुक्लेविद्यतेत्यल्पचेतसां॥आद्यसंहननस्यैवतत्प्रणीतंपुरातनैः॥६॥यतश्च॥छिन्नेभिन्नेहतेदग्धे
विभिन्ने
घ्राणेति
देहेस्वमिवदूरगां॥प्रपश्यन्वर्षवातादिदुःखैरपिनकंपते॥७॥नपश्यतितदाकिंचिन्नशृणोतिनजिघ्रतिस्पृ
ष्टंकिंचिन्नजानातिसाक्षान्निर्वृत्तलेपवत्॥८॥अद्यसंहननोपेतानिर्वेदपदवींश्रिताः॥कुर्वंतिनिश्चलंचेतःशु

परमशुक्ले

निष्पन्नः

२ परित्यज्य— १ आतापुरुषस्य मुनेः २ संयोगं न करोति १ आद्यसंहनन चतुर्द्दशपुर्वयो



क्तं ध्यानक्षमं नराः ॥९॥ सामग्र्योरुभयोर्ज्ञातुर्ध्यानं बाह्यांतरंगयोः ॥ पूर्वयोरेव शुक्लं स्यान्नान्यथा जन्मकोटिषु ॥१०॥
अतिक्रम्य शरीरादिसंगानात्मन्यवस्थितः ॥ नैवाक्षमनसोर्योगं करोत्यैकाग्रतां श्रितः ॥११॥ असंख्येयमसंख्येयं
द्विगुणेष्विह क्षीयते क्षपकस्यैव कर्मजातमनुक्रमात् ॥१२॥ शमकस्य क्रमात्कर्म शांतिमायाति पूर्ववत् ॥ प्राप्नोति नि
तांतं कं समोख्यं समलक्षणं ॥१३॥ धर्मध्यानस्य विज्ञेया स्थितिरांतर्मुहूर्तिकी ॥ क्षायोपशमिको भावो लेश्या शुक्लैव
शाश्वती ॥१४॥ इदमत्यंतनिर्वेदविवेकप्रशमोद्भवं ॥ स्वात्मानुभवमत्यक्षं योजयत्यंगिनां सुखं ॥१५॥ तथा चोक्तं ॥ अ
लौल्यमारोग्यमनिष्ठुरत्वं गंधः शुभो मूत्रपुरीषमल्पं ॥ कांतिः प्रसादः स्वरसौम्यता च योगप्रवृत्तेः प्रथमं हि चिह्नं ॥१६॥ ये
यांवसाने स्वतनुं विहाय ध्यानेन संन्यस्तसमस्तसंगाः ॥ ग्रैवेयकानुत्तरपुण्यवासं सर्वार्थसिद्धौ प्रभवंति भव्याः ॥१७॥

समूहं उपशमकस्य प्रसन्न- शब्द मुने

परित्यक्तसंगाः परिग्रहाः

२ कामज्वरपीडारहित =

माला भूषण आभरण २ देव

त्रं चिंत्यमहाप्रभावकलितं लावण्यलीलान्वितं स्रग्भूषांबरदिव्यलांछनयुतं चंद्रावदातं वपुः॥ संप्राप्यानंतवीर्य
बोधप्रभुभगं कामज्वरार्तिच्युतं सेवंते विगतांतरायमतुलं सौख्यं चिरं स्वर्गिणः॥१८॥ ग्रैवेयकानुत्तरवासभाजां वीचा
रहीनं सुखमत्युदारं॥ निरंतरं पुण्यपरंपराभिर्विवर्द्धितं वार्द्धिरिविंदुपादैः॥१९॥ देवराज्यं समासाद्य यत्सुखं स्वर्गवासि
नः॥ निर्विष्टं तिततोऽनंतं सौख्यं कल्पातिवर्तिनां॥२०॥ संभवं त्यथ कल्पेषु ते ह्यचिंत्यविभूतिजां॥ प्राप्नुवंति परं सौख्यं सु
राः स्त्रीभोगलांछितं॥२१॥ दशांगभोगसंभूतं महाष्टगुणवर्द्धितं॥ यत्कल्पवासिनां सौख्यं तद्वक्तुं केन पार्यते॥२२॥ सर्वद्वं
द्वविनिर्मुक्तं सर्वाभ्युदयभूषितं॥ नित्योत्सवयुतं दिव्यं दिवि सौख्यं दिवौकसां॥२३॥ प्रतिसमयमुदीर्णं स्वर्गसाम्राज्य
रूढं सकलविषयबीजं ध्वांतदत्ताभिनंदं॥ ललितयुवतिलीलालिंगनादिप्रसूतं सुखमतुलमुदारं स्वर्गिणो निर्विशंति॥२४॥

अखंड; उत्कट; भुंजंति; संयुक्तं; कल्पवृक्षः; अणिमादि; स्वर्गे; देवानां

२ क्लिसौख्यहीनं =
४ ग्रैवेयकादिनां =
२ चंद्रकिरणैः =
५ समर्थयते = क.
हरहितं =
७ भुंजंति =

उत्तम

।।ज्ञानार्णव।। सर्व्वाभिमतभावोत्थं निर्व्विघ्नं स्वःसुखामृतं।।सेव्यमानां न बुध्यंते गतं जन्म दिवौकसः।।२५।।तस्माच्च्युत्वा त्रिदिव
।।१४७।। टलाद्दिव्यभोगावसाने कुर्व्वंत्यस्यां भुवि नरनुते पुण्यवंशेऽवतारं।।तत्रैश्वर्य्यं च रमवपुषां प्राप्य देवोपनीतैर्भोगो
त्थोत्सवपरिणतैर्लाल्यमाना वसंति।।२६।।ततो विवेकमालंब्य विरज्य जननभ्रमात्।।त्रिरत्नशुद्धिमासाद्य तपः
त्वान्यदुःकरं।।२७।।धर्मध्यानं च शुक्लं च स्वीकृत्यानंतवीर्यतः।।घातिकर्मक्षयं कृत्वा व्रजंति पदमव्ययं।।२८।।इत्या
चार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे धर्मध्यानफलप्रतिपादनप्रकरणं।।छ।।रागाद्युग्ररुजा
लापकलितं संदेहदोलायितं विक्षिप्तं सकलेंद्रियार्थगहने कृत्वा मनो निश्चलं।।संसारव्यसनप्रबंधविलयं मुक्तेर्
विनोदास्पदं धर्मध्यानमिदं विदंतु निपुणा अत्यक्षसौख्यार्थिनः।।१।।आत्मार्थं श्रय मुंच मोहगहनं मित्रं विवेकं ।।१४०।।

२ धर्मध्यानं = परित्यक्तः

मध्ये = 2 शुक्लं आरभ्यते

कुरु वैराग्यं भज भावय स्वं नियतं भेदं शरीरात्मनाः ॥ धर्मध्यानसुधासमुद्रकुहरे कृत्वावगाहं परं पश्यानंतसुख
स्वभावकलितं मुक्तेर्मुखांभोरुहं (कमलं) ॥१॥ अथ धर्ममतिक्रांतः शुद्धिं चात्यंतिकीं श्रितः ॥ ध्यातुमारभते धीरः शुक्लमत्यंत
निर्मलं ॥२॥ निःक्रियं करणातीतं ध्यानधारणवर्जितं ॥ अंतर्मुखं च यच्चित्तं तच्छुक्लमिति पठ्यते ॥३॥ आदिसंहननो
पेतः पूर्वज्ञः पुण्यचेष्टितः ॥ चतुर्विधमपि ध्यानं स शुक्लं ध्यातुमर्हति ॥४॥ उक्तं च ॥ शुचिगुणयोगाच्छुक्लं कषायरज
सः क्षयादुपशमाद्वा ॥ वैडूर्यमणिशिखामिव सुनिर्मलं निःप्रकंपं च ॥५॥ कषायमलविश्लेषात्प्रशमाद्वा प्रसूयते ॥ य
तः पुंसामतस्तज्ज्ञैः शुक्लमुक्तं निरुक्तिकं (यथार्थक) ॥६॥ छद्मस्थयोगिनामाद्ये द्वे शुक्ले परिकीर्तिते ॥ द्वे चांते क्षीणदोषाणां के
वलज्ञानचक्षुषां ॥७॥ श्रुतज्ञानार्थसंबंधाच्छ्रुतालंबनपूर्वके ॥ पूर्वे परे जिनेंद्रस्य निःशेषालंबनच्युते ॥८॥ सवितर्क

३ वज्रवृषभनाराच संहनन =

४ चतुर्दश पूर्वज्ञा

: शुक्लध्यानज्ञातैः =

स्वर्गमोक्ष निराकरोति

सूते दत्ते च त्रिदिवशिवं श्रियं अहिंसैव हितं कुर्याद्व्यसनानि निरस्यति॥३३॥ अस्मद्दीपवती धात्री कुलाचलसमन्वि-

करोति

ता। नैकप्राणिवधोत्पन्नं दत्त्वा दोषं व्यपोहति॥३४॥ सकलजलधिवेलावारिसीमां धरित्रीं नगरनगसमग्रां स्वर्ण-

रत्नादिपूर्णाम्। यदि मरणनिमित्ते कोऽपि दद्यात्कथंचित्तदपि न मनुजानां जीवितत्यागबुद्धिः॥३५॥ आत्मैवो-

प्यं तेनाऽम्बु प्रक्षिप्तः श्वभ्रसागरे। स्नेहभ्रममभयेनापि येन हिंसा समर्थिता॥३६॥ मूलच्छेदं कुठारोऽसिको दंडे स्थैर्यकारं स-

खंडने। ये धर्मास्तेऽपि निस्त्रिंशैर्देवत्वेन प्रकल्पिता॥३७॥ आवलि निर्दुर्बलस्यात्र क्रियते यः पराभवः। परलोके

वधके पुरुषे

स्त्वस्मादनंतः प्रविसद्यते॥३८॥ भयवेपितसर्वांगान्नानाप्यानं जीवितप्रियान्। निघ्नद्भिः प्राणिनः किं तैः स्वं

ज्ञातमजरामरं॥३९॥ स्वपुत्रपौत्रसंतानं वर्द्धयंत्याद्रं जैनाः। व्यापादयंति चान्येषामत्र हेतुर्न बुध्यते॥४०॥ पर

णोःपरंनोल्पंनमहऊगनात्परं॥यथाकिंचित्तथाधर्मोनाहिंसालक्षणात्परः॥४१॥तपःश्रुतयमज्ञान

दिकर्मणां॥सत्यशीलव्रतादीनामहिंसाजननीपरा॥४२॥करुणार्द्रंचविज्ञानवासितंयस्यमानसं॥इंद्रि

निःसंगंतस्यसिद्धंसमीहितं॥४३॥निस्त्रिंशइवनिस्त्रिंशंयस्यचेतोस्तिजंतुषु॥तपःश्रुताद्यनुष्ठानंतस्यक्ले

वलं॥४४॥द्वयोरपिसमंपापंनिर्नीतंपरमागमे॥वधानमोदयोकर्त्रोरसत्संकल्पसंश्रयात्॥४५॥संकल्पाच्छा

लिमत्स्योपिस्वयंभूरमणार्णवे॥महामत्स्याशुभेनस्वंनियोज्यनरकंगतः॥४६॥अहिंसैकापियत्सौख्यं

समूह पीड्यंते तृणेन

णामथवापुनिवांदत्तेतद्देहिनांनायंतपःश्रुतयमोत्करः॥४७॥दूयतेयस्तृणेनापिस्वशरीरेकदर्थिते॥सनिर्दय

परस्यांगेकथंशस्त्रंनिपातयेत्॥४८॥जन्मोग्रभयभीतानामहिंसैवौषधीपरा॥तथामरपुरीगंतुंपाथेयं

क्लं॥४९॥ किंत्वंहिंसैवभूतानांमातैवहितकारिणी॥ तथारमयतुंकांताविनेतुंचसरस्वती॥५०॥ स्वान्ययो
रपिसुखदुःखंहिताहिते॥ जंतूनयःपातकीहन्यात्सनरत्वेपिराक्षसः॥५१॥ अभयंयच्छभूतेषुकुरुमैत्रीमनंदि
तां॥ पश्यात्मसदृशंविश्वंजीवलोकंचराचरं॥५२॥ जायंतेभूतयःपुंसांयाःकृपाक्रांतचेतसां॥ चिरेणापिनताः
कुप्रान्तादेव्यपिभारती॥५३॥ किंनतप्तंतपस्तेनकिंनदत्तंमहात्मना॥ वितीर्णमभयंयेनप्रीतिमालंब्यदेहिनां॥५
यथायथाहृदिस्थैर्यंकरोतिकरुणानृणां॥ तथातथाविवेकश्रीःपरांप्रीतिंप्रकाशयेत्॥५५॥ अन्य
दहिंसाश्रीजिनागमे॥ परैश्वर्ययोगमात्रेणकीर्तितासायदृच्छया॥५६॥ तन्नास्तिजीवलोकेजिनेंद्रदेवेंद्रचक्रि
॥यत्प्राप्नुवंतिमनुजानजीवरक्षानुरागेण॥५७॥ यत्किंचित्संसारेशरीरिणांदुःखशोकभयबीजं॥ दौर्भाग्या

समस्तं तद्धिंसासंभवं ज्ञेयं ॥५०॥ ज्योतिश्चक्रस्य चंद्रो हरिरमृतभुजां चंडरोचिर्ग्रहाणां कल्पांगः पादपानां सलिलनि
धिरपां स्वर्णशैलो गिरीणां देवः श्रीवीतरागस्त्रिदशमुनिगणस्यात्र नाथो यथायं तद्वच्छीलव्रतानां प्रशमयमत
पसां विद्धि हिंसाप्रधानं ॥५१॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे अहिंसाप्रकरणं ॥छ॥
यः संयमधुरां धत्ते धैर्यमालंब्य संयमी ॥ स पालयति यत्नेन वाग्वने सत्यपादपं ॥१॥ अहिंसाव्रतरक्षार्थं यमजातं
जिनैर्मतं ॥ नारोहति परां कोटिं तदेवासत्यदूषितं ॥२॥ असत्यमपि तत्सत्यं यत्सत्त्वाशंसकं (हितकारी) वचः ॥ सावद्यं यच्च पुष्ण
ति तत्सत्यमपि गर्हितं (निंदितं) ॥३॥ अनेकजन्मजक्लेशशुद्ध्यर्थं यस्तपस्यति ॥ सर्वसत्त्वहितं शश्वत्स ब्रूते सूनृतं वचः ॥४॥ सू
नृतं करुणाक्रांतमविरुद्धमनाकुलं ॥ अग्राम्यं गौरवाश्लिष्टं वचः शास्त्रे प्रशस्यते ॥५॥ मौनमेव हितं पुंसां शश्वत्सर्वार्थ

सिद्धये वचो वाचि प्रियं तथ्यं सर्वसत्वोपकारि यत् ॥६॥ यो जिनैर्जगतां मार्गः प्रणीतो ऽत्यंतशाश्वतः ॥ असत्यबलतः
पि निर्द्दयैः कथ्यते ऽन्यथा ॥७॥ विचच्यासत्यसंदोहं खलैर्लोकः खलीकृतः ॥ कुशास्त्रैः स्वमुखोद्गीर्णैः त्यागगहनं
तमः ॥८॥ जयंति ते जगद्वंद्या यैः सत्यकरुणामयो ॥ अवंचकैश्च लोको ऽयं पथि शश्वत्प्रतिष्ठितः ॥९॥ असद्वदनव
के विशाल विषसर्पिणी ॥ उद्वेजयति वागेवं जगदंतर्विषोल्वणा ॥१०॥ न सास्ति काचिद्व्यवहारवर्त्तिनी न यत्र वा
स्फुरति प्रवर्त्तिका ॥ ब्रुवन्नसत्यामिह तां हताशयः करोति विश्वव्यवहारविप्लवम् ॥११॥ पृष्टैरपि न वक्तव्यं न श्रो
वचः शंकाकुलं पापं दोषाढ्यं चाभ्यसूयकं ॥१२॥ मर्मछेदि मनः शल्यं च्युतस्थैर्यं विरोधकं ॥ निर्द्दयं
त्याज्यं प्राणैः कंठगतैरपि ॥१३॥ धन्यास्ते हृदयं येषामुदीर्णैः करुणांबुधिः ॥ वाग्वीचिसंचयोल्लासैर्निर्वाप

हिनः॥१६॥ धर्मनाशो क्रियाध्वंसो स्वसिद्धांतार्थविप्लवो॥ अपप्रष्टैरपि वक्तव्यं तत्स्वरूपप्रकाशने॥१७॥ यथा मुकुमोहयत्ये

लग्ना सर्पिणी वाणी विस्तारी तैं

वं विश्रांता कर्णयोर्जिनं॥ विषमं विषमुत्सृज्य सा वपुःपन्नगीनगी॥१८॥ असत्येनैव विक्रम्य चार्वाकद्विजकौलिकै

मार्ग स्थापित नगरप्रणालसदृशं

सर्वान्सपोषकं धूर्तैः पथ्यपक्षं प्रतिष्ठितं॥१९॥ मन्ये पुरजलावर्तं प्रतिमं तन्मुखोदरं॥ यतो वाचः प्रवर्तंते कश्मलाः

कार्यनिःफला॥ प्राप्नुवंत्यतिघोरेषु रौरवादिषु संभवं॥ तिर्यक्ष्वथ निगोदेषु मृषावाक्येन देहिनः॥१९॥ न तथा चंदनं

पुष्पमाला

चंद्रमणयो मालती स्रजः॥ कुर्वंति निर्वृतिं पुंसां यथा वाणी श्रुतिप्रिया॥२०॥ अपि दावानलप्लुष्टं शाद्वलं जायते वनं

विषमात् अपि

न लोकः सुचिरेणापि जिह्वानलकदर्थितः॥२१॥ सर्वलोकप्रिये तथ्ये प्रसन्ने ललिताक्षरे॥ वाक्ये सत्यपि किं ब्रूते नि

अधमजन

कृष्टः परुषं वचः॥२२॥ सतं विज्ञाततत्त्वानां सत्यसीमावलंबिनां॥ चरणस्पर्शमात्रेण विशुध्यति धरातलं॥२३॥ अथ मन्त्र

णोपेतं सत्यश्रुतसमन्वितम्॥ येर्जन्म सफलं नीतं ते धन्या धीमतां मताः॥२४॥नृजन्मन्यपि यः सत्यप्रतिज्ञाप्र
तोऽधमः॥ स केन कर्मणा पश्चाज्जन्मपंकं तरिष्यति॥२५॥अदयैः संप्रयुक्तानि वाकूशास्त्राणीह भूतले॥ सद्यो
णि कृंतंति शितास्त्राणि वदे हि नाम्॥२६॥ व्रतश्रुतयमस्थानं विद्याविनयभूषणं॥ चरणज्ञानयोर्बीजं सत्यसं
ज्ञं व्रतं मतं॥२७॥ न हि सत्यप्रतिज्ञस्य पुण्यकर्मावलंबिनः॥ प्रत्यूहकरणे शक्ता अपि दैत्योरगादयः॥२८॥ चंद्रमू
र्त्तिरिवानंदं वर्द्धयंत्री जगत्त्रये॥ स्वर्गिभिर्ध्रियते मूर्ध्नि कीर्त्तिः सत्योत्थिता नृणां॥२९॥ खंडितानां विरूपाणां दुर्वि
रोगिणां॥ कुलजात्यादिहीनानां सत्यमेकं विभूषणं॥३०॥ यस्तपस्वी जटी मुंडो नग्नो वा चीवरावृतः॥ सोप्यसत्यं य
दि ब्रूते निंद्यः स्यादंत्यजादपि॥३१॥ कुटुंबं जीवितं वित्तं यद्यसत्येन वर्द्धते॥ तथापि युज्यते वक्तुं नासत्यं शीलशालि

विघ्नं
वल्कल
चांडालात्

३२॥ कृतः सकलं पापं असत्योच्छं तथान्यतः ॥ साम्यमेव वदंत्यार्यास्तुलायां धृतयोस्तयोः ॥३३॥ मूकतां मतिवैकल्यं
मूर्खत्वं बोधिविच्युतिं ॥ बाधिर्यं मुखरोगित्वं असत्यादेव देहिनाम् ॥३४॥ श्वपाकोलूकमार्जारवृकगोमायुमंडलं
स्त्रीक्रियं तेक्वचिल्लोके नरैः सत्यच्युतचेतसः ॥३५॥ प्रसन्नोन्नतवृत्तानां गुणानां चंद्ररोचिषां ॥ संघातं घातयत्येवमस
दप्युदितं मृषा ॥३६॥ न हि स्वप्नेपि संसर्गं असत्यमलिनैः सह ॥ कश्चित्करोति पुण्यात्मा दुरितोलूकपंकया ॥३७॥ ज
गद्वंद्ये सतां सेव्ये भव्यव्यसनशुद्धिदे ॥ शुभे कर्मणि योग्यः स्यान्नासत्यमलिनो जनः ॥३८॥ महामतिनिर्निष्ठ्यूतं
देवदेवैर्निषेधितं ॥ असत्यं पोषितं पापैः दुःशीलाधमनास्तिकैः ॥३९॥ सुतस्वजनदारार्थं वित्तबंधुकृतेथवा ॥
आत्मार्थे न वचोसत्यं वाच्यं प्राणात्ययेपि वा ॥४०॥ परोपरोधादपि निंदितं वचो ब्रुवन्नरो गच्छति नारकीं पुरीम् ॥ अ

प्रगटं

निंद्यवृत्तोऽपि गुणी नरेश्वरो वसुर्यथागाद्दिति लोकविश्रुतम् ॥४१॥ चंचन्मस्तकमौलिरत्नविकटज्योतिश्छटाडंबरैः
देवाः पल्लवयंति यच्चरणयोः पीठं लुठंतोऽग्रिमी॥ कुर्वन्ति ग्रहलोकपालखचरा यत्प्रातिहार्य्यं नृणां शाम्यंति ज्व
लनादयश्च यदिदं तत्सत्यवाचः फलं ॥४२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे सत्य

बहुधा

प्रकरणम् ॥९॥ अनासाद्य व्रतं नाम तृतीयं गुणभूषणं। नापवर्गपथि प्रायः क्वचिद्दत्ते मुनिः स्थितिम् ॥१॥ यः स
मीहते जन्माब्धेः पारमाक्रमितुं सुधीः। स त्रिशुद्ध्यातिनिःशंको नादत्ते कुरुते मतिम् ॥२॥ वित्तमेव मतं सूत्रे प्रा

लघुत्वं

णा बाह्याः शरीरिणाम्। तस्यापहारमात्रेण स्युस्ते प्रागेव घातिताः ॥३॥ गुणा गौणत्वमायांति यांति विद्याः विडं ब

समूहानि

नां। चौर्येणाकीर्तयः पुंसां शिरस्यादधते पदं ॥४॥ पुण्यानुष्ठानजातानि प्रणश्यंतीह देहिनां। परवित्तामिष

ग्रामलालसानां धरातले ॥५॥ परद्रव्यग्रहासक्तस्य तस्करस्येह निर्दया । गुरुबंधुसुतान्हंतुं प्रायः प्रज्ञा प्रवर्त्तते ॥६॥
हृदि यस्य पदं धत्ते परवित्तामिषस्पृहा । करोति किं न किं तस्य कंठलग्नेव सर्पिणी ॥७॥ चुराशीलं विनिश्चित्य परि
त्यजति शंकिता । वित्तापहारदोषेण जनन्यपि सुतं निजं ॥८॥ भ्रातरः पितरः पुत्राः स्वकुल्या मित्रबांधवाः संसर्ग
मपि नेच्छंति क्षणार्द्धमिह तस्करैः ॥९॥ न जने न वने चेतः स्वस्थं चौरस्य जायते । मृगस्येवोद्धतव्याधाच्छंकयाकुलव
र्द्धमात्मनः ॥१०॥ संत्रासोद्भ्रांतचेतस्कश्चौरो जागर्त्यहर्निशं । बध्येयात्र ध्रियेयात्र मार्येयात्रेति शंकितः ॥११॥ न
त्मरक्षां न दाक्षिण्यं नोपकारं न धर्मतां । न सतां शंसितं कर्म चौरः स्वप्नेपि बुध्यते ॥१२॥ तृणांकुरमिवादाय घात
यंत्यविलंबितं । चौरं विज्ञाय निःशंका धीमंतोपि धरातले ॥१३॥ गुरवो लाघवं नीता गुणिनोप्यत्र खंडिताः । चौरसं

अयं दोषेण यतयो निधनं गताः ॥१४॥ विपंति नरकं घोरं दुःखज्वालाकरालितं ॥ अमुत्र नियतं मूढप्रा
चर्चिताः ॥१५॥ सरित्पुरगिरिग्रामवनवेश्मजलादिषु ॥ स्थापितं पतितं नष्टं परस्वं त्यज सर्वथा ॥१६॥ चिदचिद्रूप
यत्परस्वमनेकधा ॥ तत्त्याज्यं संयमोद्दामसीमां संरक्षणोद्यतैः ॥१७॥ आस्तां परधनादित्सा कर्तुं स्वप्नेपि धी
तृणमात्रमपि ग्राह्यं नादत्तं दंतशुद्धये ॥१८॥ अतुलसुखसिद्धिहेतोर्धर्म्मस्य प्रश्चरणरक्षणार्थं च ॥ इहपरलोका
तार्थं कलय स्वचित्तेपि मा चौर्य्यं ॥१९॥ विषयविरतिमूलं संयमोद्दामशाखं यमदमशमपुष्पं ज्ञानलीला
म् ॥ विबुधजनशकुंतैः सेवितं धर्मवृक्षं दहति मुनिरपीह स्तेयतीव्रानलेन ॥२०॥ इत्याचार्यश्रीशुभचंद्रविर
चिते ज्ञानार्णवे योगप्रदीपाधिकारे चौर्य्यपरिहारप्रकरणम् ॥ छ ॥ विदंति परमं ब्रह्म यत्समालंब्य योगिनः ॥ तद्व्रतं

ह्मचर्यस्याद्धीरधौरेयगोचरं ।१। स प्रपंचं प्रवक्ष्यामि ज्ञात्वेदं गहनं व्रतं । स्वल्पोपि न सतां क्षेप्यः कार्यो स्याल्लोकविस
रम् ।२। एकमेवं व्रतं श्लाघ्यं ब्रह्मचर्यं जगत्त्रये । यद्विशुद्धं समापन्नाः पूज्यंते पूजितैरपि ।३। ब्रह्मव्रतमिदं जीयाच्चर
ब्रह्मचर्य
णस्यैव जीवितं । स्युः संतोपि गुणा येन विना क्लेशाय देहिनां ।४। नाल्पसत्त्वैर्न निःशीलैर्न दीनैर्नाक्षनिर्जि
तैः । स्वप्नेपि चरितुं शक्यं ब्रह्मचर्यमिदं नरैः ।५। पर्यंतविरसं विद्धि दशधा न्यच्च मैथुनं । योषित्संगाद्विरक्तेन त्याज्य
गीतनृत्यवाद्य
मेवं मनीषिणा ।६। आद्यं शरीरसंस्कारो द्वितीयं वृष्यसेवनं । तौर्यत्रिकं तृतीयं स्यात्संसर्गस्तुर्यमिष्यते ।७। योषि
द्विषयसंकल्पः पंचमं परिकीर्तितं । तदंगवीक्षणं षष्ठं संस्कारः सप्तमं मतं ।८। पूर्वानुभूतसंभोगस्मरणं स्यात्तद
विर्यनाशन विषफलसमानं प्रथमंसवनेरम्य
ष्टमं । नवमं भाविनी चिंता दशमं वस्तिमोक्षणं ।९। किंपाकफलसंभोगसन्निभं तद्धि मैथुनं । आपातमात्ररम्यं

सेव्यते

 स्याद्विपाकेऽत्यंतनिंदितं॥११॥विरज्य कामभोगेषु ये ब्रह्म समुपासते॥ तेदशमहादोषास्तैः त्याज्या भावशुद्धये॥

 ११॥ अपि चास्मरप्रकोपसंभूतान्स्त्रीकृतान्मैथुनोत्थितान्॥ संसर्गप्रभवान्ज्ञात्वा दोषान्स्त्रीषु विरज्यताम्॥१२

घ्यः॥ सिक्तोऽप्यंबुधरव्रातैः प्लावितोऽप्यंबुराशिभिः॥ न हि त्यजति संतापं कामवह्निप्रदीपितः॥१३॥ मूले ज्येष्ठस्य

ध्यान्हे विभ्रे नभसि भास्करः॥ न प्लोषति तथा लोकं यथा दीप्तः स्मरानलः॥१४॥ हृदि ज्वलति कामाग्निः पूर्वमेव श

रीराणाम्॥ भस्मसात्कुरुते पश्चादंगोपांगानि निर्दयः॥१५॥ अचिंत्यकामभोगीन्द्रविषव्यापारमूर्छितं॥ वीक्ष्य

श्वं विवेकाय यतंते योगिनः परम्॥१६॥ स्मरव्यालविषोद्गारैर्वीक्ष्य विश्वं कदर्थितं॥ यमिनः शरणं जग्मुर्विवे

वनितासुतं॥१७॥ एक एव स्मरो वीरः स चैकोऽचिंत्यविक्रमः॥ अवज्ञयैव येनेदं पादपीठीकृतं जगत्॥१८॥ एकार्थ ॥४

*अतुलपराक्रमः*

जयत्यैष जीवलोकं चराचरं मनोभूर्न्नगमानीयस्त्वशक्त्याव्याहतेक्रमः ॥१९॥ अपीडयत्यैव निःशंको मनोभूर्भुवन
त्रयं ॥ प्रतीकारशतेनापि यस्य भंगो न भूतले ॥२०॥ कालकूटादहं मन्ये स्मरसंगमहाविषं ॥ स्यात्पूर्वस्मिन्प्रतीकारं नि

*छिन्नशरीर* *कादौ*

प्रतिकारमुत्तरं ॥२१॥ जंतुजातमिदं मन्ये स्मरवह्निप्रदीपितं ॥ मज्जत्यगाधमंधस्य पुरध्रीकायकर्दमे ॥२२॥ अन
तव्यसनां सारदुर्गे भवमरुस्थले ॥ स्मरज्वरपिपासार्त्ता विपद्यंते शरीरिणः ॥२३॥ घृणास्पदमतिक्रूरं पापाढ्यं योगि
पितम् ॥ जनोयं कुरुते कर्म्म स्मरशार्दूलचर्वितः ॥२४॥ दिग्मूढमंधविभ्रांतमुन्मत्तं शंकिताशयं ॥ विलक्षं कुरुते लो
कं स्मरवैरी विजृंभितः ॥२५॥ नहि क्षणमपि स्वस्थं चेतः स्वप्नेपि जायते ॥ मनोभवशरव्रातैर्भिद्यमानं शरीरिणाम् ॥२६॥
जानन्नपि न जानाति पश्यन्नपि न पश्यति ॥ लोकः कामानलज्वालाकलापकवलीकृतः ॥२७॥ भोगिदष्टस्य जायंते

वेगाः सप्तैव देहिनाम् ॥ स्मरभोगीन्द्रदुष्टानां दश स्युस्ते महाभयाः ॥२८॥ तद्यथा ॥ प्रथमे जायते चिंता द्वितीये द्रष्टुं
॥स्युस्तृतीये ति निःश्वासाश्चतुर्थे भजते ज्वरम् ॥२९॥ पंचमे दह्यते गात्रं षष्ठे भुक्तं न रोचते ॥ सप्तमे स्यान्म
छी उन्मत्तत्वमष्टमे ॥३०॥ नवमे प्राणसंदेहो दशमे मुच्यते ऽसुभिः ॥ एतैर्वेगैः समाक्रांतो जीवस्तत्वं न पश्यति ॥३१॥
संकल्पवशतस्तीव्रा वेगा मंदाश्च मध्यमाः ॥ मोहज्वरप्रकोपेन प्रभवंतीह देहिनाम् ॥३२॥ अपि मानसमुत्तुंगनग
शृंगाग्रवर्त्तिनाम् ॥ स्मरवीरः क्षणार्द्धेन विधत्ते मानखंडनं ॥३३॥ शीलशालमतिक्रम्य धीधनैरपि तन्यते (क्रियते)
त्वमंत्यजस्त्रीणां संभोगाय स्मराज्ञया ॥३४॥ वृद्धमपि चारित्रं ध्वंसयत्याशु देहिनाम् ॥ निरुणद्धि श्रुतं सत्यं धै
मदनव्यथा ॥३५॥ नाशने शयने याने स्वजने भोजने स्थितम् ॥ क्षणमात्रमपि प्राणी प्राप्नोति स्मरशल्यितः ॥३

वित्तवृत्तबलस्यांतं स्वकुलस्य च लांछनं मरणं वा समीपस्थं न स्मरार्त्तः प्रपश्यति ॥३८॥ न पिशाचोरगा रोगा न दैत्य

ग्रहराक्षसाः ॥ पीडयंति तथा लोकं यथायं मदनज्वरः ॥३९॥ प्रनासाद्य जनः कामी कामिनीं हृदयप्रियां ॥ विषश

स्त्रानलोपायैः सद्यः स्वं हंतुमिच्छति ॥४०॥ दक्षो मूढः क्षमी क्षुद्रः शूरो भीरुर्गुरुर्लघुः ॥ तीक्ष्णः कुंठो वशी भ्रष्टो ज

नः स्यात्स्मरवंचितः ॥४१॥ कुर्वंति वनिताहेतोरचिंत्यमपि साहसं ॥ नराः कामहठात्कारविधुरीकृतचेतसः ॥४२॥ उन्म

लयति विश्रांतं पूज्यं श्रीधर्मपादपं ॥ मनोभवमहादंती मनुष्याणां निरंकुशः ॥४३॥ प्रकुप्यति नरः कामी बकुलं ब्र

ह्मचारिणं ॥ जनाय जाग्रते चौरो रजन्यां संचरन्निव ॥४४॥ स्नुषां श्वश्रूं सुतां धात्रीं गुरुपत्नीं तपस्विनीं ॥ तिरश्चीमपि क

मार्त्तो नरः स्त्रीं भोक्तुमिच्छति ॥४५॥ किंच कामशरव्रातजर्ज्जरे मनसि स्थितिं ॥ निमेषमपि बध्नाति न विवेकसुधारसः

॥४६॥

हरिहरपितामहाद्या बलिनोऽपि तथा स्मरेण विध्वस्ता ॥ त्यक्तत्रपाः यथैते स्वां कांतां नारीं न मुंचंति ॥४॥ यदि प्राप्तं त्वया
ढं नृत्वं जन्मोग्रसंक्रमे ॥ तदा तत्कुरु येनेयं स्मरज्वाला विलीयते ॥४९॥ स्मरदहनसुतीव्रानंतसंतापविद्धं भुवन
मिति समस्तं वीक्ष्य योगिप्रवीराः ॥ विगतविषयसंगाः प्रत्यहं संश्रयंते प्रशमजलधितीरं संयमारामरम्यं ॥५०॥ इत्या
कर्म
चार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे कामप्रकोपप्रकरणम् ॥ छ ॥ कुर्वंति यन्मदोद्रेकदर्पि
कर्म्मण.
ता भुवि योषितः ॥ प्रातां प्राप्तं पि तस्येह न वक्तुं कश्चिदीश्वरः ॥१॥ धारयंत्यमृतं वाचि हृदि हालाहलं विषं ॥ निसर्गकु
टिला नार्यो न विद्मः केन निर्मिताः ॥२॥ वज्रज्वलनलेखेव भोगिदंष्ट्रेव केवलं ॥ वनितेयं मनुष्याणां संतापभयदा
निकासयति
यिनी ॥३॥ उद्वासयति निःशंका जगत्पूज्यं गुणव्रजं ॥ बध्नाति वसतिं चित्ते सतामपि नितंबिनी ॥४॥ वरमालिंगिता क्रुद्धा

चंपलजिन्हा

चलद्वोलात्रसर्पिणी॥नपुनःकौतुकेनापिनारीनरकपद्धतिः॥६॥हृदिदत्तेतथादाहंस्पृष्टाकृतभुक्शिखावनितेय
थापुंसामिंद्रियार्थप्रकोपिनी॥क्षिप्तंध्वंवक्षणरागाढ्यानिम्नगेवाधरप्रिया॥वक्राबालेंदुलेखेवभवंतिनियतंस्त्रि
यः॥७॥धूमावल्यइवाशंकाःकुर्वंतिमलिनंक्षणात॥मदनोन्मादसंभ्रांतायोषितःस्वकुलंग्रहं॥निर्दयत्वमनार्य
त्वंमूर्खत्वमतिचापलं॥वंचकत्वंकुशीलत्वंस्त्रीणांदोषास्वभावजाः॥८॥विचरंतिकुशीलेषुलंघयंतिकुलक्रमं
नस्मरंतिगुरुंमित्रंपतिंपुत्रंचयोषितः॥९॥अवश्यांजनादितंत्राणिमंत्रयंत्राण्यनेकधा॥व्यर्थीभवंतिसर्वाणिवनि
तानांधनंप्रति॥१०॥अगाधक्रोधवेगांधाःकर्मकुर्वंतितत्स्त्रियः॥सद्यःपतंतियेनैतद्भुवनंदुःखसागरे॥११॥स्वातंत्र्य
मभिवांछंताःकुलकल्पमहीरुहं॥अविचार्यैवनिघ्नंतिस्त्रियोभीष्टफलप्रदं॥१२॥नदानेनचसौजन्येनप्रतिष्ठान

गौरवं न च पश्यंति कामांधाः योषितः स्वान्ययोर्हितं॥१४॥ न तत्कुद्धाहरिव्याघ्रव्यालानलनरेश्वराः। कुर्वंति यत्करोत्यं
पुरुषे
रिनारी निरंकुशा॥१५॥ या मांसाद्यत्वया कांता सोढव्या नारकी व्यथा। तस्याः वार्तापि न श्लाघ्या कथमालिंगन
॥१६॥ स कोपि स्मर्यतां देवो मंत्रो वालंब्य साहसं। यतो गनापिशाचीयं ग्रसितुं नोपसर्पति॥१७॥ एकैवं वनिता माल
चिंत्यपराक्रमा। लीलयैव यया मूढ खंडितं जगतां त्रयं॥१८॥ न तद्दृष्टं श्रुतं ज्ञानं न तच्छास्त्रेषु चर्चितं। यत्कुर्वंति
एकीकृत्य
हा पापं स्त्रियः कामकलंकिता॥१९॥ यमजिह्वानलज्वालावज्रविद्युद्विषांकुरान्। समाहृत्यैकतामन्ये वेधसेयं वि
सिनी॥२०॥ मन न स्पंन्य दृच स्यंन्य द्रपुष्यंन्या द्विचेष्टितं। यासां प्रकृतिदोषेण प्रेम तासां कियच्चिरम्॥२१॥ अप्युत्तुंगाः
चंद्रमा सूर्य
तिष्ठंति नराः नार्यैः गसंगताः। यथा वामिति लोकस्य स्तनाभ्यां प्रकटीकृतम्॥२२॥ यदींदुस्तीव्रतां धत्ते चंडरोचिश्च शी

पुरुषे

ततो दैवात्तथा पिनो धत्ते नरि नारी स्थिरं मनः ॥२२॥ देवदैत्योरगव्यालग्रहचंद्रार्कचेष्टितम् ॥ विदंति ये महाप्राज्ञास्तेपि स्त्री

त्तं न योषिताम् ॥२३॥ सुखदुःखजयपराजयजीवतमरणा । निये विजानंति मुह्यंति तेपि नूनं तत्त्व विदः स्त्रीचेष्टिते स्त्रीणां

॥२४॥ जलधेर्यानपात्राणि ग्रहाद्या गगनस्य च । यांति पारं न तु स्त्रीणां दुश्चरित्रस्य केचन ॥२५॥ आरोपयंति संदेहतु

लायामंति निर्दया । नार्यः पतिं च पुत्रं च पितरं च क्षणादपि ॥२६॥ शृंगं तिविपिने व्याघ्रं प्राकुंतं गगने स्थितं । सरि

द्गतं मीनं न स्त्रीणां चपलं मनः ॥२७॥ नानंतरं दास्ति जगत्यस्मिन्मणिमंत्रौषधांजनं । विद्यां श्रयेन सद्भावं प्रयास्यंती

दासीपुत्रैः कामदेवांकं

ह योषितः ॥२८॥ मनो भवसमं शूरं कुलीनं भुवनेश्वरम् । हत्वा स्त्रियः पतिं सद्यो रमंते चेटकासुतैः ॥२९॥ स्मरोत्संगमं

प्राप्य वांछंति पुरुषांतरं । नार्यः सर्वाः स्वभावेन वदंतीत्यमलाप्रया ॥३०॥ विनांजनेन तंत्रेण मंत्रेण विनयेन च । वं

॥ज्ञानार्णव॥

॥५६॥

घ्नंति नरं नार्यः प्रज्ञाधनमपि क्षणात् ॥३१॥ कुलजातिगुणभ्रष्टं निकृष्टं दुष्टचेष्टितं ॥ अस्पृश्यमधमं प्रायो मन्य

[पृष्ठैः महान् पराक्रमैः]

न्ते प्रियं नरं ॥३२॥ वैरिवारणदंताग्रे समारुह्य स्थिरीकृता ॥ वीरश्रीर्यैर्महासत्वैर्योषिद्भिस्तेपि खंडिताः ॥३३॥

[स्थापिता]

गौरवेषु प्रतिष्ठासु गुणेष्वाराध्यकोटिषु ॥ धृता अपि निमज्जंति दोषपंके स्वयं स्त्रियः ॥३४॥ कृत्वाप्यकार्यलक्षा

प्रत्यक्षमपि योषितः ॥ छादयंत्येव निःशंकाः विश्ववंचनपंडिताः ॥३६॥ दोषानं गुणेषु पश्यंति प्रियेकुर्वंति वि

[अंजलीकरणादिकं]

प्रियं सन्मानिताः प्रकुप्यंति निसर्गकुटिलाः स्त्रियः ॥३५॥ दानसन्मानसंभोगप्रणतिप्रतिपत्तिभिः ॥ अपि सेवा

परं नाथं घ्नंति नार्योतिनिर्दया ॥३७॥ विषमध्ये सुधास्पंदं सस्यजातं शिलोच्चये ॥ संभाव्यं न तु संभाव्यं चेतः स्त्री

[निर्दोषं]

णामकल्मषं ॥३८॥ वंध्यांगजस्य राज्यश्रीः पुष्पश्रीर्गगनस्य च ॥ स्याद्दैवान्न तु नारीणां मनः शुद्धिर्मनागपि ॥३९॥ कुल

॥५६॥

द्ध्यमहाकल्पं भस्मसात्कुरुते क्षणात्॥ दुश्चरित्रसमीरोल्लीप्रदीप्तो वनितानलः॥ ४६॥ सुराचलइवाकंपा अगाधा
वार्द्धिवन्नृपाः नीयंते त्र नराः स्त्रीभिः [कंपनं] विधूतिं क्षणांतरे॥ ४७॥ वित्तहीनो जरी रोगी दुर्बलः स्थानविच्युतः॥ कुलीनाभि
रपि स्त्रीभिः सद्यो भर्त्ता विमुच्यते॥ ४८॥ भेत्तुं शूलमसिं छेत्तुं कर्तितुं क्रकचं दृढं॥ नरान् पीडयितुं यंत्रं वेधसा विहि
ताः स्त्रियः॥ ४९॥ [संक्रम] विधुर्वधूभिर्मन्ये हं नभस्थो [वंचीत] विप्रतारितः॥ अथवा क्षीयते कस्मात्कलंकोपहतप्रभः॥ ५०॥ यद्रा
गं संध्यया धत्ते यच्च मत्यं विलंबितं॥ तन्मन्ये वनिता सार्द्धं [वंचितः] विप्रलुब्धः [सूर्यः] खरद्युतिः॥ ५१॥ प्रांतं भूत्वा नृपाः प्रौषितिवेल
व्याजेनाक्षेपते धीरोपि मथितो बद्धः स्त्रीनिमित्तं [समुद्र] सरित्पतिः॥ ५२॥ सुरेंद्रप्रतिमा धीरा अप्यचिंत्यपराक्रमाः॥ द
शग्रीवादयो याताः [निर्मिते] कृते स्त्रीणां रसातलं॥ ५३॥ दुःखखानिरगाधैयं कलेर्मूलं भयस्य च॥ पापबीजं [ज्ञाकाना मूल] शुचां कंदः

श्वभ्रावनिर्नितंबनी॥४९॥ यदि मूर्त्ताः प्रजायेरन् स्त्रीणां दोषाः कथंचन। पूरयेयुस्तथा नूनं निःशेषं भुवनोदरं॥
॥ तुकेन समाहर्तुं विश्ववर्त्यघसंचयं वेधसेयं कृता मन्ये नारी व्यसनवागुरा॥५०॥ एकं दृष्ट्वा परं भावैर्व्वाक्यैर
तन्यं गितैः संज्ञयान्यं रते श्चान्यं रमयत्यंगनाजनः॥५१॥ धीरैर्धैर्यं समालंब्य विवेकामललोचनैः। त्यक्ताः स्वप्ने
पि निःकंपैर्नार्यः श्रीसूरिपुंगवैः॥५२॥ यद्वक्तुं न बृहस्पतिः शतमखः श्रोतुं न साक्षात्क्षमस्तत्स्त्रीणामगुणव्रजं
गदितुं मन्ये न कोऽपि प्रभुः। आलोक्य स्वमनीषया कतिपयैर्वर्ण्यैर्यदुक्तं मया तच्छ्रुत्वा गुणिनस्त्यजंतु वनितासं
भोगपापग्रहं॥५३॥ परिभवफलवल्लीं दुःखदावानलालीं विषयजलधिवेलां श्वभ्रसौधप्रतोलीं। मदन
दंष्ट्रां मोहतंत्रां सवित्रीं परिहरपरिणामैः स्थैर्यमालंब्य नारीं॥५४॥ अथवा॥ यमिभिर्जन्मनिर्विण्णैर्दूषिता यद्

(Interlinear glosses: भवेत; गृहीतुं; पाशः; चेष्टितैः; इंद्रः; स्वबुध्या; पंक्ति; आलस्य जननी; संसार भीतैः)

पिस्त्रियः॥ तथाप्येकांततस्तासां विद्यते नाघसंचयः॥५५॥ ननु संति जीवलोके काश्चिच्छमशीलसंयमोपेताः॥

वंशतिलकभूताः श्रुतसत्यसमन्विता नार्यः॥५६॥ सतीत्वेन महत्त्वेन वृत्तेन विनयेन च॥ विवेकेन स्त्रियः काश्चि

द्भूषयंति धरातलं॥५७॥ निर्विण्णैर्भवसंक्रमाच्छ्रुतधरैरेकांततो निस्पृहैर्नार्यो यद्यपि निंदिताः शमधनैर्ब्र

चारित्रयुक्ताः

ह्मव्रतालंबिभिः॥ निंद्यंते न तथापि निर्मलयमस्वाध्यायवृत्तांकिता निर्वेदप्रशमादिपुण्यचरितैर्याः शुद्धिभू

५८॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे स्त्रीस्वरूपप्रतिपादनप्रकरणं॥ छ॥ स्मरज्व

धृतेन मृतदिंचिता आलिंगितः

लनसंभ्रांतो यः प्रतीकारमिच्छति मैथुनेन स दुर्बुद्धिराज्येनाग्निं निषेधति॥१॥ वरमाज्यच्छटासिक्तः परिर

अग्निः योनिस्थानं गतबुद्धयः

भ्रानः॥ न पुनर्दुर्गतेर्द्वारं योषितां जघनस्थलं॥२॥ स्मरपीतज्वरातंकशंकिताः क्षीणबुद्धयः॥ विशंति व

विरसाय
पंकेतत्प्रतीकारवांछया॥३॥वासनाजनितंमन्येसौख्यंस्त्रीसंगसंभवं सेव्यमानंयदंतेस्याद्वैरस्यायैवकेवलं॥४॥
पुंप्रतियथोन्मत्तःपश्यद्लोष्टेपिकांचनं॥मैथुनेपितथासौख्यंप्राणीरागांधमानसः॥५॥अपथ्यानियथारोगीप-
निर्लज्ज विध्याप्यं वर्द्धित
थ्यबुध्यानिषेवते॥सुखबुध्यातथांगानिस्त्रीणांकामीगतत्रपः॥६॥दीकश्चिच्युतेयथादीपंनिर्वाणमपिनिंदितं॥म-
विषपक्वफलसदृश प्रथमसमये
रमूढःसुखंतद्वद्दुःखमप्यत्रमैथुनं॥७॥किंपाकफलसमानंवनितासंभोगसंभवंसौख्यं॥आपातेरमणीयंप्र-
यतेविरसमवसाने॥८॥मैथुनाचरणेकर्मनिर्घृणैःक्रियतेधमं॥पीयतेवदनंस्त्रीणांलालांबुकलुषीकृतं॥९॥कं-
कुष्टरोगी कामस
डूयनंतनुखेदाद्देतिकुष्टीयथासुखं॥तीब्रस्मररुजातंकपीडितोमैथुनंतथा॥१०॥अशुचीन्यंगनांगानिस्मरा-
विषपीडीता
र्त्तीविषमूर्छिता॥जिह्वाभिर्विलिहंत्युच्चैःशुनीनामिवकुक्कुराः॥११॥ग्लानिर्मूर्छाभ्रमःकंपःश्रमःस्वेदोंगवि-

उदये ज्ञानासी

मर्माणि विपाके ज्ञास्यसि स्वयं ॥२०॥ मैथुनाचरणे मूढ म्रियंते जंतुकोटयः ॥ योनिरंध्रसमुत्पन्ना लिंगसंघट्टपी
डिताः ॥२१॥ बीभत्सानेकदुर्गंधमलाक्तं स्वकलेवरं ॥ यत्र तत्र वपुः स्त्रीणां कस्यास्तु रतये भुवि ॥२२॥ उक्तं च ॥ उन्ना
नोच्छूनमंडूकदारितोदरसन्निभे ॥ चर्मरंध्रे मनुष्याणां मंपूर्वः कोप्यसद्ग्रहः ॥२३॥ सर्वाशुचिमये काये दुर्गंधामे
ध्यसंभृते ॥ रमंते रागिणः स्त्रीणां विरमंति तपस्विनः ॥२४॥ कुथितकुणपगंधं योषितां योनिरंध्रं कृमिकुलशत
पूर्णं निर्झरत्क्षारवारि ॥ त्यजति मुनिनिकायः क्षीणजन्मप्रबंधो भजति मदनवीरप्रेरितो गीर्वराकः ॥२५॥ इ
त्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे मैथुनप्रकरणं ॥१३॥ विरज्यायोषसंगेभ्यो यो वृणीते

कुपितसर्प सदृशा

पिवप्रियं सकृद्दाह रिवास्त्रीणां संसर्गाद्विनिवर्तते ॥१॥ यथा सद्यो विलीयंते गिरयो वज्रताडिताः ॥ तथा मत्तैर्मनापि

कथाच

याः॥ क्षयरोगादयो दोषाः मैथुनोत्थाः शरीरिणाम्॥१२॥ अनेकदुःखसंतान निदानं विद्धि मैथुनं॥ कथं तदपि

धबुद्धय॥१३॥ कुष्टव्रण मिवाजस्रं वाति स्रवति पूतिकं॥ यत्स्त्रीणां जघनद्वारं रतये तद्धि रागिणां॥१

काकः कृमिकुलाकीर्णे करंते कुरुते रतिम्॥ यथा तद्वद्वराकोयं कामी स्त्रीगुह्यमंथने॥१५॥ व्रणकुंभपिल

दुर्गंधे मूत्रपूर्णे तद्वारे॥ जघनविले वनितानां रमते बालो नं तत्वज्ञः॥१६॥ स्वतालुरक्तं किल कुक्कुरः धमैः

यतेयद्वद्दिहास्थि चर्वणात्॥ तथा विटे र्विद्धि वपुर्विडंबनै र्निषेव्यते मैथुनसंभवं सुखं॥१७॥ अस्पृश्यविधे

गेषु संगताः पश्यरागिणः॥ जुगुप्सां जनयंत्येते लोलंतः कृमयो यथा॥१८॥ योनिरंध्रमिदं स्त्रीणां दुर्गतेर्द्वारमं

ग्रिमं॥ तत्यजंति ध्रुवं धन्या नदीना दैववंचिता॥१९॥ मालतीवं मृदून्यासां विद्धि चांगानि योषितां॥ दारयिष्यं

निकटवर्त्ती
यावन्नितंबिनीभोगिभ्रकुटिंनसमीक्षते॥११॥यासांसंकल्पलेशोऽपितनोतिमदनज्वरं॥प्रत्यासत्तिर्न्नकिंतासांक्षो
शोषयति
णंद्धिचरणश्रियं॥१२॥यस्याःसंसर्गमात्रेणयतिभावःकलंकते॥तस्याःकिंनकथालापैर्भ्रूभंगैश्चारुविभ्रमैः॥
परिहृतं दृष्टं
१३॥सुचिरंसुष्टुनिर्णीतिलब्धंवावृद्धसंनिधौ॥लुप्यतेस्त्रीमुखालोकाद्वृत्तरत्नंशरीरिणाम्॥१४॥पुस्तोपलविनिष्प
न्नंदारुचित्रादिकल्पितं॥अपिवीक्ष्यवपुःस्त्रीणांमुह्यत्यंगीनसंशयः॥१५॥दृष्टिपातोभवेत्पूर्वंव्यामुह्यतिततोम
नः॥प्रणिधत्तेजनःपश्चात्तत्कथागुणकीर्त्तने॥१६॥ततःप्रेमानुबंधःस्यादुन्नयोरपिनिर्भरं॥उत्कंठतेततश्चेतःप्रे
परमकोटीसीमां
मकाष्ठाप्रतिष्टितां॥१७॥दानदाक्षिण्यविश्वासैरुन्नयोर्वर्द्धतेस्मरः॥ततःशाखोपशाखाभिःप्रीतिवल्लीविसर्प्पति
क्रीडा
१८॥मनोमिलतिचान्योन्यंनिःशंकंसंगलालसं॥प्रणश्यतिततोलज्जाप्रेमप्रसरपीडिता॥१९॥निःशंकीकुरुतेन

प्रहारेणाल्पचेतसः॥३॥यस्तपस्वीव्रतीमौनीसंव्रतात्माजितेंद्रियः॥कलंकयतिनिःशंकंस्त्रीसखःसोपिसंयमं
॥४॥मासेमासेव्यतिक्रांतेयःपिबंत्यंबुकेवलं॥विमुह्यतिनरःसोपिसंगमासाद्ययोषितः॥५॥सर्वत्राप्युपचीयंतेसं
यमाद्यास्तपस्विनाम्॥गुणाःकिंत्वंगनासंगंप्राप्यंयांतिक्षयंक्षणात्॥६॥संचरंतिजगत्यस्मिन्स्वेच्छयाया
॥विलीयंतेपुनर्नारीवदनेंदुविलोकनात्॥७॥तावद्धत्तेमुनिःस्थैर्यंश्रुतंशीलंकुलक्रमं॥यावन्मत्तांग
त्रवागुराभिर्निरुध्यते॥८॥नवनीतनिभंपुंसांमनःसद्योविलीयते॥वनितावह्निसंतप्तंसतामपिनसंशयः॥
अंतःसुप्तोपिजागर्तिस्मरःसंगेनयोषिताम्॥रोगव्रजइवापथ्यसेवासंभावितात्मनाम्॥१०॥क्रियतेयैर्मन
स्थैर्यंश्रुतप्रशमसंयमैः॥तेपिसंसर्गमासाद्यवनितानांक्षयंगताः॥११॥स्थिरीकृत्यमनस्तत्त्वेतावत्तिष्ठतिसं

एकांते
रहोजल्पावलंबितं वीक्षणादीधनोद्धतः कामाग्निः प्रविजृंभते ॥२०॥ बहिरंतस्ततस्तेन दह्यमानोग्निना भृशं ॥ अ
विचार्य जनः शीघ्रं ततः पापे प्रवर्तते ॥२१॥ श्रुतं सत्यं तपः शीलं विज्ञानं व्रतमुत्तमम् ॥ इंधनी कुरुते मूढः प्रवि
ष्टः वनितानले ॥२२॥ स्फुरंति हृदि संकल्पा ये स्त्रीव्यासक्तचेतसां ॥ रागिणां तानिह भ्रातर्न कोपि गदितुं क्षमः ॥ पु
२३॥ संसर्गप्रभवा नूनं गुणा दोषाश्च देहिनाम् ॥ एकांततः सदोषाय स्त्रीभिः सार्द्धं कृतः क्षणात् ॥२४॥ पुण्यानुष्ठान
संभूतं महत्वं क्षीयते नृणाम् ॥ सद्यः कलंकातेवृत्तं साहचर्येण योषिताम् ॥२५॥ अपवादमहापंके निमज्जंति न संश
यमिनोपि जगद्वंद्यवृत्तेरामास्पदं श्रिताः ॥२६॥ अनंतमहिमाकीर्णं प्रोत्तुंगं वृत्तपादपं ॥ वामा कुठारधारेयं विछिन
त्याशु देहिनाम् ॥२७॥ लोचनेषु मृगाक्षीणां क्षिप्तोंकिंचित्तदंजनं ॥ येनापांगैः क्षणादेव मुह्यत्यासां जगत्त्रयं ॥२८॥ कौतुके

भ्रमेणापि दृष्टिर्लग्नांगनामुखे। क्रष्टुं न शक्यते लोकैः पंकमग्नेव हस्तिनी॥२९॥ एकत्र वसतिः साध्वी वरं व्याघ्रोर
ःसहापि शाचैर्न तु नारीभिर्निमेषमपि शस्यते॥३०॥ भ्रूलताचलनैर्येषां स्खलत्यमरमंडली। तेपि संसर्गमात्रेण
वनितानां विडंबिता॥३१॥ त्यजंति वनिताचौररुद्धाश्चारित्रमौक्तिकं। यतयोपि तपोभंगकलंकमलिनानना॥३
स्वचर्यच्युतः सद्यो महानप्येवमन्यते। सर्वैरपि जनैर्लोके विध्यात इव पावकः॥३३॥ विशुध्यति जगद्येषां
पादपांशुभिः सवं चिताबकुशास्तेपि वनितापांगवीक्षणात्॥३४॥ तपःश्रुतकृताभ्यासा ध्यानधैर्यावलंबिनः। अयं
यमिनः पूर्वं योषाभिः कश्मलीकृता॥३५॥ उह्यते यत्र मातंगैर्नगोत्तुंगैर्जलप्लवे। तत्र बूढा न संदेहः प्रागेव मृग
का॥३६॥ इह हि वदनकंजं हावभावालसाढ्यं मृगमदललितांकं विस्फुरद्भ्रूविलासं। क्षणमपि रमणीनां लो

नैर्वीक्ष्यमाणां जनयति हृदि कंपं धैर्यनाशं च पुंसां ॥ ३४ ॥ यासां सीमंतिनीनां कुरवकतिलकाशोकमाकंदवृक्षाः प्रा
प्यो च्चैर्विक्रियंते ललितभुजलतालिंगनादीन्विलासान् ॥ तासां पूर्णेंदुगौरं मुखकमलमलं वीक्ष्य लीलालस
ढ्यं को योगी यस्तदानीं कलयति कुशलो मानसं निर्विकारं ॥ ३५ ॥ यावद्वत्ते प्रतिष्ठां परिहरति मनश्चापलं चैष तत्
वत्तावत्सिद्धांतसूत्रं स्फुरति हृदि परं विश्वतत्वैकरूपं ॥ क्षीराकूपारवेलावलयविलसितैर्मानिनीनां कटाक्षैर्यो
वन्नो हन्यमानं कलयति हृदयं दीर्घदोलायितानि ॥ ३६ ॥ संसर्गाद्दुर्बलां दीनां संत्रस्तामप्यनिच्छतीम् । कुष्टिनं
रोगिणीं जीर्णां दुःखितां क्षीणविग्रहाम् ॥ ३७ ॥ निंदितां निंद्यजातीयां स्वजातीयां तपस्विनीम् । बालामपि तिर
श्रीं स्त्रीं कामी भोक्तुं प्रवर्तते ॥ ३८ ॥ अंगनापांगबाणालीं प्रपतंतीं निवारय । विधाय हृदयं धीर दृढं वैराग्यवर्मितं

॥ ४२ ॥

ब्रह्मचर्यविशुद्ध्यर्थं संगः स्त्रीणां न केवलं। त्याज्यः पुंसामपि प्रायो विटविद्यावलंबिनां ॥४४॥ मदांधैः कामुकैः

[शून्यवादी] [परमागमे]

चक्रैर्मार्गविच्युतैः। स्तब्धलुब्धाधमैः सार्द्धं संगो लोकद्वयांतकः ॥४४॥ सूत्रे दत्तावधानाः प्रशमयमतपो

[संत्यक्ता?]

लब्धावकाशाः शश्वत्संन्यस्तसंगा विमलगुणमणिग्रामभाजः स्वयं ये। श्रूयंते कामिनीनां स्तनजघनमु

कनात्तेपि भग्ना मज्जंतो मोहवार्द्धौ जिनपतियतयः प्राक्प्रसिद्धा कथासु ॥४५॥ इत्याचार्यश्रीशुभचंद्रवि

रचिते ज्ञानार्णवे योगप्रदीपाधिकारे संसर्गप्रकरणम् ॥१७॥ लोकद्वयविशुद्ध्यर्थं भावशुद्ध्यर्थमंजसा। विद्या

अर्थं वृद्धसेवैव प्रशस्यते॥१॥ कषायदहनः शांतिं याति रागादिभिः समं। चेतः प्रशांतिमाधत्ते वृद्धसेवावलंबि

[प्राप्य] [कसोटी]

नः॥२॥ निश्चलीकुरु वैराग्यं चित्तदैत्यं नियंत्रय। आसादय परां शुद्धिं वृद्धसाक्षिकां॥३॥ स्वतत्त्वनिकषोद्भूतं वि

संतोष
विकालोकवर्द्धितं येषां बोधमयं चक्षुस्ते वृद्धा विदुषां मता ।।४।। तपःश्रुतधृतिध्यानविवेकयमसंयमैः । ये वृद्धास्ते
श्वेतकेशैः
ऽत्र शस्यंते न पुनः पलितांकुरैः ।।५।। प्रत्यासत्तिं समायातैर्विषयैः स्वांतरंजकैः । न धैर्यं स्खलितं येषां ते पि वृद्धा बुद्धिम
मनः
कलंकता
ता ।।६।। न हि स्वप्नेपि संजाता येषां सद्वृत्तवाच्यता । यौवनेपि मता वृद्धास्ते धन्याः शीलशालिनः ।।७।। किंच । प्रायः
शरीरशैथिल्यात्स्यात्स्वस्थामतिरंगिनां । यौवने तु क्वचित्कुर्याद्दृष्टतत्त्वोपि विक्रियां ।।८।। वार्द्धके न वपुर्द्धत्ते शैथि
ल्यं च यथा यथा । तथा तथा मनुष्याणां विषयाशा निवर्तते ।।९।। हीमांश्चरणसंभ्रांतो वृद्धोपि तरुणायते तरुणो
शिक्षादायिनी
पि सतां धत्ते श्रियं सत्संगवासित ।।१०।। सा क्षाद्वृद्धाननुसेवेयं मातेव हितकारिणी । विनेत्री वा ऽभानां दीपिकेवार्थदर्शि वागि
नी ।।११।। कदाचिद्दैववैमुख्यान्मातापि विकृतिं भजेत् । न देशकालयोः क्वापि वृद्धसेवा कृता सती ।।१२।। अंधएववरं

कौं मौनमतां यस्य भारती ॥ श्रुतिरंध्रे समासाद्य प्रस्फुरत्यधिकं हृदि ॥१३॥ सत्संसर्गसुधास्पंदैः पुंसां हृदि पवि

कमलं नविकाशितं

ज्ञानलक्ष्मीः पदं धत्ते विवेकमुदिता सती ॥१४॥ वृद्धोपदेशधर्म्मांशुं प्राप्य चित्तकुशेशयं न प्राबोधि कथं त

अप्रेव्यमान प्रमाणंकरोति

यमश्रीः स्थितिं दधे ॥१५॥ अनुपास्यैव यो वृद्धमंडलीं मंदविक्रमः ॥ जगत्तत्वस्थितिं वेत्ति स मिमीते नभः करैः ॥

प्रसरति आच्छादितं

॥१६॥ प्रीतांशुरश्मिसंपर्कात् वृद्धिसर्प्पति यथांबुधिः ॥ तथा सद्वृत्तसंसर्गान्नृणां प्रज्ञापयोनिधिः ॥१७॥ अनेरा

नीकरोति अग्निं

ध्नाति विध्याप्यांशा हविर्भुजं ॥ आमाद्यं यमिनां योगी वाक्पथातीतसंयमं ॥१८॥ वृद्धानुजीविनामेव स्यु

सुप्राप्येषु

रित्रादिसंपदः ॥ भवत्यपि च निर्लेपं मनः क्रोधादिकश्मलं ॥१९॥ सुलभेष्वपि भोगेषु नृणां तृष्णा निवर्तते ॥ स

सुवितै

मर्गसुधास्पंदैः प्राश्वदीकृतात्मनां ॥२०॥ कातरत्वं परित्यज्य धैर्यमेवावलंबते ॥ सत्संगजपरिज्ञानरंजि

त्माजनः स्वयं ॥२१॥ पुण्यात्मनां गुणग्रामसीमासंसक्तमानसैः ॥ तीर्यते यमिभिः किं न कुविद्यागरसागरः ॥२२
तत्वे तपसि वैराग्ये परां प्रीतिं समश्नुते ॥ हृदि स्फुरति यस्योच्चैर्वृद्धवाग्दीपसंततिः ॥२३॥ मिथ्यात्वादिनगोत्तुंग
शृंगभंगाय कल्पितः ॥ विवेकः साधुसंगोत्थो वज्रादप्यजयो नृणां ॥२४॥ अप्यनादिसमुद्भूतं क्षीयते निविडं त
मः ॥ वृद्धानुयायिनां च स्याद्विश्वतत्वैकनिश्चयः ॥२५॥ अंतःकरणजं कर्म्म यः स्फोटयितुमिच्छति ॥ स योगिवृंद
माराध्य करोत्यात्मन्यवस्थितिं ॥२६॥ एकैव महतां सेवा स्याज्जेत्री भुवनत्रये ॥ ययैव यमिनामुच्चैरंतर्ज्योति
र्विजृंभते ॥२७॥ वृद्धाश्रुत्वा यमी योगी पुण्यानुष्टानमूर्जितं ॥ आक्रामति निरातंकः पदवीं तैरुपासितां ॥२८॥ वि
श्वविद्यासु चातुर्य्यं विनयेष्वतिकौशलं ॥ भावसिद्धिः स्वसिद्धांते सत्संगादेव देहिनां ॥२९॥ यथात्र शुद्धिमाध

स्वर्णमित्यंतमग्निना मनः शुद्ध्यति तथा ध्यानी योगिसंसर्गवह्निना ॥३०॥ भयलज्जाभिमानेन धैर्यमेवावलंब
संगर्ग
ते। साहचर्यं समासाद्य संयमी पुण्यकर्मणां ॥३१॥ शरीराहारसंसारकामभोगेष्वपि स्फुटं। विरज्यति नरः क्षिप्रं
परमागमे स्थापितः
सद्भिः सूत्रे प्रतिष्ठितः ॥३२॥ यथा यथा मुनिर्द्धत्ते चेतः सत्संगवासितं। तथा तथा तपोलक्ष्मीः परां प्रीतिं प्र
रक्षणाशीलं
यते ॥३३॥ उक्तं च ॥ नहि भवति निर्विगोपकमनुपासितगुरुकुलस्य विज्ञानं। प्रकटितपश्चिमभागं पश्य
तनृत्तं मयूरस्य ॥३४॥ तपः कुर्वंतु वा मा वा चेद्वृद्धान् समुपासते। तीर्त्वा व्यसनकांतारं याति पुण्यां गतिं नराः ॥
प्राप्यते
३५॥ कुर्वन्नपि तपस्तीव्रं विदन्नपि श्रुतार्णवं। नासादयति कल्याणं चेद्वृद्धानवमन्यते ॥३६॥ मनोभिमतनिः
संगर्ग
लसंपादनक्षमं। कल्पवृक्षमिवोदारं साहचर्यं महात्मनां ॥३७॥ जायते यत्समासाद्य न हि स्वप्नेपि दुर्मतिः

मुक्तिबीजं तदेकं स्यादुपदेशाक्षरं सतां ॥३८॥ तन्न लोके परं धाम न तत्कल्याणमग्रिमं । यद्योगिपदराजीवसंश्रि

तैर्नाधिगम्यते ॥३९॥ अंतर्लीनमपि ध्वांतमनादिप्रभवं नृणां । क्षीयते साधुसंसर्गप्रदीपप्रसराहतं ॥४०॥ दहति

संयम संसार

दुरितकक्षं कर्मबंधं लुनीते वितरति यमसिद्धिं भावशुद्धिं तनोति । नयति जननतीरं ज्ञानराज्यं च दत्ते ध्रुवमि

प्रधान

ह मनुजानां वृद्धसेवैव साध्वी ॥४१॥ वृद्धसेवा ॥ विरम विरम संगान्मुंच मुंच प्रपंचं विसृज विसृज मोहं विद्धि वि

द्धि स्वतत्त्वं । कलय कलय वृत्तं पश्य पश्य स्वरूपं कुरु कुरु पुरुषार्थं निर्वृतानंदहेतोः ॥४२॥ अतुलसुखनिधा

संकल्पविकल्पं

नं ज्ञानविज्ञानबीजं विलयगतकलंकं शांतविश्वप्रचारं । गलितसकलशंकं विश्वरूपं विशालं भज विगत

समुद्रस्य

विकारं स्वात्मनात्मानमेव ॥४३॥ धन्यास्ते मुनिमंडलस्य गुरुतां प्राप्ताः स्वयं योगिनः शुध्यत्येव जगत्त्रयी शमवा

श्रीपादरागांकिता॥ तेषां संयमसिद्धयः सुकृतिनां स्वप्नेपि येषां मनो नालीढं विषयैर्न कामविशिखैर्न्नीवा
चनैः॥४४॥ येषां वाग्भुवनोपकारचतुरा प्रज्ञा विवेकास्पदं ध्यानध्वस्तसमस्तकर्मकवचं वृत्तं कलंकोज्झितं

रहितं

काम बाण रोगान् शोभ

सम्यग्ज्ञानसुधातरंगनिचयैश्चेतश्च निर्व्वापितं धन्यास्ते प्रशमयंत्वनंगविशिखव्यापारजातां रुजं॥४५॥ चं

मानैः आयुधविशेषै मुनीना

चद्भिश्चिरमप्यनंगपरशुप्रख्यैर्न्न धूलोचनैर्येषामिष्टफलप्रदः कृतधियां नोच्छेदि शीलद्रुमः॥ धन्या
स्तु संततमिलत्दुर्व्वारकामानलज्वालाजालकरालमानसमिदं विश्वं विवेकांबुभिः॥४६॥ यदि विषयपि

शीघ्रं नष्टः अधिक्यतां

शाची निर्गता देहगेहात्सपदि यदि विशीर्णा मोहनिद्रातिरेकः॥ यदि युवतिकरंके निर्ममत्वं प्रपन्नो झ्यगि

त्वं कुरु मार्ग

ननु विधेहि ब्रह्मवीथीविहारं॥ अस्मरमोगीद्दुर्व्वारविषयानलकरालितं॥ जगद्यैः शांतिमानीतं ते जिनाः

तुन्नांतये ॥५० ॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे ब्रह्मप्रकरणं ॥ ७ ॥ यानपात्रमि
वांभोधौ गुणवानपि मज्जति ॥ परिग्रहगुरुत्वेन संयमी जन्मसागरे ॥१॥ बाह्यांतर्भूतभेदेन द्विधा ते स्युः परि (परिग्रहाः)
ग्रहाः ॥ चिदचिद्रूपिणो बाह्या अंतरंगाश्च चेतनाः ॥२॥ दशग्रंथा मता बाह्या अंतरंगाश्चतुर्दश ॥ तान्मुक्त्वा भ
व निःसंगो भावशुद्ध्या भृशं मुने ॥३॥ निःसंगोपि मुनिर्न स्यात्समूर्छः संगवर्जितः ॥ यतो मूर्छैव तत्त्वज्ञैः सं
(परिग्रहोत्पत्तिः)
गसूतिः प्रकीर्तिता ॥४॥ स्वजनधनधान्यदाराः पशुपुत्रपुराकरा गृहं भृत्याः ॥ मणिकनकरजतशय्या
(परिग्रहाः)
वस्त्राभरणादि बाह्यार्थाः ॥५॥ उक्तं च ॥ मिथ्यात्ववेदरागा दोषा हास्यादयोपि षट् चैव ॥ चत्वारश्च कषा
याश्चतुर्दशाभ्यंतरा ग्रंथाः ॥ इति ॥६॥ संवृतस्य सुवृत्तस्य जिताक्षस्यापि योगिनः ॥ व्यामुह्यति मनः क्षिप्रं

(margin: क्षेत्रं वास्तु धनं धान्यं द्विपदाश्च चतुःपदा शयनासनं यानं च कुप्यं भांडममी दश)

पीडितं
धनांगनाव्यालविप्लुतां ॥७॥ त्याज्य एवाखिलः संगो मुनिभिर्मोक्तुमिच्छुभिः ॥ स चेत्त्यक्तुं न शक्नोति कार्यस्तर्ह्यात्म
र्शिभिः ॥८॥ नाणवोऽपि गुणा लोके दोषाः शैलेंद्रसन्निभाः ॥ भवंत्यत्र न संदेहः संगमासाद्य देहिनाम् ॥९॥ अंतर्बा
गच्छति
भुवोः शुद्ध्योर्योगाद्योगी विशुध्यति ॥ न ह्येकं पत्रमालंब्य व्योम्नि पत्री विसर्पति ॥१०॥ साध्वीयं स्याद्बहिः शुद्धिरंतः
शुद्ध्यात्र देहिनाम् ॥ फल्गुभावं भजत्येव बाह्याऽऽध्यात्मिकीं विना ॥११॥ संगात्कामस्ततः क्रोधस्तस्माद्धिंसा तयाऽशु
उत्पद्यंते
तेन श्वाभ्री गतिस्तस्यां दुःखं वाचामगोचरं ॥१२॥ संग एव मतः सूत्रे निःशेषानर्थमंदिरं ॥ येनासंतोऽपि सूयंते रागा
संतोष·　दूरीक्रियते
रिपवः क्षणात् ॥१३॥ रागादिविजयः सत्यं क्षमा शौचं वितृष्णता ॥ मुनेः प्रच्याव्यते नूनं संगैर्व्यामोहितात्मनः ॥१४॥ संगाः
प्राणिभिः शरीरं　इंद्रियसमूहं
साद्यं स्वीक्रियंते शरीरिभिः ॥ तत्त्यागैव मुनिः सारं योगिभिः परिकीर्तितम् ॥१५॥ हृषीकराक्षसानीकं कषा

क्लेशतां समीपत्वं

भुजगव्रजं वित्तामिषमुपादाय धत्ते कामप्युदीर्णतां ॥१६॥ उन्मूलयति निर्वेदविवेकद्रुममंजरीं । प्रत्यासत्तिं स

कामबाणैः व्यापितः

मायातः सतामपि परिग्रहः ॥१७॥ लुप्यते विषयव्यालैर्भिद्यते मारमार्गणैः । रुध्यते वनिताव्याधैर्नरः संगैरभिद्रुतः ॥

बाणैः मेरुं

१८॥ यः संगपंकनिर्मग्नोऽप्यपवर्गाय चेष्टते । स मूढः पुष्पनाराचैर्विभिंद्यात्त्रिदशाचलं ॥१९॥ अणुमात्रादपि ग्रंथान्

मोहग्रंथिर्दृढी भवेत् । विसर्पति ततस्तृष्णा यस्यां विश्वं न शांतये ॥२०॥ परीषहरिपुव्रातं तुच्छवृत्तैकभीतिदं । वीक्ष्य

धैर्यं विमुंचंति यतयः संगसंगताः ॥२१॥ सर्वसंगपरित्यागः कीर्तितः श्रीजिनागमे । यस्तमेवान्यथा ब्रूते स हीनः स्वान्

धन पिशाच

घातकः ॥२२॥ यमप्रशमजं राज्यं तपःश्रुतपरिग्रहं । योगिनोऽपि विमुंचंति वित्तवेतालपीडिताः ॥२३॥ पुण्यानुष्ठानजा

विघ्नं

तेषु निःशेषाभीष्टसिद्धिषु । कुर्वंति नियतं पुंसां प्रत्यूहं धनसंग्रहाः ॥२४॥ अत्यक्तसंगसंतानो मोक्तुमात्मानमुद्यत

तेजः मेरु

बध्नन्नपिनजानातिस्वंधनैःकर्मबंधनैः॥२५॥अपिसूर्यस्त्यजेद्धामस्थिरत्वंवासुराचलः।नपुनःसंगसंकीर्णोमु

नपुंसक

स्यात्संवृत्तेंद्रियः॥२६॥बाह्यानपिचयःसंगात्परित्यक्तुमनीश्वरः।सक्लीवःकार्मणंसैन्यंकथमग्रेहनिष्यति॥२७॥

धनं कर्दमे

द्वल्मीकंरागाद्यरिनिकेतनं।क्रीडास्पदमविद्यानांबुधैर्वित्तंप्रकीर्तितं॥२८॥अत्यल्पेपिधनजंबालेनिमग्नोगु

पेजगत्यस्मिन्जनःक्षिप्रंदोषलक्षैःकलंक्यते॥२९॥संन्यस्तसर्वसंगेभ्योगुरुभ्योप्यतिशंक्यतेधनिभि

भयात्

रात्रावपिनसुप्यते॥३०॥सुतस्वजनभूपालदुष्टचौरारिविद्रवात्।बंधुमित्रकलत्रेभ्योधनिभिःशंक्यतेभृशम्॥३१॥

ध्मातियज्जीवोधनाशाकश्मलीकृतः।तस्यत्रांतिर्यदिक्लेशाद्दुर्भिर्जन्मकोटिभिः॥३२॥सर्वसंगविनिर्मुक्त

वृत्ताक्षःस्थिराशयः।धत्तेध्यानधुरांधीरःसंयमीवीरवर्णिताम्॥३३॥संगपंकात्समुत्तीर्णोनैराश्यमवलंबते। ॥५७॥

पराधीनैः तिष्ठंते

नाक्रम्यते दुःखैः पारतंत्र्यैः क्वचिन्मुनिः ॥३४॥ यावंतः कुरुते जंतुः संबंधान्मनसः प्रियान् । तावंतोऽस्य निषन्यंते हृदये शोक

शल्यं चटके

संकुले ॥३५॥ मार्जारभक्षिते दुःखं यादृशं गृहकुक्कुटे । न तादृक् ममताशून्ये कलविंकेऽथ मूषके ॥३६॥ विजने जनसंकी

मुक्तः

र्णे सुस्थिते दुःस्थितेऽपि वा । सर्वत्राप्रतिबद्धः स्यात्संयमी संगवर्जितः ॥३७॥ दुःखमेव धनव्यालविषविध्वस्तचेतसां ।

विदार्यते मांससहितः

अर्जने रक्षणे नाशे पुंसां तस्य परिक्षये ॥३८॥ स्वजातीयैरपि प्राणी सद्यो निर्धूयते धनी । यथात्र सामिषः पक्षी पक्षि

बद्धमंडले ॥३९॥ आरंभो जंतुघातश्च कषायश्च परिग्रहात् । जायतेऽत्र ततः पातः प्राणिनां श्वभ्रसागरे ॥४०॥ न स्याद्ध्या

तुं प्रवृत्तस्य चेतः स्वप्नेऽपि निश्चलं । मुनेः परिग्रहग्राहैर्भिद्यमानमनेकधा ॥४१॥ सकलविषयबीजं सर्वसावद्यमूलं नर

आश्रय नाशं पापः पुमांण

कनगरकेतुं वित्तजातं विहाय । अनुसर मुनिवृंदानंदसंतोषराज्यमभिलषसि यदि त्वं जन्मबंधव्यपायं ॥४२॥ एनः को

धनप्रशक मनसां नामादिहिंसादिनां [भनस्य] कस्तस्यार्जनरक्षणक्षयकृतैर्नादाहि दुःखानलैः तत्प्रागेव विचार्य वर्जय वरं
मूढ वित्तस्पृहां येनैकास्पदतां न पासि विषये पापस्य तापस्य च ॥४३॥ एवं तावदहं लभेय विभवं रक्षेयमेवं ततस्तद्वृ
येयमेवमनिशं भुंजीय चैवं पुनः इत्या [शार] शारुद्धमानसमृगं नात्मानमुत्पश्यति क्रुद्धक्रूरकृतांतदंत
यंत्रांतरालस्थितं ॥४४॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे परिग्रहदोषविचारप्र०
॥छ॥ बाह्यांतर्भूत निःशेषसंगसंन्यास [त्याग] सिद्धये आशां सद्भिर्निराकृत्य नैराश्यमवलंबितं ॥१॥ यावद्यावच्छरी
धनाशा वा विसर्पति तावत्तावन्मनुष्याणां मोहग्रंथिर्दृढी भवेत् ॥२॥ अनिरुद्धा सती शश्वदाशा विश्वं प्रसर्पति
मूलासौ पुनश्छेत्तुं न शक्यते ॥३॥ यद्याशाशांतिमायाता तदा सिद्धं [वांछितं] समीहितं अन्यथा भवसंभूतो दुःख

द्विर्दुरुत्तरः ॥४॥ यम प्रशमराज्यस्य सद्बोधांकोदयस्य च विवेकस्यापि लोकानामाशैव प्रतिषेधिका ॥५॥ आशामपि
नं सर्पतीयः क्षणं रक्षितुं क्षमः तस्यापवर्गसिद्ध्यर्थं वृथा मन्ये परिश्रमं ॥६॥ आशैव मदिराक्षाणामाशैव विषमंजरी
आशामूलानि दुःखानि प्रभवंतीह देहिनां ॥७॥ तावन्मुखिनो धीरा यैरांशा राक्षसी हता महाव्यसनसंकीर्णः श्वोत्ती

मोहपाशाः

र्णः क्लेशसागरः ॥८॥ येषामाशा कुतस्तेषां मनःशुद्धिः शरीरिणां अतो नैराश्यमालंब्य शिवीभूता मनीषिणः ॥९॥
सर्वाशां यो निराकृत्य नैराश्यमवलंबते तस्य क्वचिदपि स्वांतं संगपंकैर्न लिप्यते ॥१०॥ तस्य सत्यं श्रुतं वृत्तं विवेकस्

विनाशं — अमर्यादः

त्वनिश्चयः ॥ निर्ममत्वं च यस्याशापिशाची निधनं गता ॥११॥ यावदाशानलश्चित्ते जाज्वलीति विशृंखलः तावत्तव

पुरुषं — बद्धस्नेहा

महादुःखदाहशांतिः कुतस्तनी ॥१२॥ निराशातासुधापूरैर्यस्य चेतः पवित्रितं तमालिंगति सोत्कंठं शमश्रीर्बद्धसौहृदा
॥१३॥

नमज्जंति मनो येषामाशांभसि दुरुत्तरे। तेषामेव जगत्यस्मिन् फलितो ज्ञानपादपः॥१७॥ शक्रोऽपि न सुखी स्वर्गे स्या-
दाशानलदीपितः। विध्याप्याशानलज्वालां श्रयंति यमिनः शिवं॥१८॥ चरस्थिरार्थजातेषु यस्याशा प्रलयं गता।
किं न तस्य लोकेऽस्मिन् मन्ये सिद्धं समीहितं॥१९॥ चापल्यं त्यजति स्वांतं विक्रियाश्चाक्षदंतिनः। प्रशाम्यति
श्च नैराश्याधिष्ठितात्मनां॥२०॥ किमत्र बहुनोक्तेन यस्याशा निधनं गता। स एव महतां सेव्यो लोकद्व-
(त्यागः) (हे आचर)
य॥२१॥ आशा जन्मोग्रपंकाय शिवायाशाविपर्ययः। इति सम्यक् समालोच्य यद्धितं तत्समाचर॥२२॥ न स्याद्विक्षि-
(गतविकल्पाः) (आशापिशाचीनष्टाः)
प्तानां स्वेष्टसिद्धिः क्वचिन्नृणां। कथं प्रक्षीणविक्षेपा भवंत्याशाग्रहक्षताः॥२३॥ विषयविपिनवीथीसंकटे पर्यटंतः
झटिति घटितवृद्धिः क्वापि लब्धावकाशा। अपि नियमिनरेंद्रानाकुलत्वं नयंती छलयति खलु कं वा नेयमाशा

त्राची॥२१॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे आशापिशाचीप्रकरणं॥७॥ इति पंचमहा
व्रतानि॥ महत्त्वहेतोर्गुणिभिः श्रितानि महांति मत्वा त्रिदशैर्नुतानि महासुखज्ञाननिबंधनानि महाव्रतानीति स
तां मतानि॥१॥ उक्तं च॥ आचरितानि महद्भिर्यच्च महांतं प्रसाधयंत्यर्थं स्वयमपि महांति यस्मान्महाव्रतानीत्यत
[वाग्मनोइत्यादि] स्तानि॥२॥ महाव्रतविशुद्ध्यर्थं भावनापंचविंशतिः परमां साध्य निर्वेदपदवीं भव्य भावय॥३॥ ईर्याभाषैषणादाननि
[नामा] क्षेपोत्सर्गसंज्ञकाः सद्भिः समितयः पंच निर्दिष्टाः संयतात्मभिः॥४॥ वाक्कायचित्तजानेकसावद्यप्रतिषेधकं त्रि
योगरोधनं वा स्याद्यत्तद्गुप्तित्रयं मतं॥५॥ तद्यथा॥ सिद्धक्षेत्राणि चैत्यानि जिनबिंबानि वंदितुं गुर्वाचार्यतपोवृद्धा
न्सेवितुं व्रजतोथवा॥ दिवा सूर्यकरैः स्पृष्टं मार्गं लोकातिवाहितं दयार्द्रस्यांगिरक्षार्थं शनैः संश्रयतो मुनेः॥७

कर्कशा परुषा कटुर्निष्ठुरा परकोपिनी छेदंकरा मध्यकृशा अतिमानिनी भयंकरी भूतहिंसाकरी चेति एता दश भाषा मुक्ता ॥१॥

जुडाप्रमाण

वालोक्य यत्नेन युगमात्रा हितेक्षणः ॥ प्रमादरहितस्यास्य समितीर्या प्रकीर्तिता ॥८॥ धूर्त्तकामुककव्याद
चौरचार्वाकसेविता ॥ शंकासंकेतपापाढ्या त्याज्या भाषा मनीषिभिः ॥९॥ दशदोषविनिर्मुक्तां सूत्रोक्तां
सम्मतां ॥ गदतोऽस्य मुनेर्भाषा स्याद्भाषासमितिः परा ॥१०॥ उद्गमोत्पादसंभूतैर्धूमांगारादिकैस्तथा ॥ दोषैर्म्म
निर्मुक्तं विघ्नशंकादिवर्ज्जितम् ॥११॥ शुद्धं काले परैर्द्दत्तमनुदिष्टमयाचितं ॥ अदतोऽन्नं मुनेर्ज्ञेया एषणा
तिः परा ॥१२॥ शय्यासनोपधानानि शास्त्रोपकरणानि च ॥ पूर्वं सम्यक् समालोक्य प्रतिलिख्य पुनः पुनः ॥
१३॥ गृह्णतोऽस्य प्रयत्नेन क्षिपतो वा धरातले ॥ भवत्यविकला साधोरादानसमितिः स्फुटा ॥१४॥ विजंतुके
मूत्रश्लेष्ममलादिकं ॥ क्षिपतोऽतिप्रयत्नेन व्युत्सर्गसमितिर्भवेत् ॥१५॥ विहाय सर्वसंकल्पान् रागद्वेषावलं

न्नंस्वाधीनंकुरुत्वंचेतःसमत्वेसुप्रतिष्ठितम् ॥१६॥ सिद्धांतसूत्रविन्यासेशश्वत्प्रेरयतोथवा ॥ भवत्यविकलानाम
मनोगुप्तिर्मनीषिणः ॥१७॥ साधुसंवृत्तवाग्वृत्तेर्मौनारूढस्यवामुनेः ॥ संज्ञादिपरिहारेण ॥ वाग्गुप्तिःस्यान्महामुने ॥
मातरः
१८॥ स्थिरीकृतशरीरस्यपर्यंकंसंश्रितस्यवा ॥ परीषहप्रपातेपिकायगुप्तिर्मतामुने ॥१९॥ जनन्योयमिनाम
ष्टौरत्नत्रयविशुद्धिदाः ॥ एताभीरक्षितंदोषैर्मुनिवृंदंनलिप्यते ॥२०॥ इतिकतिपयवर्णैश्चर्चितंचित्ररूपंचरण
मनघमुच्चैश्चेतसांशुद्धिधाम ॥ अविदितपरमार्थैर्यन्नसाध्यंविपक्षैस्तदिदमनुसरंतुज्ञानिनःशांतदोषाः ॥
शीघ्र शास्त्र
२१॥ सम्यगेतत्समासाद्यत्रयंत्रिभुवनार्चितं ॥ द्रव्यक्षेत्रादिसामग्र्याभव्यःसपदिमुच्यते ॥२२॥ एतत्समयसर्वस्वं
मुक्तेश्चैतन्निबंधनं ॥ हितमेतद्धिजीवानामेतदेवाग्रिमंपदं ॥२३॥ येयातायांतियास्यंतियमिनःपदमव्ययं ॥ सम

२॥ध्यैवं तेनूनं रत्नत्रयमखंडितं॥२४॥साक्षादिदं मनासाद्यं जन्मकोटिशतैरपि॥दृष्यते न हि केनापि मुक्तिश्रीमुख
॥२५॥अथवा॥दृग्बोधचरणान्याहुः स्वमेवाध्यात्मवेदिनः॥यतस्तन्मय एवासौ शरीरी वस्तुतः स्थितः॥२६॥
आत्मा (marginal note)
ज्ञाते सति (marginal note)
निर्णीते स्मिन्स्वयं साक्षान्नापरः कोपि मृग्यते॥यतो रत्नत्रयस्यैष प्रसूतेरग्रिमं पदं॥२७॥जानाति यः स्वयं स्वा
स्वस्वरूपं गतभ्रमः॥तदेवं तस्य विज्ञानं तद्वृत्तं तच्च दर्शनं॥२८॥स्वज्ञानादेव मुक्तिः स्याज्जन्मबंधस्ततोन्यथा॥एत
देवं जिनोद्दिष्टं सर्वस्वं बंधमोक्षयोः॥२९॥आत्मैव मम विज्ञानं दृग्वृत्तं चेति निश्चयः॥मत्तः सर्वेप्यमी भावा बा
संयोगलक्षणाः॥३०॥अयमात्मैव सिद्धात्मा स्वशक्त्यापेक्षया स्वयं॥व्यक्तीभवति सद्ध्यानवह्निनात्यंतसाधि
३१॥एतदेवं परं तत्वं ज्ञानमेतद्धि शाश्वतं॥अतोन्यो यः श्रुतस्कंधः स तदर्थं प्रपंचितः॥३२॥अपास्य कल्पनाजा

चिदानंदमये स्वयं॥ यः स्वरूपे लयं प्राप्तः स स्यादुत्तत्रयास्पदं॥३१॥ सुप्ते ध्वंसेषु जागर्ति पश्यत्यात्मानमात्मनि॥ वीत

स्वयरहितं

विश्वविकल्पोयं स स्वदर्शी बुधैर्मतः॥३२॥ निःशेषक्लेशनिर्मुक्तममूर्तं परमाक्षरं॥ निःप्रपंचं व्यतीताक्षं पश्य

स्वं स्वात्मनि स्थितं॥३३॥ नित्यानंदमयं शुद्धं विश्वरूपं सनातनं॥ पश्यात्मनि परं ज्योतिरद्वितीयमनव्ययं॥३४॥ ध्येय

सिद्धं

स्यां निशि जगत्सुप्तं तस्यां जागर्ति यः स्वयं॥ निःपन्नं कल्पनातीतं स वेत्त्यात्मानमात्मनि॥३५॥ या निशा सर्वभूते

षु तस्यां जागर्ति संयमी॥ यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥३६॥ यस्य हेयं न चादेयं निःशेषं भुवनत्र

यं॥ उन्मीलयति विज्ञानं तस्य स्वान्यप्रकाशकं॥३७॥ दृश्यंते भुवि किं न तेल्पमतयः संख्याव्यतीताश्चिरं ये ली

लां परमेष्ठिनो निजनिजैस्तन्वंति वाक्यैः परं॥ तं साक्षादनुभूय नित्यपरमानंदांबुराशिं पुनर्ये जन्मभ्रममुत्सृजंति॥

सहसा धन्यास्तु ते दुर्लभाः ॥४०॥ किंच ॥ सत्संयममहारामं यमप्रशमजीवितं देहिनां निर्दहत्येव क्रोधाग्निः समु
त्थितः ॥४१॥ दृग्बोधादिगुणानर्घ्यरत्नप्रचयसंचितं भांडागारं दहत्येव क्रोधवह्निः समुत्थितः ॥४२॥ संयमोत्त
[मुनिः] यूषं सर्वाभिमतसिद्धिदं कषायविषसेकोयं निःसारीकुरुते क्षणात् ॥४३॥ तपःश्रुतयमाधारं वृत्तविज्ञानवर्द्धि
तं भस्मीभवति रोषेण पुंसां धर्मात्मकं वपुः ॥४४॥ अयं समुत्थितः क्रोधो धर्मसारं सुरक्षितं निर्दहत्येव नि
शंकाराशिमिवानलः ॥४५॥ पूर्वमात्मानमेवासौ क्रोधांधो दहति ध्रुवं पश्चादन्यान्नवा लोको विवेकविकलाश
[नरके] यः ॥४६॥ कुर्वंति यतयोप्यत्र क्रुद्धास्तत्कर्म निंदितं हत्वा लोकद्वयं येन विशंति धरणीतलं ॥४७॥ क्रोधाद्द्वीपा
[निंदित] यिकृतं कर्मातिगर्हितं दग्धा द्वारवती नाम पूः स्वर्गनगरीनिभा ॥४८॥ लोकद्वयविनाशाय पापाय नरकाय ॥ ॥६२॥

स्वपरस्यापकाराय क्रोधशत्रुः शरीरिणां ॥ अनादिकालसंभूतः कषायविषमग्रहः ॥ स एवानंतदुर्वारदुःखसं
पादनक्षमः ॥६॥ तस्मात्प्रशममालंब्य क्रोधवैरी निवार्यतां ॥ जिनागममहांभोधेरवगाहश्च सेव्यतां ॥१॥ क्रोधव
ह्नेः क्षमैकेयं प्रशांतौ जलवाहिनी ॥ उद्दामसंयमाराम (बनबाटी) वृत्तिर्वात्यंतनिर्भरा ॥२॥ जयंति यमिनः क्रोधं लोकद्वयवि
रोधकं ॥ तन्निमित्तेपि संप्राप्ते भजंतो भावनामिमां ॥३॥ तद्यथा ॥ यदघं कुरुते कोपि मां स्वस्थं कर्मपीडितं ॥ चिकि
त्सित्वा स्फुटं दोषं स एवाकृत्रिमः सुहृत् ॥४॥ हत्वा स्वपुण्यसंतानं (समूहं) मद्दोषं यो निकृंतति ॥ तस्मै यदि हि रुष्यामि म
दन्यः कोधमस्तदा ॥५॥ आकृष्टोहं हतो नैव हतो वा न द्विधाकृतः ॥ मारितो न हतो धर्मो मदीयोनेन बंधुना ॥६॥ सं
भवंति महाविघ्ना इह निश्रेयसार्थिनां ॥ ते चेत्किल (अहो) समायाताः समत्वं संश्रयाम्यतः ॥७॥ चेन्मामुद्दिश्य भ्रश्यंति

शीलशैलात्तपस्विनः अमी यतोत्र मज्जन्मपरत्र ज्ञायकेवलं ॥५०॥ प्राङ्मयायत्कृतं कर्म तन्मयैवोपभुज्यते
आसंगछते
निमित्तमात्रोन्यः सुखदुःखोद्यतोजनः ॥५१॥ मदीयमपि चेच्चेतः क्रोधाद्यैर्विप्रलुप्यते अज्ञातज्ञा
विशेषस्तदा भवेत् ॥५२॥ अन्यायमार्गप्रपन्नेस्मिन्कर्मपाके पुरःस्थिते विवेकी कस्तदात्मानं क्रोधादीनां वशं नयेत्
॥५३॥ सहस्व प्राक्तनासातफलं स्वस्थेन चेतसा ॥ निःप्रतीकारमालोक्य भविष्यद्दुःखशंकितः ॥५४॥ उद्दीपयंतो
शत्रवः सम्मूढे
ग्निं बकु विक्रमविद्विषः मन्ये विलोपयिष्यंति किंचिन्मत्तः शमश्रियं ॥५५॥ अपूर्वं सद्य समुत्पन्ने महात्के
पुरुषात्
तुष्यत्यपि च विज्ञानी प्राक्कर्मविलयोद्यतः ॥५६॥ यदि वाक्कंटकैर्विद्धो नावलंबे क्षमामहं अमर्ष्यात्क्रोश
क्वो विशेषस्तदा भवेत् ॥५७॥ विचित्रैर्वधबंधादिप्रयोगैर्न चिकित्स्यते यद्यसौ मां तदा कस्यात्संचितासातनिः

यः शमः प्राक्समभ्यस्तो विवेकज्ञानपूर्वकः ॥ तस्यैतेद्य परीक्षार्थं प्रत्यनीकाः समुत्थिताः ॥६६॥ अथ दृप्रशममर्या
दां भित्वा रुष्यामि प्राग्वत् ॥ उपयोगः कदास्य स्यात्तदा मे ज्ञानचक्षुषः ॥६७॥ अयत्नेनापि सैवेयं संजाता कर्मनिर्ज
तीव्र पीडा
रा ॥ चित्रोपायैर्ममानेन यत्कृता भर्त्स्ययातना ॥६८॥ ॥उक्तं च॥ ममापि चेद्द्वेषमुपैति मानसं परेषु सद्यः प्रतिकूल
वर्तिषु ॥ अपारसंसारपरायणात्मनां किमस्ति तेषां मम वा विशेषणं ॥७०॥ अपारयन्बोधयितुं पृथग्जनान्स
त्यवृत्तेष्वपि नासदाचरेत् ॥ अशक्नुवन्पीतविषं चिकित्सितुं पिबेद्विषं कः स्वयमप्यबालिशः ॥७१॥ न चेदयं मां दु
रितैर्विकंपयेदहं यतेयं प्रशमाय नाधिकं ॥ अतोतिलाभोयमिति प्रतर्कयन्विचाररूढा हि भवंति निश्चलाः ॥७२॥
परिपरितोषनिमित्तं त्यजंति केचिद्धनं शरीरं वा ॥ दुर्वचनबंधनाद्यैर्वयं रुषंतो न लज्जाम ॥७३॥ अहंतु हानिर्ममात्म

आत्मार्थविनाशः विनाशे शत्रुक्षमा

र्थः सिद्धिः स्यान्नात्रसंशयः ॥ हतोयदिनरुष्यामि रोषश्चेद्व्यत्ययस्तदा ॥७४॥ प्राणात्ययेपिसंपन्ने प्रत्यनीकप्रति

क्षमा प्राप्ता

तासद्भिः स्वसिद्ध्यर्थं क्षमैकास्वस्थचेतसां ॥७५॥ इयं निकषभूरद्यसंपन्ना पुण्ययोगतः ॥ शमत्वं किं प्रपन्नोस्मिन्न

द्यपरीक्ष्यते ॥७६॥ स एव प्रशमः श्लाघ्यः सच श्रेयो निबंधनं अदयैर्हंतुकामैर्योनपुंसां कश्मलीकृतः ॥७७॥ चिरा

भ्यस्तेन किं तेन शमेनास्त्रेणवा फलं ॥ व्यर्थी भवति यत्कार्ये समुत्पन्ने शरीरिणां ॥७८॥ प्रत्यनीके समुत्पन्ने यद्धैर्यं त

त्स्वतेस्यात्सर्वोपि जनः स्वस्थः सत्यशौचक्षमास्पदं ॥७९॥ वासीचंदनतुल्यांतैर्वृत्तिमालंब्य केवलां आरब्धं

सिद्धिमानीतं प्राचीनैर्मुनिसत्तमैः ॥८०॥ कृतैर्वान्यैः स्वयंजातैरुपसर्गैः कलंकितं ॥ येषां चेतः कदाचित्तैर्न प्राप्ता

पूर्वकृता

स्वसंपदः ॥८१॥ प्राक्कृतायनरुष्यंति कर्म्मणेनिर्विवेकिनः तस्मिन्नपि च कुप्यंति यत्तदेवचिकित्सितिः ॥८२॥ यः स्व

स्वान्मांसमाकृष्यक्षिपत्यात्मानमत्तधीः वधबंधनिमित्तेपिकस्तस्मैविप्रियंचरेत् ॥७॥ अथस्यैवकर्मणोनाशाज्जन्म

दाहःप्रशाम्यतितच्चेद्रुत्किंसमायातंसिद्धंतद्धियद्वांछितं ॥८॥ अनंतक्लेशसंमार्चिःप्रदीप्तेयंभवाटवीतत्रोत्प

न्नैर्नकिंसह्यंस्तद्दुत्थोव्यसनोत्करः ॥९॥ समग्रज्ञानविवेकशून्यमनसःसिद्धांतसूत्रद्विषोनिस्त्रिंशाःपरलोक

नष्टमतयोमोहोनलोद्दीपिताः ॥ दौर्जन्यादिकलंकितायदिनरानस्युर्जगत्यांतदातस्मात्तीव्रतपोभिरुन्न

तधियःकांक्षंतिमोक्षश्रियं ॥१०॥ एवंयमिहपरमात्मध्यानदत्तावधानाःपरिकलितपदार्थास्त्यक्तसंसारमार्गाः ॥

यदिनिकषपरीक्षामुक्षमानोतदानींभजतिविफलभावंसर्वथैषप्रयासः ॥११॥ अहोकैश्चित्कर्मानुदयगत

मानीयरजसादुष्पोषंनिर्दूतंप्रबलतपसाजन्मचिकितैः ॥ त्वयंयद्यायातंतदिदमुदमालंब्यमनसानकिंसह्यंधीरै

न्तुलसुखसिद्ध्यैव्यवसिते॥७७॥ क्रोधकषायजयः॥ कुलजातीश्वरत्वादिमदविध्वस्तबुद्धिभिः सद्यः संचीयते
नीचैर्गतिनिबंधनं॥१॥ मानग्रंथिर्मनस्युच्चैर्यावदास्ते दृढस्तवात्तावद्विवेकमाणिक्यंप्राप्तमप्यपसर्पति॥२॥ प्रो
गमानशैलाग्रवर्त्तिभिर्लुप्तबुद्धिभिः क्रियते मार्गमुल्लंघ्य पूज्यपूज्याव्यतिक्रमः॥३॥ लुप्यते मानतः पुंसां विवे
कलोचनं। प्रच्यवंते ततः शीघ्रं शीलशैलाग्रसंक्रमात्॥४॥ ज्ञानरत्नमपाकृत्य गृह्णात्यज्ञानपन्नगं। गुरूनपि
नो मानी विमानयति गर्वितः॥५॥ करोत्युद्धतधीर्मानाद्विनयाचारलंघनं। विराध्याराध्यसंतानं स्वेच्छा
त्तते॥६॥ मानमालंब्य मूढात्मा विधत्ते कर्म निंदितं। कलंकयति चाशेषं चरणं चंद्रनिर्मलं॥७॥ गुणा
किं तेन मानेनार्थः प्रसिध्यति। तन्मन्ये मानिनां मानं यल्लोकद्वयशुद्धिदं॥८॥ अपमानकरं कर्म येन दूरान्निषि

सगच्चैश्चेतसां मानः परः स्वपरघातकः ॥९७॥ क्रमानो नाम संसारे जंतुव्रज विडंबिको यत्र प्राणी नृपो भूत्वा विष्टाम
ध्ये कृमिर्भवेत् ॥९८॥ मानः जन्मभूमिरविद्यानामकीर्तेर्वासमंदिरं पापपंकमहागर्त्ता निकृतिः कीर्तिता बुधैः
शायतां
॥९९॥ अर्गलेवापवर्गस्य पदवी श्वभ्रवेश्मनः शीलशालवने वह्निर्मायेयमवगम्यताम् ॥१००॥ कूटद्रव्यमिवासा
रं स्वप्नराज्यमिवाफलं अनुष्ठानं मनुष्याणां मन्ये मायावलंबिनां ॥१०१॥ लोकद्वयाहितं के चित्तपोभिः कर्तुमुद्य
मायया खेदे अविनश्वरे सरल
ताः निकृत्या वर्तमानास्ते हंत हीना न लज्जिताः ॥१०२॥ मुक्ते रविप्लुतैः श्रोतागतिरृज्वी जिनेश्वरैः तत्र मायावि
नां स्यात्तु न स्वप्नेप्यस्ति योगिता ॥ अव्रती निःशल्य एव स्यात् सशल्यो व्रतघातकः मायाशल्यं मतं साक्षात्सूरिभि
कुटिलमनः आवृत्यमानं
र्भूरिभीतिदं ॥ इहाकीर्तिमसाद्यत्ते मृतो यात्येव दुर्गतिं मायाप्रपंचदोषेण जनोयं जिह्मिताशयः ॥ छाद्यमान

पिप्राय: कुकर्मस्फुटति स्वयं॥ अलं मायाप्रपंचेन लोकद्वयविरोधिना॥ द्विक मायाचरणं हीनं क्व सन्मार्गपरिग्र
॥ नापवर्गपथि भ्रातः संचरंतीह वंचका॥७॥ बकवृत्तिं समालंब्य वंचकैर्वंचितं जगत्॥ कौटिल्यकुशलैः पापैः प्र

३ निर्मलं जगत्

सन्नं कश्मलाशयैः॥८॥ ॥माया॥ नयंति विफलं जन्म प्रयासैर्मृत्युगोचरैः॥ वराकाः प्राणिनो जस्रं लोभादप्राप्तवांछि

वंधु

४ शाकपत्रमात्रेण

ताः॥ शाकेनापीच्छया जातु न भर्तुमुदरं क्षमाः॥ लोभात्तथापि वांछंति नराश्चक्रेश्वरश्रियम्॥१०॥ स्वामिगुरु वृद्धान्
पीड़ंकुर्वंतीं

न्नानं बालांश्च जीर्णदीनादीन्॥ व्यापाद्य विगतशंको लोभार्त्तो वित्तमादत्ते॥११॥ ये केचित् सिद्धांते दोषाः श्वभ्रस्य सा
प्रोक्ताः॥ प्रभवंति निर्विचारं ते लोभादेव जंतूनाम्॥१२॥ ॥लोभः॥ शमांबुभिः क्रोधशिखी निवार्यतां नियम्यतां

शतवः

दारमार्दवैः॥ इयं च मायार्जवतः प्रतिक्षणं निरीहतां चाश्रय लोभशांतये॥ अयत्रयत्रप्रसूयंते तव क्रोधादयो द्विषः

१ क्रोधमुत्पत्ति विनाशाय

पूर्वं चौरा कृत्य

तत्तत्प्रागेवमोक्तव्यंवस्तुतत्स्मृतिशातये॥१७॥येनयेननिवार्यंतेक्रोधाद्याःपरिपंथिनः॥स्वीकार्यमप्रमत्तेनतत्तत्कार्यं

ज्ञानिन क्रोधादि निमित्ते पीडीतं

मनीषिणा॥१८॥गुणाधिकतयामन्येसयोगीगुणिनांगुरुः॥तन्निमित्तेपिनाक्षिप्तंक्रोधाद्यैर्यस्यमानसं॥१९॥यदिक्रोधा

क्रोधादय· निःफलं आत्मज्ञान

दयःक्षीणास्तदाकिंखिद्यतेवृथा॥तपोभिरथतिष्ठंतितपस्तत्रापिपार्थकं॥२०॥अथस्वसंवित्तिंसमायातियमिनांतत्त्वमुत्त

पुरुष समर्थ

मं॥आसमंताच्छमंनीतेकषायविषमज्वरे॥२१॥अथवा॥अजिताक्षःकषायाग्निंविजेतुंनप्रभुर्भवेत्॥अतःक्रोधा

विषयआशा पीडीतस्य इंद्रियहस्ती

दिकंजेतुमक्षरोधःप्रशस्यते॥२२॥विषयाशाभिभूतस्यविक्रियंतेक्षदंतिनः॥पुनस्तएवदृश्यंतेक्रोधादिगहनंक्षि

इंद्रियसमूह समूह

ताः॥२३॥इदमक्षकुलंधत्तेमदोद्रेकंयथायथा॥कषायदहनःपुंसांविसर्पतितथातथा॥२४॥कषायवैरिव्रजनिर्ज

यंयमीकरोतुपूर्वंयदिसंवृत्तेंद्रियः॥किलानयोर्निग्रहलक्षणोविधिर्नहिक्रमेणात्रबुधैर्विधीयते॥२५॥तद्यथा॥य

विषयोद्भूतं दुःखमेवं नंतत्सुखं। अनंतजन्मसंतानक्लेशसंपादकं यतः॥२३॥ दुर्दमेंद्रियमातंगान् शीलशालेनि

विक्रियाकुर्वाणान् स्वइच्छया क इंद्रियमर्कटा

यंत्रयन्धीरविज्ञानपाशेन विकुर्वाणान्यदृच्छया॥२४॥ हृषीभीमभोगीन्द्रकुद्धदर्पोपशांतये। स्मरंति वीरनिर्दिष्टं यो

णमोकार

गिनः परमाक्षरं॥२५॥ निरुध्यबोधपाशेन क्षिप्तावैराग्यपंजरे। हृषीकहरयो येन सं मुनीनां महेश्वरः॥२६॥ हृदि

शीलवृक्ष

स्याच्चेद्बोधिरत्नं सुनिर्मलं। शीलशालो न यस्यांक्षदंतिभिः प्रविदारितः॥२७॥ दुःखमेवाक्षजं सौख्यमविद्याव्याल

लितं मूर्खास्तत्रैव रज्यंते न विद्मः केन हेतुना॥२८॥ यथा यथा हृषीकाणि स्ववशं यांति देहिनां। तथा तथा स्फुरत्युच्चै

र्हृदि विज्ञानभास्करः॥२९॥ विषयेषु यथा चित्तं जंतोर्मग्नमनाकुलं। तथा यद्यात्मनस्तत्त्वे सद्यः को न शिवी भवेत्॥३०॥

पिजनकं मोहदावबह्नेर्महेंधनं। असातसंततेर्बीजमक्षसौख्यं जगुर्जिनाः॥३१॥ नरकस्यैव सोपानं पाथेयं

ध्वनिं अपवर्गपुरद्वारकपाटयुगलं दृढं ॥३२॥ विघ्नबीजं विपन्मूलमन्यापेक्षं भयास्पदं । करणग्राह्यमेतद्धि यदक्षार्थो-
त्थं सुखं ॥३३॥ जगद्वंचनचातुर्यं विषयाणां न केवलं । नरान्नरकपाताले नेतुमप्यतिकौशलं ॥३४॥ निसर्गचपलैश्चित्रै-
र्विषयैर्वंचितं जगत् । प्रत्याशानिर्दयैर्येषु कीदृशी पुण्यकर्मणां ॥३५॥ वर्द्धते गृद्धिरश्रांतं संतोषश्चापसर्पति । विवेको
विलयं याति विषयैर्वंचितात्मनां ॥३६॥ विषयस्य कालकूटस्य विषयाख्यस्य चांतरं । वदंति ज्ञाततत्वार्था मेरुसर्षप-
योरिव ॥३७॥ अनासादितनिर्वेदं विषयैर्व्याकुलीकृतं । पतत्येव जगज्जन्मदुर्गे दुःखाग्निदीपिते ॥३८॥ इंद्रियाणां न गुप्ति-
र्नाभ्यस्तश्चित्तनिर्जयः । न निर्वेदः कृतो मित्र नात्मा दुःखेन भावितः ॥३९॥ एवमेवापवर्गाय प्रवृत्तैर्ध्यानसाधने । स्व-
मेव वंचितं मूढैर्लोकद्वयपथच्युतैः ॥४०॥ अध्यात्मजं यदत्यक्षं स्वसंवेद्यमनश्वरं । आत्माधीनं निराबाधमनंतं योगि-

त्वामैवं वं चितुं मन्ये प्रवृत्ता विषयाइमे॥ स्थिरीकुरु तथा चित्तं यथैते नैकलक्ष्यते॥४५॥



नासुखं॥४१॥ अपास्य करणग्रामं यदात्मन्यात्मना स्वयं। सेव्यते योगिभिस्तद्धि सुखमाध्यात्मिकं मतं॥४२॥
(प्रथममात्ररमणीक) (विषउदयवत्) (अती) (इन्द्रियचोरसैन्य)
तमात्ररम्याणि विषयोत्थानि देहिनां। विषपाकानि पर्य्यंते विद्धि सौख्यानि सर्व्वथा॥४३॥ हृषीकतस्कराणां
(समुद्र) (अग्नि)
चित्तदुर्गांतराश्रितं। पुंसां विवेकमाणिक्यं हरंत्येव निवारितं॥४४॥ उदधिरुदकपूरैरिंधनैश्चित्रभानुर्यदिक
थमपि दैवात्तृप्तिमासादयेतां। न पुनरिह शरीरी कामभोगैर्व्विसंख्यैश्चिरतरमपि भुक्तैस्तृप्तिमायाति कश्चित्
(व्याप्त)
यद्यपि दुर्गतिबीजं तृष्णासंतापपापसंकलितं। तदपि न सुखं प्राप्यं विषयसुखं वांछितं नृणां॥४६॥ किंच॥
(इच्छा) (विगत) (व्याप्नोति) (अनिवार्यप्रकृषा)
अपि संकल्पिताः कामाः संभवंति यथा यथा। तथा तथा मनुष्याणां तृष्णा विश्वं विसर्प्पति॥४७॥ अनिषि
(इन्द्रियसमूह) (मस्तके) (पर्वतं)
संदोहं यः साक्षान्मोक्तुमिच्छति विदारयति दुर्बुद्धिः शिरसा स महीधरं॥४८॥ इहमिह विषयोत्थं यत्सुखं तद्धि दुः

२ तस्य तस्य इंद्रियाणां विषयस्य कारणानां स्रगाचंदनवनीतादानां पारतंत्र्यं पराधीनत्वं तथेदं इंद्रियसौख्य= तृष्णा संततीवृद्धियुक्तं = स्वाभाविक संगमधा कस्यात्मन डायुक्तै

स्वंव्यसनविपिनबीजं तीव्रसंतापविद्धां कटुतरपरिपाकं निंदितं ज्ञानवृद्धैः परिहर किमिहान्यैर्धूर्त्तवाचां प्रपं

चैः ॥५१॥ तत्त्वारकपारतंत्र्यमचिरान्नाशः मत्स्मान्वयस्तैरभिर्निरुपाधिसंगमभृतो बाधानिधानैः परैः

सौख्येभ्यः खेदे सर्प्पदंष्ट्राभिः

प्रारंभ्यः स्पृहयंति हंत विषयानाश्रित्य यद्देहिनस्तत्क्रुधात्फणिनायकाग्रदशनैः कंडूविनोदः स्फुटम् स्वाजमिया इच्छाकरे है

नियंत्रितः प्रीणितो वा पीडितो वा वैराग्यपरायणो

॥५२॥ निःशेषाक्षिमतेंद्रियार्थरचनासौंदर्यसंदानितः प्रीतिप्रस्तुतलोभलंघितमनाः को नाम निर्विघ्नताम्

अतिशयेन अग्रे

अस्माकं तु नितांतघोरनरकज्वालाकलापाः पुरः सोढव्याः कथमित्यसौ तु महतीं चिंतां मनः कंतति ॥ पछेदयति

गजबंधनोपायेन पतंगाः

॥५३॥ मीना मृत्युं प्रयाता रसनवशमिता दंतिनः स्पर्शरुद्धा बद्धास्ते वारिबंधे ज्वलनमुपगताः पत्रिणश्चा

क्षिदोषात् ॥ भृंगा गंधोद्धताशाः प्रलयमुपगता गीतलोभाः कुरंगाः कालव्यालेन दष्टास्तदपि तनुभृतामिं

प्तालीजनोऽन्यः स्यात् ॥४३॥ संवृणोत्यक्षसैन्यं [संकोचयति] यः कूर्मो [कच्छपः] ऽंगानीव संयमी ॥ स लोके दोषपंकाढ्ये चरन्नपि न लिप्य
ते ॥४४॥ अयत्नेनापि जायंते तस्यैता दिव्यसिद्धयः ॥ विषयैर्न मनो यस्य मनागपि कलंकितं ॥४५॥ इत्याचार्य
श्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे अक्षविषयनिरोधकरणं ॥ अयमात्मा स्वयं साक्षात् गु
णरत्नमहार्णवः ॥ सर्वज्ञः सर्वदृक् सार्वः [सर्वहितोपदेशी] परमेष्ठी निरंजनः ॥१॥ तत्स्वरूपमजानानो जनोऽयं विधिवंचितः ॥ विषये
षु सुखं चेत्ति यत्स्यात्पाके विषान्नवत् ॥२॥ यत्सुखं वीतरागस्य मुनेः प्रशमपूर्वकं ॥ न तस्यानंतभागोऽपि प्रा
त्रिदशेश्वरैः ॥३॥ अनंतबोधवीर्यादिनिर्मला गुणिनो [मुनिभिः] गुणाः ॥ स्वस्मिन्नेव स्वयं मृग्या [पश्येत] अपास्य कारणांतरं ॥४॥

ज्ञायते जीवस्य
होऽनंतवीर्ययमात्मा विश्वप्रकाशकः ॥ त्रैलोक्यं चालयत्येव ध्यानशक्तिप्रभावतः ॥ १७ ॥ अस्य वीर्यमहं मन्ये यो
वीर्यं निराबाधं
गिनामप्यगोचरं ॥ यत्समाधिप्रयोगेण स्फुरत्यव्याहतं क्षणात् ॥ १८ ॥ अयमात्मा स्वयं साक्षात्परमात्मेति निश्चयः ॥
समूहं गुणसमूहं
विशुद्धध्याननिर्धूतकर्मेंधनसमुत्करः ॥ १९ ॥ ध्यानादेव गुणग्राममस्याशेषं स्फुटीभवेत् ॥ क्षीयते च तथानादि
संभवा कर्मसंततिः ॥ २० ॥ शिवोयं वैनतेयश्च स्मरश्चात्मैव कीर्तितः ॥ अणिमादिगुणानर्घ्यरत्नवार्द्धिर्बुधैर्मतः ॥
२१ ॥ उक्तं च ॥ आत्यंतिकस्वभावोत्थानंतज्ञानसुखः पुमान् ॥ परमात्मा विपः कंतुरहो माहात्म्यमात्मनः ॥ १ ॥ इति
अमुमेवार्थं संप्रति गद्यैर्विशदयामः ॥ तद्यथा ॥ यथांतर्बहिर्भूतनिजनिजानंदसंदोहसंपाद्यमानद्रव्यादि
चतुष्कसकलसामग्रीस्वभावप्रभावात्परिस्फुरितरत्नत्रयातिशयसमुल्लसितस्वशक्तिनिराकृतसकलत

आत्मनः १ प्रकटीभूत १ समूह १ ग्रासित निबिड



मावरणप्रादुर्भूतशुक्लध्यानानलवहलज्वालाकलापकवलितगहनांतरानादिसकलजीवप्रदेशघनघ

१ पश्चात्

संसारकारणाज्ञानावरणादिद्रव्यभावसंबंधनविप्रोषत्ततोयुगपत्प्रादुर्भूतानंतचतुष्टयोघनप

सवितुःप्रतापप्रकाशाभिव्यक्तिवत्खल्वयमात्मैवपरमात्मव्यपदेशभाग्भवति॥शिवतत्त्वं॥अविरलमरी

मंजरीपुंजपिंजरितभासुरतरशिरोमणिमंडलीसहस्रमंडितविकटतरफूत्कारमारुतपरंपरोत्पातपे

लितकुलाचलसम्मिलितशिखिशिखासंतापद्रवत्काांचनकांतिकपिशनिजकायकांतिछटा

टलितदिग्वलयक्षत्रियभुजंगपुंगवद्वितयपरिक्षिप्तक्षितिबीजविसृष्टप्रकटपविपंजरपिनद्ध

गिरिचतुरस्रमेदिनीमंडलावलंबनगजपतिपृष्ठप्रतिष्ठितपरिकलितकुलिशकरप्राचीप्रमुखविला ॥७०॥

शृंगारदर्पणोद्भासितलोचनसहस्रश्रीत्रिदशपतिमुद्रालंकृतसमस्तभुवनावलंबिसुनाशीरपरिकलितज
गुद्वयः॥पृथ्वीतत्वं समाप्तं॥ तदुपरिपुनर्नानानिविपुलतरसुधासमुद्रसन्निभसमुद्भासन्निजशरीरप्रभापट
लव्याप्तसकलगगनांतरालवैशद्यापूर्णविषविषधरावनद्धवारुणपुरप्रतिष्ठितविपुलतरबीजाक्षरमंडन
पुंडरीकलक्ष्मोपलक्षितपारावारमयखंडेंदुमंडलाकारवरुणपुरप्रतिष्ठितविपुलतरप्रचंडमुद्राग्रहे
विकीर्णशिशिरतरपयःकणाक्रांतिकर्बुरितसकलककुप्चक्रकरिमकरमारूढप्रशस्तपाशपाणिवरु
णामृतमुद्राबंधविधुरितनिःशेषविषानलसंतानभगवद्वरुणानिर्व्यूढोत्संगप्रदेशः॥विस्फुरितनिजवपु
र्बहलज्वालावलीपरिकलितसकलदिग्वलयद्विजदंदशूकरक्षिताशुशुक्षणिवर्णविस्फुरितविस्तीर्णके

कोपपन्नत्रिकोणतेजोमयपुरमध्यबद्धवसतिवर्त्माधिरूढप्रज्वलदलातहस्तानलभुजोद्दीपितस
क्तविरचितोरःप्रदेशः॥अग्नितत्वं॥अविरतपरिस्फुरत्फूत्कारमारुतांदोलितसकलभुवनाभोगपरि
घद्धरणचक्रवालकालिमानिजतनुसमुत्थलद्दहलकांतिपटलपिहितनिखिलनभस्तलश्रृङ्काड्वेयव
लयितमरुन्मुद्रोपपन्नविंदुसंदोहसुंदरमहामारुतवलयत्रितयात्मकसकलभुवनाभोगवायुपा
भस्वत्पुरांतर्गतवाहनकुरंगवेगविहरणदुर्ल्ललितकरतलकलितचलविटपकोटिकिशलय
लिमरुन्मुद्रोच्छलितसकलभुवनपवनमयवदनारविंदः॥वायुतत्वं॥गगनगोचरामूर्तजयविजयभुजंग
भुषणोनंताकृतिपरमविभुनभस्तलनिलीनसमस्ततत्वात्मकसमस्तज्वररोगविषयधरोड्डमरडाकिनी

यक्षकिंनरनरेंद्रारिमारिपरयंत्रमंत्रमुद्रामंडलज्वलनहरिसरभशार्दूलद्विपदैत्यदुष्टप्रभृतिसमस्तोपसर्ग
निर्मूलनकारिसामर्थ्यः॥परिकलितसमस्तगारुडमुद्रामंडलाडंबरसमस्ततत्वात्मकः संन्नात्मैव गारुडगी
गोचरत्वमवगाहते॥ विषतत्वं॥ यदि पुनरसौ सकलजगच्चमत्कारिकार्मुकास्पदनिवेशितमंडलीकृतसर
सेक्षुकांडस्वरसहितकुसुमसायकविधिलक्षीकृतदुर्लक्षमोक्षलक्ष्मीसमागमोत्कंठितकठोरतरमुनि
मनाः स्फुरन्मकरकेतुकमनीयसकलललनावृंदवंदितसौंदर्यरतिकेलिकलापदुर्ललितचेताश्चतुरस्त्रैवि
तभ्रूभंगमात्रवशीकृतजगत्त्रयस्त्रैणसाधनो दुरधिगमागाधगहनरागसागरांतरदोलितसुरासुरनरभुज
गयक्षसिद्धगंधर्वविद्याधरादिवर्गः॥स्त्रीपुरुषभेदभिन्नसमस्तसत्वपरस्परमनःसंघटनसूत्रधारः॥विविधवन

जिपरिमलपरिमिलितमधुकरकुलविकसितसितकुसुमस्तबकतरलितकटाक्षप्रगटसौभाग्येनसह
रलताकिसलयकरोन्मुक्तमंजरीपरागपिष्टातकप्रसुनितप्रवेशोत्सवेनमदमुखरमधुकरकुटुंबिनीको
लालापसंवलितमांसलितकोकिलाकुलकणत्कारसंगीतकप्रियेणमलयगिरिमेखलावनकृतनिलयचं
लतालास्योपदेशकुशलैःसुरतभरखिन्नपन्नगनितंबिनीजनवदनकवलितशिखैरपिविरहिणीनिःश्वास
मलीकृतकायैःकेरलीकुरलांदोलनदक्षैरुत्कंपितकुंतलकामिनीकुंतलैःपरिगतसुरतखेदोन्मिषित
ललाटश्वेदांबुकणिकापानदोहदवद्भिरासादितानेकनिर्झरशिशिरशीकरैर्वकुलामोदसंदर्भनिर्भरैःपा
लुंठितपाटलासौरभैःपरिमिलितनवमालिकामोदैर्मदसंचरणशीलैराकुलीकृतसकलभुवनजनमनोनिर्भ

मारुतैः॥समुच्छ्वसितसौभाग्येन वसंतसुहृदा दूरमारोपितप्रतापः॥प्रारब्धोत्तमतपस्तपस्श्रांतमुनिजनप्रार्थितप्रवे
शोत्सवेन स्वर्गापवर्गद्वारसंघटनवज्रार्गलः॥सकलजगद्विजयवैजयंतीकृतचतुरकामिनीभ्रूविभ्रमः॥सोभग
रिमुद्राविशेषप्रणाली सकलजगद्वशीकरणसमर्थ इति चिंत्यते॥तदायमात्मैव कामोक्तिविषयतामनुभवतीति
तदेवं यदिह जगति शारीरविशेषसमवेतं किमपि सामर्थ्यमुपलभामहे॥तत्सकलमात्मन एवेति निश्चयः॥अ
त्म [illegible] प्रवृत्तिपरंपरोत्पादितत्वाद्विग्रहग्रहणस्येति॥१९॥यदिह जगति किंचिद्विस्मयोत्पत्तिबीजं भुजगमनुजदेवे
ष्वस्ति सामर्थ्यमुच्चैः॥तदखिलमपि मत्वा नूनमात्मैकनिष्ठं भजत नियतचित्ताः शाश्वदात्मानमेव॥२०॥अचिंत्यमा
त्मसामर्थ्यं प्रवक्तुं कः प्रभुर्भवेत्॥तच्च नानाविधध्यानपदवीमधितिष्ठति॥२१॥तदस्य कर्तुं जगदंघ्रिलीनं तिरो

हितांस्तेमहजैवप्राप्तिः॥प्रबोधितस्तांसमभिव्यनक्तिप्रसह्यविज्ञानमयःप्रदीपः॥अथवा॥अयंत्रिजगती
विश्वज्ञोनंतशक्तिमान्॥नात्मानमपिजानातिस्वस्वरूपात्परिच्युतः॥९॥अनादिकालसंभूतैःकलंकैःक
कृतः॥स्वेच्छयार्थानसमादत्तेस्वतोत्यंतविलक्षणान्॥१०॥दृग्बोधनयनःसोयमज्ञानतिमिराहतः॥जानन्नं
जा.नातिपश्यन्नपिनपश्यति॥११॥अविद्योद्भूतरागादिगरव्यग्रीकृताशयः॥पतत्यनंतदुःखाग्निप्रदीप्तेजन्म
मे॥१२॥लोष्टेष्वपियथोन्मत्तःस्वर्णबुद्ध्याप्रवर्तते॥अर्थेष्वनात्मभूतेषुस्वेच्छयायंतथाभ्रमात्॥१३॥वासनाजनिता
वसुखदुःखानिदेहिनाम्॥अनिष्टमपियेनायमिष्टमित्यभिमन्यते॥१४॥अविश्रांतमसौजीवोयथाकामार्थ
मः॥१५॥खिद्यतेत्रयदिस्वार्थेतथाकिंनविमुच्यते॥१६॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेत्रि

तत्त्वप्रकरणं ॥ अथ केचिद्यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इति अष्टावंगानि योगस्य स्था
नानि ॥ तथान्ये: यमनियमावपास्य आसनप्राणायामप्रत्याहारधारणाध्यानसमाधय इति षट् ॥ तथान्ये ॥ उ
त्साहान्निश्चयाद्धैर्यात्संतोषात्तत्त्वदर्शनात् मुनेर्जनपदत्यागात् षड्भिर्योगः प्रसिध्यति ॥३॥ एतान्येवांगः केचिच्च
मनःस्थैर्याय प्रयुंजते तस्मिन्स्थिरीकृते साक्षात्स्वार्थसिद्धिं ध्रुवां भवेत् ॥४॥ यमादिषु कृताभ्यासो निःसंगो निर्म
मो मुनिः ॥ रागादिक्लेशनिर्मुक्तं करोति स्ववशं मनः ॥५॥ अष्टावंगानि योगस्य यान्युक्तान्यार्यसूरिभिः ॥ चित्तप्रस
मार्गेण बीजं स्युस्तानि मुक्तये ॥६॥ अंगान्यष्टावपि प्रायः प्रयोजनवशात्क्वचित् उक्तान्यत्रैव तान्युच्चैर्विदांकुर्वंतु
योगिनः ॥७॥ मनोरोधे भवेद्रुद्धं विश्वमेव शरीरिभिः प्रायो संवृत्तचित्तानां शेषरोधो ऽप्यपार्थकः ॥८॥ इति ॥ कलंकवि

लयः साक्षान्मनःशुद्धैव देहिनाम्॥ तस्मिन्नपि समीभूते स्वार्थसिद्धिरुदाहृता॥९॥ चित्तप्रपंचजानेकवि
धक्लेशाः प्राप्नुवंति नरा न्नूनं मुक्तिकांताकरग्रहम्॥१०॥ अतस्तदेव संरुध्य कुरु स्वाधीनमंजसा॥ यदि छेत्तुं
त्वं कर्मनिगडं दृढं॥११॥ सम्यग्स्मिन्प्रशमं नीते दोषा जन्मभ्रमोद्भवाः॥ जन्मिनां खलु क्षीयंते ज्ञानश्रीप्रतिबं
॥१२॥ एक एव मनोदैत्यः जयः सर्वार्थसिद्धिदः॥ अन्यत्र विफलः क्लेशो यमिनां तज्जयं विना॥१३॥ एक एव मनोरोधः
सर्वाभ्युदयसाधकः॥ यमेवालंब्य संप्राप्ता योगिनस्तत्वनिश्चयं॥१४॥ पृथक्करोति यो धीरः स्वपरावेकतां गतौ॥
चापलं निगृह्णाति पूर्वमेवांतरात्मनः॥१५॥ मनःशुद्धैव शुद्धिः स्याद्देहिनां नात्र संशयः॥ वृथा तद्व्यतिरेकेण काय
यं कदर्थना॥१६॥ ध्यानशुद्धिं मनःशुद्धिः करोत्येव न केवलं॥ विछिनत्त्यपि निःशंका कर्मजालानि देहिनाम्॥१७॥

पंकजसंलीनंतस्यैतद्भुवनत्रयं।।यस्यचित्तंस्थिरीभूयस्वस्वरूपेलयंगतं।।१८।।मनःकृत्वासुनिःसंगंनिःशेषविषयच्यु
तं।।मुनिभृंगैःसमालीढंमुक्तेर्वदनपंकजं।।१९।।यथायथामनःशुद्धिर्मुनेःसाक्षात्प्रजायते।।तथातथाविवेकश्रीर्हृ
दिधत्तेस्थिरंपदं।।२०।।चित्तशुद्धिमनासाद्यमोक्तुंयःसम्यगिच्छति।।मृगतृष्णातरंगिण्यांसपिबत्यंबुकेवलं।।२१।।तद्ध्या
नंतद्धिविज्ञानंतद्ध्येयंतत्त्वमेववा।।येनाविद्यामतिक्रम्यमनस्तत्त्वेस्थिरीभवेत्।।२२।।विषयग्रामलुब्धेनचित्तदैत्ये
नसर्वथा।।विक्रम्यस्वेच्छयाजस्रंजीवलोकःकदर्थितः।।२३।।अनिवार्यविक्रमःसोयंचित्तदंतीनिवार्यतां।।नयात्
ध्वंसयत्येषसत्संयमनिकेतनं।।२४।।विभ्रमन्विषयारण्येचलच्चेतोबलीमुखः।।येनरुद्धोध्रुवंसिद्धंफलंतस्यै
ववांछितं।।२५।।चित्तमेकंनशक्नोतिजेतुंस्वातंत्र्यवर्तियः।।ध्यानवार्तांब्रुवन्मूढःसकिंलोकेनलज्जते।।२६।।यदसाध्यं

मोक्षं

तपोनिष्टैर्मुनिभिर्वीतमत्सरैः।तत्पदंप्राप्यतेधीरैश्चित्तप्रसरबंधकैः॥२७॥अनंतजन्मजानेककर्मबंधस्थितिर्दृ
भावशुद्धिंप्रपन्नस्यमुनेःप्रक्षीयतेक्षणात्॥२८॥यस्यचित्तंस्थिरीभूतंप्रसन्नंज्ञानवासितं।सिद्धमेवमुनेस्त
साध्यंकिंकायदंडनैः॥२९॥तपःश्रुतयमज्ञानतनुक्लेशादिसंचयं।अनियंत्रितचित्तस्यस्यान्मुनेस्तुषकंडनं॥३०॥
वहिर्मनःशुद्धिर्लोकाग्रपथदीपिका।स्खलितंबहुभिस्तत्रतामनासाद्यनिर्मला॥३१॥असंतोपिगुणाःसं
स्यांसत्यांशरीरिणां।संतोपियांविनायांतिसामनःशुद्धिःशस्यते॥३२॥अपिलोकत्रयैश्वर्यंसर्वाक्षप्रीणनक्ष
भजत्यचिंत्यवीर्योयंचित्तदैत्योनिरंकुशः॥३३॥प्रशमश्रुतयमोपेताजिताक्षाःशंसितव्रताः।विदंत्यनिर्जित
ताःस्वस्वरूपंनयोगिनः॥३४॥विलीनविषयंशांतंनिःसंगंत्यक्तविक्रियं।स्वस्थंकृत्वामनःप्राप्तंमुनिभिःपदम

दिक्चक्रं दैत्यधिष्ण्यं त्रिदशपतिपुराण्यंबुवाहांतरालं द्वीपांभोधिप्रकांडं खचरनरसुराहीन्द्रवासं समग्रं। एतत्त्रै
लोक्यनीडं [गृह] पवनचयचितं चापलेन क्षणार्द्धेनाभ्रांतं चित्तदैत्यो भ्रमति तनुमतां [प्राणिनां] दुर्विचिंत्यप्रभावः॥३६॥ द्धि
मसमाधिध्यानविज्ञानहेतोर्विनयनयविवेकोदारचारित्रसिध्यै। यदिह जयति चेतःपन्नगं दुर्निवारं स खलु
जगति योगिव्रातवंद्यो मुनींद्रः॥३७॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे मनोव्या
रप्रतिपादनप्रकरणं॥ निःशेषविषयोत्तीर्णं विकल्पव्रजवर्जितं। स्वतत्त्वैकपरं धत्ते मनीषी नियतं मनः॥१॥ अथव
क्रियमाणमपि स्वस्थं मनः सद्योनिभूयते [व्याप्यते]। अनाद्युत्पन्नसंबंधै रागादिरिपुभिर्बलात्॥२॥ स्वतत्त्वानुगतं चेतः
करोति यदि संयमी। रागादयस्तथाप्येते क्षिपंति भ्रमसागरे॥३॥ आत्माधीनमपि स्वांतं सद्यो रागैः कलंक्यते।

तद्दूरतः पूर्वमत्रयत्नो विधीयताम् ॥४॥ अयत्नेनापि जायंते चित्तभूमौ शरीरिणाम् । रागादयः स्वभावोत्थज्ञा
ज्यांगघातकाः ॥५॥ इंद्रियार्थानपाकृत्य स्वतत्वमवलंब्यते । यदि योगी तथाप्येते छलयंति मुहुर्मनः ॥६॥
ढं क्वचिद्भ्रांतं क्वचिद्भीतं क्वचिद्रुतं । शंकितं च क्वचित्क्लिष्टं रागाद्यैः क्रियते मनः ॥७॥ अजस्रं रुध्यमानोपि चिरा
भ्यासादृढीकृताः । चरंति हृदि निःशंका नृणां रागादिराक्षसाः ॥८॥ प्रयासैः फल्गुनिर्मूढैः किमात्मा दाम्यते धि
या । क्षपते न हि चेच्चेतः कर्तुं रागादिवर्जितं ॥९॥ क्षीणरागं च्युतद्वेषं ध्वस्तमोहं सुसंवृतं । यदि चेतः समापन्नं
द्धं समीहितं ॥१०॥ मोहपंके परिक्षीणे प्रशांते रागविभ्रमे । पश्यंति यमिनः स्वस्मिन्स्वरूपं परमात्मनः ॥११॥
संग्रामे शिवश्रीसंगमोत्सुकैः । योगिभिर्ज्ञानशस्त्रेण रागमल्लो निपातितः ॥१२॥ असंक्लिष्टमविभ्रांतमविद्धु

नाकुलं॥ निश्चलं च मनः कृत्वा वस्तुतत्त्वं निरूपय॥३॥ रागादिनिर्हतं चेतः स्वतत्त्वविमुखं भवेत्॥ ततः प्रच्यवते क्षि
प्रं ज्ञानरत्नाद्रिमस्तकात्॥४॥ रागद्वेषभ्रमाभावे मुक्तिमार्गे स्थिरी भवेत्॥ संयमी जन्मकांतारसंक्रमक्लेशशांकि
तः॥५॥ रागादिनिर्विश्रांतं वंच्यमानं मुहुर्मनः॥ न पश्यति परंज्योतिः पुण्यपापेंधनानलं॥६॥ रागादिपंकविश्ले
षात्प्रसन्ने चित्तवारिणि॥ परिस्फुरति निःशेषं मुनेर्वस्तुकदंबकं॥७॥ स कोपि परमानंदो वीतरागस्य जायते॥ ये
न लोकत्रयैश्वर्यमप्यचिंत्यं तृणायते॥८॥ प्रशाम्यति विरागस्य दुर्बोधविषमग्रहः॥ स एव वर्द्धते जस्रं रागार्त्तस्येह
देहिनः॥९॥ स्वभावजमनातंकं वीतरागस्य यत्सुखं॥ न तस्यानंतभागोपि प्राप्यते त्रिदशेश्वरैः॥१०॥ एतावना
दिसंभूतौ रागद्वेषौ महासुरौ॥ अनंतदुःखसंतानप्रसूतेः प्रथमांकुरौ॥११॥ उक्तं च॥ रागी बध्नाति कर्माणि वीतरा

।प्रयत्नं कुरु।



मुनिरूप्यभावशुध्यायतस्वतद्बंधमोक्षाय॥३९॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेरा
षप्रकरणम्॥३०॥मोहवह्निमपाकर्तुंस्वीकर्तुंसंयमश्रियं॥छेत्तुंरागद्रुमोद्यानंसमत्वमवलंब्यतां॥१॥चि
त्रक्षणैर्भवैरिष्टानिष्टतयास्थितैः॥नमुह्यतिमनोयस्यतस्यसाम्येस्थितिर्भवेत्॥२॥विरज्यकामभोगे
वपुषिस्पृहा॥समत्वंभजसर्वज्ञज्ञानलक्ष्मीकुलास्पदं॥३॥छित्वाप्रशमशस्त्रेणभवव्यसनवागुरां॥मुक्तेःस्वयं
धीरव्रजशनैःशनैः॥४॥साम्यसूर्यांशुभिर्भिन्नेरागादितिमिरोत्करे॥प्रपश्यतियमीस्वस्मिन्स्वरूपंपर
॥५॥साम्यसीमानमालंब्यकृत्वात्मन्यात्मनिश्चयं॥पृथक्करोतिविज्ञानीसंश्लिष्टेजीवकर्मणी॥६॥
रिणिशुद्धानांसतांज्ञानैकचक्षुषां॥इहैवानंतबोधादिराज्यलक्ष्मीःसखीभवेत्॥७॥भावयस्वतथात्मानं

ऽति निर्भरां न यथा द्वेषरागाभ्यां गृहीत्वात्यर्थकदंबकम्॥ रागादिविपिनं भीमं मोहशार्दूलपालितं। दग्धं मुनिमहा
अग्नि शिखा
वीरैः साम्यधूमध्वजार्चिषा॥ मोहपंके परीक्षीणे शीर्णे रागादिबंधने। नृणां हृदि पदं धत्ते साम्यश्रीर्विश्ववंदिता॥
१९॥ आशाः सद्यो विपद्यंते यांत्यविद्याः क्षयं क्षणात्। म्रियते चित्तभोगींद्रो यस्य सा साम्यभावना॥१॥ साम्यकोटि
समारूढो यमी जयति कर्म यत्। निमेषांतेन तज्जन्मकोटिभिस्तपसेतरः॥२॥ साम्यमेव परं ध्यानं प्रणीतं विश्वद
र्शिभिः। तस्यैव व्यक्तये नूनं मन्येऽयं शास्त्रविस्तरः॥३॥ साम्यभावितभावानां स्यात्सुखं यन्मनीषिणां। तन्मन्ये ज्ञा
नसाम्राज्यसमत्वमवलंबते॥४॥ यः स्वभावोत्थितां साध्वीं विशुद्धिं स्वस्य वांछति। स धारयति पुण्यात्मा सम
त्वाधिष्ठितं मनः॥५॥ तनुत्रयविनिर्मुक्तं दोषत्रयविवर्जितं। यदा वेत्त्यात्मनात्मानं तदा साम्ये स्थितिर्भवेत्॥ स्व

ज्ञेषपरपर्यायैः परद्रव्यैर्विलक्षणं निश्चिनोति यदात्मानं तदा साम्यं प्रसूयते॥१८॥तस्यैवाविचल
(भिन्नत्वं)
व्ययमात्तस्यैव बंधविश्लेषः समत्वं यस्य योगिनः॥१९॥यस्य हेयं न चादेयं जगद्विश्वं चराचरं स्या
(शुभाशुभकर्मक्षय)
त्साक्षाच्छुभाशुभमलक्षयः॥२०॥तथाहि॥शाम्यंति जंतवः क्रूरा बद्धवैराः परस्परं॥अपि स्वार्थप्रवृ
(मुनिना)
मुनेः साम्यप्रभावतः॥२१॥भजंति जंतवो मैत्रीमन्योन्यं त्यक्तमत्सराः॥समत्वालंबिनां प्राप्य पादपद्मार्चितां
(मेघे)
क्षितिं॥२२॥शाम्यंत्ययोगिभिः क्रूरा जंतवो नेति शंक्यते॥दावदीप्तमिवारण्यं यथा वृष्टैर्बलाहकैः॥२३॥भवं
प्रसन्नानि कश्मलान्यपि देहिनां॥चेतांसि योगिसंसर्गे गस्त्ययोगे जलानि वा॥२३॥अपि च॥क्षुभ्यंति
(हस्ती दैत्य सिंह शार्दूल सर्पादय)
क्षकिन्नरनरास्तुष्यंति नाकेश्वरा मुंचंति द्विपदैत्यसिंहशरभाः व्यालादयः क्रूरतां॥रुग्वैरप्रतिबद्धविभ्रमभय

अष्टं जगज्ज्ञायते स्याद्योगी ऽसमत्वसाध्यमथवा किं किं न सद्यो भुवि ॥ २४ ॥ चंद्रः सांद्रैर्विकिरति सुधामंशुभिर्जी
वलोको भास्वानुग्रैः किरणपटलैरुच्छिनत्त्यंधकारं धात्री धत्ते भुवनमखिलं विश्वमेतच्च वायुर्यद्वत्साम्या
च्छमयति तथा जंतुजातं यती ॥ २५ ॥ सारंगी सिंहशावं स्पृशति सुतधिया नंदिनी व्याघ्रपोतं मार्जारी हंसबालं
प्रणयपरवशा केकिकांता भुजंगं वैराण्याजन्मजातान्यपि गलितमदा जंतवोन्ये त्यजंति श्रित्वा साम्यैकरू
ढं प्रशमितकलुषं योगिनं क्षीणमोहं ॥ २६ ॥ एकः पूजां रचयति नतः पारिजातप्रसूनैः क्रुद्धः कंठे क्षिपति भु
जगं हंतुकामस्ततोन्यः तुल्या वृत्तिर्भवति च तयोर्यस्य नित्यं स योगी साम्यारामं विशति परमज्ञानदत्तावका
शं ॥ २७ ॥ नो रण्यान्नगरं न मित्रमहिताल्लोष्टान्न जांबूनदं न स्रग्दाम भुजंगमान्न दृषदस्तल्पं शशांकोज्ज्वलं यस्मा

तःकरणे विभर्त्ति कलयां नोत्कृष्टतामीषदप्यार्यास्तं परमोपशांतिपदवीमारूढमाचक्षते ॥२८॥ मोधोत्संगे श्म
स्तुतिज्ञापनविधौ कर्दमे कुंकुमे वा पल्यंके कंटकाग्रे दृषदि शशिमणौ चर्मचीनांशुकेषु शीर्णांगे दिव्य
अनुपमसाम्यवशात्
समसमवशाद्यस्य चित्तं विकल्पैर्नालीढं सोयमेकः कलयति कुशलः साम्यलीलाविलासं ॥२९॥ चलत्य
चलमालेयं कदाचिद्दैवयोगतः नोपसर्गैरपि स्वांतं मुनेः साम्यप्रतिष्ठितं ॥३०॥ उन्मत्तमथवा विभ्रांतं दिग्मूढ
मुप्तमेव वा साम्यस्थस्य जगत्सर्वं योगिनः प्रतिभासते ॥३१॥ वाचस्पतिरपि ब्रूते यद्यंजस्रं समाहितः वक्तुं तथा
पि शक्नोति न हि साम्यस्य वैभवं ॥३२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे साम्यप्र
करणम् ॥ छ ॥ दुःप्रज्ञाबललुप्तवस्तुनिचया विज्ञानशून्याशया विद्यंते प्रतिमंदिरं निजनिजस्वार्थोद्यता देहि

नः॥ आनंदामृतसिंधुपूरीकरच्चयैर्निर्वाप्य जन्मानलं ये मुक्तेर्वदनेंदुवीक्षणपरास्ते संति द्वित्रा यदि॥ साम्यश्रीना
ति निःशंकं सतामपि हृदि स्थितिं धत्ते मुनिश्चलध्यानसुधासंबंधवर्जितां॥ यस्य ध्यानं सुनिःकंपं समत्वं तस्य
ध्यानसाम्ययोः
श्चलं॥ नानयोर्विद्ध्यधिष्ठानमन्योन्यं स्याद्विभेदतः॥ साम्यमेव न सद्ध्यानात् स्थिरीभवति केवलं॥ शुध्यत्यपि
आत्मा
कर्मौघकलंकी यंत्रवाहकः॥ यदेवं संयमी साक्षात्समत्वमवलंबते स्यात्तदैव परं ध्यानं तस्य कर्मौघघात
प्रसरित
कं॥ अनादिविभ्रमोद्भूतं रागादितिमिरं घनं॥ स्फोटयत्याशु जीवस्य ध्यानार्कः प्रविजृंभितः॥ भवज्वलनसं
भूतः महादाहप्रशांतये॥ शश्वद्ध्यानांबुधेर्धीरैरवगाहः प्रशस्यते॥ ध्यानमेवापवर्गस्य मुख्यमेकं निबंधनं॥
तदेव दुरितव्रातगुरुकक्षहुताशनं॥ अपास्य खंडविज्ञानरसिकां पापवासनां॥ असद्ध्यानानि चोदेयं

॥ज्ञानार्णव॥ योगं॥ तद्यथा॥ ज्वलनवनविषास्त्रव्यालशार्दूलदैत्यैः स्थलजलबिलसत्वैर्दुर्जनारातिभूपैः॥ स्वजनधनशरीरध्वं
॥८२॥ सिभिस्तैरनिष्टैर्भवति यदिह योगादाद्यमार्त्तं तदेतत्॥२६॥ तथाचरस्थितैर्भावैरनेकैः समुपस्थितैः॥ अनिष्टैर्य
त्क्लिष्टं स्यादार्त्तं तत्प्रकीर्त्तितं॥२७॥ श्रुतैर्दृष्टैः स्मृतैर्ज्ञातैः प्रत्यासन्निं च संश्रितैः॥ योऽनिष्टार्थैर्मनःक्लेशः
२८॥ प्रन्नोषां निष्टसंयोगे तद्वियोगानुचिंतनं॥ यत्स्यात्तदपि तत्वज्ञैः पूर्वमार्त्तं प्रकीर्त्तितं॥२९॥ प्रच्छमं॥
र्यकलत्रबांधवसुहृत्सौभाग्यभोगात्यये (विनाशे) चित्तप्रीतिकरप्रसन्नविषयप्रध्वंसभावेथवा॥ सं
विवशैर्यत्विद्यतेहर्निशं तत्स्यादिष्टवियोगजं तनुमतां ध्यानं कलंकास्पदम्॥३०॥ दृष्टश्रुतानुभूतैस्तैः
श्चित्तरंजकैः॥ वियोगे यन्मनः खिन्नं स्यात्तदार्त्तं द्वितीयकं॥३१॥ मनोज्ञवस्तुविध्वंसे पुनस्तत्संगमार्थिभिः॥ क्लि ॥८२॥

तेयत्नदेवस्याद्द्वितीयार्त्तस्यलक्षणं॥३२॥द्वितीयं॥कासश्वासभगंदरोदरजराकुष्टातिसारज्वरैःपित्तश्लेष्ममरुत्प्र
कोपजनितैरोगैःशरीरांतकैः॥स्याच्छश्वत्प्रबलैःप्रतिक्षणभवैर्यद्व्याकुलत्वंनृणांतद्रोगार्त्तमनिंदितैःप्रकटितं
दुर्वारदुःखाकरं॥३३॥अल्पानामपिरोगाणांमाभूत्स्वप्नेपिसंभवः॥ममेतियानृणांचिंतास्यादार्त्तंतत्तृतीयकं॥३४॥
भोगाभोगीन्द्रसेव्यास्त्रिभुवनजयनीरूपसाम्राज्यलक्ष्मीराज्यंक्षीणारिचक्रंविजितसुरवधूलास्यलीलायुव
त्यः॥अन्यच्चानंदभूतंकथमिहभवतीत्यादिचिंतासुभाजांयात्तद्भोगार्त्तमुक्तंपरमगणधरैर्जन्मसंतानसूत्रं
॥३५॥पुन्यानुष्ठानजातैरभिलषतिपदंयज्जिनेंद्रामराणांयद्वातैरेववांछत्यहितकुलकुजच्छेदमत्यंतकोपात्
पूजासत्कारलाभप्रभृतिकमथवायाचतेयद्विकल्पैः॥स्यादार्त्तंतन्निदानप्रभवमिहनृणांदुःखदावोग्रधाम॥३६॥

इष्टभोगादिसिद्ध्यर्थं रिपुघातार्थमेव वा ॥ यन्निदानं मनुष्याणां स्यादार्त्तं तत्तुरीयकं ॥ चतुर्थं ॥ इत्थं चतुर्भिः
थितैर्विकल्पैरार्त्तं समासादिह हि प्रणीतं ॥ अनंतजीवाशयभेदभिन्नं ब्रूते समग्रं यदि वीरनाथः ॥३४॥ अप
मपि पर्यंते रम्यमप्यग्रिमक्षणे ॥ विद्ध्यसद्ध्यानमेतद्धि षड्गुणस्थानभूमिकं ॥३५॥ संयतासंयतेष्वेतच्चतुर्भेदं प्र
यतें ॥ प्रमत्तसंयतानां तु निदानरहितं त्रिधा ॥३६॥ कृष्णनीलाद्यसल्लेश्याबलेन प्रविजृंभते ॥ इदं दुरितदाव
र्चिः प्रसूतेरिंधनोपमं ॥३७॥ एतद्विनापि यत्नेन स्वयमेव प्रसूयते ॥ अनाद्यसत्समुद्भूतसंस्कारादेव देहिनां ॥३
अनंतदुःखसंकीर्णमस्य तिर्यग्गतेः फलं ॥ क्षायोपशमिको भावः कालश्चांतर्मुहूर्त्तकं ॥३९॥ शंकाशोक
मादकलहाश्चिंताभ्रमोद्भ्रांतयउन्मादो विषयोत्सुकत्वमसकृन्निद्रांगजाड्यश्रमाः मूर्छादीनि शरीरि

कथयिता

रतंलिंगानिबाह्यान्यलंप्रार्ताधिष्ठितचेतसांश्रुतधरैर्व्यावर्णितानिस्फुटं॥४४॥ इत्याचार्यश्रीशुभचंद्रविरचिते
ज्ञानार्णवेयोगप्रदीपाधिकारेआर्तध्यानप्रकरणम्॥२५॥ रुद्राशयभवंभीममपिरौद्रंचतुर्विधं॥ कीर्त्यमानंविदं
त्वार्याःसर्वसत्वाभिनंदकाः॥१॥ रुद्रःक्रूराशयःप्राणीप्रणीतस्तत्वदर्शिभिः॥ रुद्रस्यकर्मभावोवारौद्रमित्यभि
धीयते॥२॥ हिंसानंदान्मृषानंदाच्चौर्यात्संरक्षणात्तथा॥ प्रभवत्यंगिनांप्राग्वदपिरौद्रंचतुर्विधं॥३॥ हिंसारौद्रं
॥तद्यथा॥ हतेनिपीडितेध्वस्तेजंतुजातेकदर्थिते॥ स्वेनचान्येनयोहर्षस्तद्धिंसारौद्रमुच्यते॥४॥ अनारतंनिःक
रुणःस्वभावःस्वभावतःक्रोधकषायदीप्तः॥ मदोद्धतःपापमतिःकुशीलःस्यान्नास्तिकोयःसहिरौद्रधामा॥
संगः
५॥ हिंसाकर्मणिकौशलंनिपुणतापापोपदेशेभृशंदाक्ष्यंनास्तिकशासनेप्रतिदिनंप्राणातिपातेरतिः॥ संवास

सह निर्दयैर्विरतं नैसर्गिकी क्रूरता यत्स्याद्देहभृतां तदत्र गदितं रौद्रं प्रशांताशयैः॥३॥ केनोपायेन घातो भव
ति तनुमतां कः प्रवीणोत्र हंता हंतुं कस्यानुरागः कतिभिरिह दिनैर्हन्यते जंतुजातं हत्वा पूजां करिष्ये द्विजगु
[नभचरस्थलचरजलचर]
रुमरुतां पुष्टिशांत्यर्थमिष्टं यत्स्याद्धिंसाभिनंदो जगति तनुभृतां तद्धि रौद्रं प्रणीतं॥४॥ गगनवनधरित्रीचारि
[जीवानां] [खल्वा]
णां देहभाजां दलनदहनबंधच्छेदघातेषु यत्नं इति नखकरनेत्रोत्पाटने कौतुकं यत्तदिह गदितमुच्चै
रौद्रमिष्टं॥५॥ अस्य घातो जयोन्यस्य समरे जायतामिति स्मरत्यंगी तदप्याहू रौद्रमध्यात्मवेदिनः॥६॥
[प्रति]
जंतुबधाद्युरुपराभवैर्यो हर्षस्तद्धि विज्ञेयं रौद्रं दुःखानलेंधनं॥७॥ अहं कदा करिष्यामि पूर्ववैरस्य निः
[वैरिणः] [इन्व]
अस्याचित्रैर्वधैश्चेति चिंता रौद्राय कल्पिता॥८॥ किं कुर्मः शक्तिवैकल्याज्जीवंत्यद्यापि विद्विषः तदमुत्र हनि ॥७४॥

ध्यामः प्राप्य कालं तथा बलं ॥२९॥ अभिलषति नितांतं यत्परस्यापकारं व्यसनविशिषभिन्नं वीक्ष्य यत्तोषमेति ॥
यदिह गुणगरिष्टं द्वेष्टि [द्वेषकरोति] दृष्ट्वान्यभूतं भवति हृदि सशल्यः तद्धि रौद्रस्य लिंगं ॥३०॥ हिंसानंदोद्भवं रौद्रं वक्तुं कस्या
स्ति कौशलं जगज्जंतुसमुद्भूतविकल्पशतसंभवं ॥३१॥ हिंसोपकरणादानं क्रूरसत्वेष्वनुग्रहं निस्त्रिंशतादि
गा निरौद्रं बाह्यानि देहिनां ॥३२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे हिंसानंदः प्रथम
॥छ॥ असत्यकल्पनाजालकश्मलीकृतमानसः चेष्टते यज्जनस्तद्धि मृषारौद्रं प्रकीर्तितं ॥१॥ तद्यथा ॥ विधा
य वंचकं शास्त्रं मार्गमुद्दिश्य निर्दयं प्रपात्य व्यसने लोकं भोक्ष्ये [भोगयिष्यामि] हं वांछितं सुखं ॥२॥ असत्यचातुर्यबलेन लो
द्वित्तं ग्रहिष्यामि बहुप्रकारं तथाश्वमातंगपुराकराणि कन्यादिरत्नानि च बंधुराणि ॥३॥ असत्यवाग्वंचनया

तं प्रवर्तयत्यत्र जनं वराकं ॥ स्वधर्ममार्गादतिवर्तनेन मदोद्धतोयः स हि रौद्रधामा ॥४॥ असत्यसामर्थ्यवशाद
तीन्नृपेण चान्येन च घातयामि ॥ अदोषिणां दोषचयं विधाय चिंतेति रौद्रायमतां मुनींद्रैः ॥५॥ पातयामि जनं
मूढं व्यसनेनर्थसंकटे ॥ वाक्कौशल्यप्रयोगेण वांछितार्थप्रसिद्धये ॥६॥ इमान् जडान् बोधविचारविच्युतान्
तारयाम्यद्य वचोनिरुंन्नतैः ॥ अमी प्रवर्त्स्यंति मदीयकौशलादकार्यवर्गेष्विति नात्र संशयः ॥७॥ अनेकासत्यसं
कल्पैर्यः प्रमोदः प्रजायते ॥ मृषानंदात्मकं रौद्रं तत्प्रणीतं पुरातनैः ॥८॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञाना
र्णवे योगप्रदीपाधिकारे असत्यरौद्रं द्वितीयं ॥२॥ छ ॥ चौर्योपदेशबाहुल्यं चातुर्यं चौर्यकर्मणि ॥ यच्चौर्ये
तः स चौर्यानंद इष्यते ॥१॥ तद्यथा ॥ यच्चौर्याय शरीरिणामहरहश्चिंता समुत्पद्यते कृत्वा चौर्यमपि प्रमोदमतुलं

कुर्वंतियत्संततं॥चौर्येण॥पिहितेपरैःपरधनेयज्जायतेसंभ्रमस्तच्चौर्यप्रभवंवदंतिनिपुणारौद्रंसुनिंदास्पदं॥२॥
कृत्वासहायंवरवीरसैन्यंतथाभ्युपायांश्चबहुप्रकारान्॥धनान्यलभ्यानिचिरार्जितानिसद्योहरिष्याम्यभिजन
स्यधात्र्याम॥३॥द्विपदश्चतुष्पदसारंधनधान्यवरांगनासमाकीर्णम्॥वस्तुपरकीयमपिमेस्वाधीनंचौर्यसाम
र्थ्यात्॥४॥इत्थंचुरायांविविधप्रकारःशरीरिभिर्यःक्रियतेभिलाषः॥अपारदुःखार्णवहेतुभूतंरौद्रंतृतीयंतं
दिहप्रणीतं॥५॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेचौर्यानंदरौद्रंतृतीयं॥३॥छ॥ब
ह्वारंभपरिग्रहेषुनियतंरक्षार्थमभ्युद्यतेयत्संकल्पपरंपरांवितनुतेप्राणीहरौद्राशयः॥यच्चालंब्यमहत्त्वमु
न्नतमनाराजेत्यहंमन्यतेतत्तुर्यंप्रवदंतिनिर्मलधियोरौद्रंभवाशंसिनां॥१॥तद्यथा॥आरोप्यचापंनिशितैः॥

शरौघैर्निकृत्यवैरिव्रजमुद्धतांशं ॥ दग्ध्वापुरग्रामवराकराणि प्राप्स्येऽहमैश्वर्य्यमनन्यसाध्यं ॥२०॥ प्राज्यैश्च गृह्णे
धरां मदीयां कन्यानिरत्नानि धनानि नारीः ॥ येऽत्रापवः संप्रति लुप्तचित्तास्तेषां करिष्ये कुलकक्षदाहं ॥२१॥ सक
पूज्यं वीरवर्गोपसेव्यं स्वजनधनसमृद्धं रत्नरामाभिरामं ॥ अमितविभवसारं विश्वभोगाधिपत्यं प्रबल
लां तं हं तत्कृत्वा मयाप्तं ॥ जित्वा भुवं जंतुकुलानि हत्वा प्रविश्य दुर्गाण्युदधीन्विलंघ्य ॥ कृत्वा पदं मूर्द्धि मदोद्ध
तानां मयाधिपत्यं कृतमभ्युदारं ॥२३॥ जलानलव्यालविषप्रयोगैर्विश्वासभेदप्रणिधिः प्रपंचैः ॥ उत्साद्य निःशे
षातिचक्रं स्फुरत्ययं मे प्रबलप्रतापः ॥२४॥ इत्यादि संरक्षणसंनिबद्धं संचिंतनं यत्क्रियते मनुष्यैः ॥ संरक्षणानंद
भवं तदेतद्रौद्रं प्रणीतं जगदेकनाथैः ॥२५॥ इत्याचार्य्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे संरक्ष

णानंदरौद्रं चतुर्थं॥४॥ कृष्णलेश्याबलोपेतं श्वभ्रपातफलांकितं॥ रौद्रमेतद्धि जीवानां स्यात्पंचगुणभूमिकं॥१॥ क्रूर
तादंडपारुष्यं वंचकत्वं कठोरता॥ निस्त्रिंशत्वं च लिंगानि रौद्रस्योक्तानि सूरिभिः॥२॥ विस्फुलिंगनिभे नेत्रे भ्रूव
क्रा भीषणाकृतिः॥ कंपस्वेदादिलिंगानि रौद्रे बाह्यानि देहिनां॥३॥ क्षायोपशमिको भावः कालश्चांतर्मुहूर्तिकः॥
दुष्टाशयवशादेतदप्रशस्तावलंबनं॥४॥ दहत्येव क्षणार्द्धेन देहिनामिदमुत्थितं॥ असद्ध्यानं त्रिलोकश्रीप्रसवं
धर्मपादपं॥५॥ इत्यार्त्तरौद्रे गृहिणामजस्रं ध्याने सुनिंद्ये भवतः स्वतोपि॥ परिग्रहारंभकषायदोषैः कलंकितेंत
करणे विपुंके॥६॥ क्वचित्क्वचिदमी भावाः प्रवर्तंते मुनेरपि॥ प्राक्कर्मगौरवाच्चित्रं प्रायः संसारकारणं॥७॥ स्वयमेव
प्रजायंते विना यत्नेन देहिनां॥ अनादिदृढसंस्कारादुर्ध्यानानि प्रतिक्षणं॥८॥ इति विगतकलंके प्रार्थितं चित्रसं

दुरितकुरुहकंदंनिंद्यदुर्ध्यानयुग्मं॥कटुकतरफलाढ्यंसम्यगालोच्यधीरत्यजसपदियदित्वंमोक्षमार्गेप्र
वृत्तः॥४०॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेआर्तरौद्रध्यानप्रकरणं॥छ॥अथप्र
समालंब्यविधायस्ववशंमनः॥विरज्यकामभोगेषुधर्मध्यानंनिरूपय॥१॥तदेवप्रक्रमायातंसविकल्पंस
मासतः॥आरंभफलपर्यंतंप्रोच्यमानंविबुध्यतां॥२॥ज्ञानवैराग्यसंपन्नःसंवृतात्मास्थिराशयः॥मुमुक्षुरु
द्यतोध्याताधीरःप्रशस्यते॥३॥चतस्रोभावनाधन्याःपुराणपुरुषाश्रिताः॥मैत्र्यादयश्चिरंचित्तेविधेया
सिद्धये॥४॥अथमैत्री॥क्षुद्रेतरविकल्पेषुचरस्थिरशरीरिषु॥सुखदुःखाद्यवस्थासुसंस्थितेषुयथायथं॥५
नायोनिगतेष्वेषुसमत्वेनाविराधका॥साध्वीमहत्त्वमापन्नामतिर्मैत्रीतिपठ्यते॥६॥जीवंतुजंतवःसर्वेक्लेशव्य

सनवर्ज्जिताः॥ प्राप्नुवंतु सुखं त्यक्त्वा वैरं पापं पराभवं॥ अथ करुणा॥ दैन्यशोकसमुत्त्रासरोगपीडार्द्दितात्मसु
वधबंधनरुद्धेषु याचमानेषु जीवितं॥७॥ क्षुत्तृट्श्रमाभिभूतेषु शीताद्यैर्व्यथितेषु च॥ अवरुद्धेषु निस्त्रिंशैःपीड्य
तमानेषु निर्द्दयं॥८॥ मारणार्त्तेषु भूतेषु यत्प्रतीकारवांछया॥ अनुग्रहमतिः सेयं करुणेति प्रकीर्त्तिता॥१०॥
अथ मुदिता॥ तपःश्रुतयमोद्युक्तचेतसां ज्ञानचक्षुषां॥ विजिताक्षकषायाणां स्वतत्त्वाभ्यासशालिनां॥१॥ ज
जगत्त्रयचमत्कारिचरणाधिष्ठितात्मनां॥ यो गुणेषु प्रमोदः स्यात्सद्भिः सा मुदिता मता॥२॥ अथोपेक्षा॥ क्रोधावि
द्धेषु सत्त्वेषु निस्त्रिंशक्रूरकर्मसु॥ मधुमांससुरान्यस्त्रीलुब्धेष्वत्यंतपापिषु॥३॥ देवागमयतिव्रातनिंदकेष्वा
त्मशंसिषु॥ नास्तिकेषु च माध्यस्थ्यं यत्सोपेक्षा प्रकीर्त्तिता॥४॥ एताः मुनिजनानंदसुधास्यंदैकचंद्रिकाः॥ ध्व

स्तरागाद्युरुक्लेशाल्लोकाग्रपददीपिका॥१५॥एतानिरनिशंयोगीश्रीउन्नत्यंतनिर्भरं॥सुखमात्मोत्थमत्यक्ष
मिहैवास्कंदतिध्रुवं॥१६॥भावनास्वासुसंलीनःकरोत्यध्यात्मनिश्चयं॥अवगम्यजगद्वृत्तंविषयेषुनमुह्य
१७॥योगनिद्रास्थितिंधत्तेमोहनिद्रापसर्पति॥आसुसम्यक्प्रणीतासुस्यान्मुनेस्तत्वनिश्चयं॥१८॥आभिर्यदा
विश्वंभावयत्यखिलंवशी॥तदौदासीन्यमापन्नश्चरत्यत्रैवमुक्तवत्॥१९॥रागादिवागुराजालंनिकृत्याचिं
त्यविक्रमः॥स्थानमाश्रयतेधन्योविविक्तंध्यानसिद्धये॥२०॥कानिचित्तत्रप्रास्यंतेदूष्यंतेकानिचित्पुनः
ध्यायनसिद्ध्यर्थंस्थानानिमुनिसत्तमैः॥२१॥विकीर्यतेमनःसद्यःस्थानदोषेणदेहिनां॥तदेवस्वस्थतांधत्ते
नमासाद्यबंधुरं॥२२॥म्लेच्छाधमजनैर्जुष्टंदुष्टभूपालपालितं॥पाषंडिमंडलाक्रांतंमहामिथ्यात्ववासितं॥२३॥कौ

लकापालिकावासैरुद्रक्षुद्रादिमंदिरं॥उद्भ्रांतभूतवेतालंचंडिकाभवनाजिरं॥२४॥पण्यस्त्रीकृतसंकेतंमंदचा
रित्रमंदिरं॥क्रूरकर्मोचिराढ्यंकुशास्त्राभ्यासवंचितं॥२५॥क्षेत्रजातिकुलोत्पन्नशक्तिस्वीकारदर्पितं॥मिलिता
नेकदुःशीलकल्पितानेकसाहसं॥२६॥द्यूतकारसुरापानबिटबंदिव्रजान्वितं॥पाकमल्लसमाक्रांतंनास्ति
कासारसेवितं॥२७॥क्रव्यादकामुकाकीर्णंव्याधविध्वस्तश्वापदं॥शिल्पिकारुकविक्षिप्तमन्नजीविजनां
चितं॥२८॥प्रतिपक्षशिरःशूलप्रत्यनीकावलंबितं॥आत्रेयीखंडितव्यंगसंश्रितंचपरित्यजेत॥२९॥विद्रवंति
जनाःपापाःसंचरंत्यभिसारिकाः॥क्षोभयंतीङ्गिताकारैर्यत्रनार्योप्यशंकिताः॥३०॥किंचक्षोभायमोहायय
द्विकारायजायते॥स्थानंतदपिमोक्तव्यंध्यानविध्वंसशंकिते॥३१॥तृणकंडकवल्मीकविषमोपलकर्दमैः॥भ

स्मोच्छिष्टास्थिरक्ताद्यैर्दूषितां संत्यजेद्ध्रुवं॥३२॥काकःकौशिकमार्जारखरगोमायुमंडलैः॥अवघुष्टं हि विघाय
ध्यातुं कामस्य योगिनः॥३३॥ध्यानध्वंसनिमित्तानि तथान्यान्यपि भूतले॥न हि स्वप्नेऽपि सेव्यानि स्थानानि
निसत्तमैः॥३४॥इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे विरुद्धस्थानप्रकरणं॥छ॥
त्रे महातीर्थे पुराणपुरुषाश्रिते॥कल्याणकलिते पुण्ये ध्यानसिद्धिः प्रजायते॥१॥सागरांते वनांते वा शैलशृंगां
तरेऽथवा॥पुलिने पद्मखंडांते प्राकारे शालसंकटे॥२॥सरितां संगमे द्वीपे प्रशस्ते तरुकोटरे॥जीर्णोद्याने श्मसा
वा गुहागर्भे विजंतुके॥३॥सिद्धकूटे जिनागारे कृत्रिमेऽकृत्रिमेऽपि च॥महर्द्धिकमहावीरयोगसंसिद्धवांछि
ते॥४॥मनःप्रीतिप्रदे शस्ते शंकाकोलाहलच्युते॥सर्वर्तुसुखदे रम्ये सर्वोपद्रववर्जिते॥५॥शून्यवेश्मन्यथ

भूगर्भेकदलीगृहे॥पुरोपवनवंद्यंतेमंडपेचैत्यपादपे॥६॥वर्षातपतुषारादिपवनासारवर्जिते॥स्थानेजागत
विश्रांतयमीजन्मार्तिशांतये॥७॥यत्ररागादयोदोषाअजस्रंयांतिलाघवं॥तत्रैववसतिःसाध्वीध्यानकालेवि
शेषतः॥८॥दारुपट्टेशिलापट्टेभूमौवासिकतास्थले॥समाधिसिद्धयेधीरोविदध्यात्सुस्थिरासनं॥९॥पर्यंक
मर्द्धपर्यंकंवज्रवीरासनंतथा॥सुखारविंदपूर्वंचकायोत्सर्गश्चसंमतः॥१०॥येनायनसुखासीनाविदध्युर्नि
श्चलंमनः॥तत्तदेवविधेयंस्यान्मुनिभिर्बंधुरासनं॥११॥कायोत्सर्गश्चपर्यंकःप्रशस्तःकैश्चिदीरितः॥देहिनां
वीर्यवैकल्यात्कालदोषेणसंप्रति॥१२॥वज्रकायामहासत्वानिःकंपाःसुस्थिरासनाः॥सर्वावस्थास्वलंध्यात्वा
गताःप्राग्योगिनःशिवं॥१३॥उपसर्गैरपिस्फीतैर्देवदैत्यादिकल्पितैः॥स्वरूपालंबितंतेषांनचेतश्चाल्यतेक्वचित्॥

१४॥श्रूयंते संवृतस्वांताः स्वतत्त्वकृतनिश्चयाः॥ विपद्योग्रोपसर्गाग्निं ध्यानसिद्धिं समाश्रिताः॥१५॥ केचिज्ज्वालाव
लिसरिन्नागजव्यालविध्वस्तदेहाः॥ केचित्क्रूरारिदैत्यैरदयमभिहताश्चक्रशूलासिदंडैः॥ भूकंपोत्पातवातप्र
बलपविघनव्रातरुद्धास्तथान्ये कृत्वास्थैर्यं समाधौ सपदि शिवपदं निःप्रपंचं प्रपन्नाः॥१६॥ तद्वीर्यं यमिनां मन्ये
संप्रति पुरातनं॥ अतः स्वप्नेपि तामास्थां प्राचीनां कर्तुमक्षमाः॥१७॥ निःशेषविषयोत्तीर्णो निर्विघ्नो जन्मसं
आत्माधीनमनाः शश्वत्सर्वदा ध्यातुमर्हति॥१८॥ अविक्षिप्तं यदा चेतः स्वतत्त्वाभिमुखं भवेत्॥ नैकं मुक्त्वा मुनेः सा
द्विक्षेपरहितं मनः॥१९॥ संविग्नः संवृतो धीरः स्थिरात्मा निर्मलाशयः॥ सर्वावस्थासु सर्वत्र सदैव ध्यातुमर्हति॥२०॥
जने जनसंकीर्णे सुस्थिते दुस्थितेपि वा॥ यदि धत्ते स्थिरं चित्तं न तदास्ति निषेधनं॥२१॥ पूर्वाशाभिमुखः साक्षा

रान्निमुखोथवा॥प्रसन्नवदनोध्याताध्यानकालेप्रशस्यते॥२२॥अथवा॥चरणज्ञानसंपन्नाजिताक्षावीतविभ्रमाः
प्रागनेकास्ववस्थासुसंप्राप्तायमिनःशिवं॥२३॥मुख्योपचारभेदेनद्वौमुनीस्वामिनौमतौ॥अप्रमत्तप्रमत्ताख्यौधर्मस्यै
तौयथायथं॥२४॥अप्रमत्तःसुस्थानोवज्रकायोवशीस्थिरः॥पूर्ववित्संवृतोधीरोध्यातासंपूर्णलक्षणः॥२५॥श्रुतेन
विकलेनापि॥स्वामीसूत्रेप्रकीर्तितः॥अधःश्रेण्याप्रवृत्तात्मा धर्मध्यानस्यसुश्रुतः॥२६॥किंचकेचिच्चधर्मस्यचत्वा
रःस्वामिनःस्मृताः॥सद्दृष्ट्याद्यप्रमत्तांतायथायोग्येनहेतुना॥२७॥ध्यातारस्त्रिविधाज्ञेयास्तेषांध्यानान्यपित्रिधा लेश्या
विशुद्धियोगेनफलसिद्धिरुदाहृता॥२८॥अथासनजयंयोगीकरोतुविजितेंद्रियः॥मनागपिनखिद्यंतेसमाधौसुस्थि
रामना॥२९॥आसनाभ्यासवैकल्याद्वपुःस्थैर्यंनविद्यते॥खिद्यतेत्वंगवैकल्यात्समाधिसमयेध्रुवं॥३०॥वातातपतुषा

राद्यैर्जंतुजातैरनेकधा॥ कृतासनजयो योगी खेदितोपि न खिद्यते॥ ३१॥ आसाद्यानिमतं रम्यं स्थानं चित्तप्रस
उद्भिन्नपुलकः श्रीमान्पर्यंकमधितिष्ठति॥ ३२॥ पर्यंकदेशमध्यस्थे प्रोत्ताने करकुड्मले॥ करोत्युद्भिन्नराजीव
निभे च्युतचापले॥ ३३॥ नासाग्रदेशविन्यस्ते धत्ते नेत्रे सुनिश्चले॥ प्रसन्ने सौम्यतापन्ने निस्पंदे मंदतारके॥ ३४॥
भ्रूविक्रियाहीनं सुश्लिष्टाधरपल्लवं॥ सुप्तमत्स्यहृदप्रायं विदध्यान्मुखपंकजं॥ ३५॥ अगाधकरुणांभोधौ मग्नः
विग्नमानसः॥ स्वच्छायतं वपुर्धत्ते प्रशस्तं पुस्तमूर्त्तिवत्॥ ३६॥ विवेकवार्द्धिकल्लोलैर्निर्मलीकृतमानसः॥ ज्ञानमंत्रो
द्धृताशेषरागादिविषमग्रहः॥ ३७॥ रत्नाकर इवागाधः सुराद्रिरिव निश्चलः॥ प्रशांतविश्वविस्पंदः प्रनष्टसकल
भ्रमः॥ ३८॥ किमयं लोष्टनिष्पन्नः किं वा पुस्तप्रकल्पितः॥ समीपस्थैरपि प्रायः प्राज्ञैर्ध्यानीति लक्ष्यते॥ ३९॥

जयः॥ मुनिर्नीतस्वसिद्धांतैः प्राणायामः प्रशस्यते॥ मुनिभिर्ध्यानसिध्यर्थं स्थैर्यार्थं चांतरात्मनः॥४०॥ अतः साक्षात्
स विज्ञेयः पूर्वमेव मनीषिणा॥ मनागप्यन्यथा शक्यो न कर्तुं चित्तनिग्रहः॥४१॥ त्रिधा लक्षणभेदेन संस्मृतः पूर्व
सूरिभिः॥ पूरकः कुंभकश्चैव रेचकस्तदनंतरं॥४२॥ तद्यथा॥ द्वादशांतात्समाकृष्य यः समीरः प्रपूर्यते॥ स पूरक इ
ति ज्ञेयो वायुविज्ञानकोविदैः॥४३॥ निरुणद्धि स्थिरीकृत्य श्वसनं नाभिपंकजे॥ कुंभवन्निर्भरः सोयं कुंभकः परि
कीर्तितः॥४४॥ निःसार्यतेतियत्नेन यः कोष्टात् श्वसनः शनैः॥ स रेचक इति प्राज्ञैः प्रणीतः पवनागमे॥४५॥ नाभिकं
दाद्विनिःक्रांतं हृत्पद्मोदरमध्यगं॥ द्वादशांते सुविश्रांतं तज्ज्ञेयं परमेश्वरं॥४६॥ तस्य चारं गतिं बुद्ध्वा संस्थां चैवात्मनः
सदा॥ चिंतयेत्कालमायुश्च शुभाशुभफलोदयं॥४७॥ अत्राभ्यासं प्रयत्नेन प्राप्ततंद्रः प्रतिक्षणं॥ कुर्वन्योगी विजान

पूरीरिणांध्रुवंवामा॥सपयतितदेवशाश्वद्वहमानादक्षिणानाडी॥८४॥संग्रामसुरतभोजनविरुद्धदुर्गेषु
क्षेपोष्ट्वा॥स्यात्अभ्युदयहृदयवांछितसमस्तप्राप्तेषुवामेव॥८५॥नेष्टघटनेसमर्थाराहुग्रहकालचंद्रसू
र्याद्या॥क्षितिवरुणौत्वमृतगतौसमस्तकल्याणदौज्ञेयौ॥८६॥पूर्णपूर्वस्यजयोरिक्तेत्वितरस्यकथ्यतेतज्ज्ञैः
भयोर्युद्धनिमित्तेदूतेनापृंसितेप्रश्ने॥८७॥ज्ञातुर्नामप्रथमंपश्चाद्यद्यातुरस्यगृह्णाति॥दूतस्तदेष्टसिद्धि
स्तेस्याद्विपर्यास्ता॥८८॥जयतिसमाक्षरनामावामावाहुस्थितेनदूतेन॥विषमाक्षरस्तुदक्षिणदिक्संस्थे
स्त्रसंपाते॥८९॥भूतादिग्रहीतानांरोगार्तानांचसर्पदष्टानां॥पूर्वोक्तएवचविधिर्बोधव्योमंत्रिणांवश्यं॥९०॥
पूर्णावरुणेप्रविशतियदिवामाजायतेक्वचित्पुण्यै॥सिद्ध्यंत्यचिंतान्यपिकार्याण्यारंभमाणानि॥९१॥जय

वितलाभाद्याः येर्थाः पूर्वंतु सूचिताः शास्त्रे॥ स्युस्ते सर्वेप्यफला मृत्युस्थे मरुति लोकानां॥ ९२॥ अनिलमवबुध्यस
न्यकुपुष्पं हस्तात्प्रपातयेत् ज्ञानी॥ मृतजीवितविज्ञाने ततः स्वयं निश्चयं कुरुते॥ ९३॥ वरुणे त्वरितो लाभश्चिरेण
भौमे तदर्थिने वाच्यं॥ तुछतरः पवनाख्ये सिद्धोपि विनश्यते वह्नौ॥ ९४॥ आयाति गतो वरुणे भौमे तत्रैव तिष्ठति
सुखेन॥ यात्यन्यत्र श्वसने मृत इति वह्नौ समादेश्यं॥ ९५॥ घोरतरः संग्रामो हुताशनो मरुति भंग एव स्यात्॥ गग
ने स्थेन्यविनाशं मृत्युर्वा युद्धपृच्छायां॥ ९६॥ ऐंद्रे विजयः समरे ततोधिको वांछितश्च वरुणे स्यात्॥ संधिर्वा रिपु
भंगात् स्वसिद्धिसंसूचनोपेतः॥ ९७॥ वर्षति भौमे मघवान्वरुणे तु मनोगतं तथाजस्रं॥ दुर्दिनघनाश्च पवने वह्नौ
वृष्टिः कियन्मात्रा॥ ९८॥ सस्यानां निःपत्तिः स्याद्वरुणे पार्थिवे च सुश्लाघ्या॥ स्वल्पापि न चाग्नेये वाय्वाकाशे तु मध्य

॥९९॥ नृपतिगुरुबंधुवृद्धा अपरेप्यभिलषितसिद्धये लोकाः। पूर्णांगे कर्तव्या विदुषा वीतप्रपंचेन ॥१००॥ प्रा-
नाज्ञानेषु दक्षैः पूर्णांगनिवेशिता सुयोषासु। क्रियते चेतस्त्वरितं नातोन्यद्वश्यविज्ञानं ॥१॥ अरिरिणिकचौरदु-
ष्टा अपरेप्युपसर्गविग्रहाद्याश्च। रिक्तांगे कर्तव्या जयलाभसुखार्थिभिः पुरुषैः ॥२॥ रिपुशस्त्रसंप्रहारे रक्षति यः
पूर्णगात्रभूभागं। बलिभिरपि वैरिवर्गैर्न्न निहन्यते तस्य सामर्थ्यं ॥३॥ वरुणमहेंद्रौ शस्तौ प्रश्ने गर्भस्य पुत्रदौ
इतरौ स्त्रीजन्मकरौ शून्यं गर्भस्य नाशाय ॥४॥ नासाप्रवाहदिग्भागे गर्भार्थी यस्तु पृच्छति। पुरुषः पुरुषादेशं
न्यभागे तथांगना ॥५॥ विज्ञेयः सन्मुखे षंढः सुषुम्नायामुभौ शिशू। गर्भहानिस्तु संक्रांतौ समे क्षेमं विनिर्दि-
शेत् ॥६॥ र्द्धे ज्ञायेत यदि न सम्यग्मरुत्तदो बिंदुभिः स निश्चेयः। सितपीतारुणकृष्णैर्वरुणावनिदहनपवनोत्थैः ॥७॥

कर्णाक्षिनासिकापुटमंगुष्ठप्रथममध्यमांगुलिभिः॥ द्वाभ्यां च पिधाय मुखं करणेन हि दृश्यते बिंदुः॥८॥ दक्षि
णामथवा वामां यो निषेद्धुं समीप्सति॥ तदंगं पीडयेदन्यां नाम नाडीं समाश्रयेत्॥९॥ अग्रे वामविभागे चंद्र
क्षेत्रं वदंति तत्त्वविदः॥ पृष्ठे च दक्षिणांगे रवेस्तदेवाकुराचार्याः॥१०॥ अवनिवनदहनमंडलविचलनशील
स्य तावदनिलस्य॥ गतिस्तज्ज्ञैरेवमरुत्पुरविहारिणः सा तिरश्चीना॥११॥ पवनः प्रवेशकाले जीव इति प्रो
च्यते महामतिभिः॥ निःक्रमणे निर्जीवः फलमपि च तयोस्तथाभूतं॥१२॥ जीवे जीवति विश्वं मृते मृतं सूरि
भिः समुद्दिष्टं॥ सुखदुःखजयपराजयलाभालाभादि मार्गायं॥१३॥ संचरति यदा वायुस्तत्त्वात्तत्त्वांतरं तदा
ज्ञेयं॥ यत्त्यजति तद्धि रिक्तं तत्पूर्णं यत्र संक्रमति॥१४॥ ग्रामपुरयुद्धजनपदगृहराजकुलप्रवेशनिःकामे॥ पूर्णे

पादमग्रेकृत्वाव्रजतोऽस्यसिद्धिःस्यात्॥१५॥अमृतेप्रवहतिनूनंकेचित्प्रवदंतिसूरयोऽत्यर्थं॥जीवंतिविषाशक्ता
यस्मिन्नसतिम्रियतेजीवतिसतिभवतिचेतनाकलितः॥जी
तितथान्यथाभूते॥१६॥वायुप्रपंचरचनामवे
तत्वविदः॥१७॥सुखदुःखजयपराजयजीवितमरणानिविघ्नइतिकेचित्॥वायुप्रपंचरचनामवे
मानः॥१८॥कुर्वीतपूरकेसत्याकृष्टिंकुंभकेस्तंभं॥उच्चाटनंचयोगीरेचकविज्ञानसामर्थ्यात्॥१९॥इदम
त्रश्वसनभवंसामर्थ्यंस्यान्मुनेर्ध्रुवंतस्य॥योनाडिकाविशुद्धिंसम्यक्कर्तुंविजानाति॥२०॥यद्यपिसमीरचारं
नतरंयोगिभिःसुदुर्लक्ष्यं॥जानातिविगततंद्रस्तथापिनाडीकृताभ्यासः॥२१॥नाडिकाशुद्धिः॥तद्यथा॥
चिंतयतिनाभिकमलेसुवंधुरंकर्णिकारूढं॥२२॥रेचयतिततःशीघ्रंपतं

गमार्गेण भासुराकारं ज्वालाकलापकलितं स्फुलिंगमालाकराक्रांतं॥२३॥ तरलतडिदुग्रवेगं धूमशिखावर्त
दुद्दिक्त्रं गच्छंतं गगनतले दुर्द्धर्षं देवदैत्यानां॥२४॥ शारदिंदुधामधवलं गगनतलान्मंदमंदमवतीर्णं॥ क्षरदमृ
तमिव सुधांशोः पूरयति पथा पुनः पुरतः॥२५॥ आनीय नाभिकमलं निवेश्य तस्मिन् पुनः पुनश्चैव॥ अनलस
मनसा कार्यं प्रवेशनिःक्रमणमनवरतं॥२६॥ अथ नाभिपुंडरीकाच्छनैः शनैर्हृदयकमलनालेन॥ निःसार्य
समीरं पुनः प्रवेशयति सोद्योगं॥२७॥ नाडीशुद्धिं कुरुते दहनपुरं दिनकरस्य मार्गेण॥ निःक्रामद्विशदिंदोः पुर
मितरेणेति केप्याहुः॥२८॥ इति नाडिकाविशुद्धौ परिकलिताभ्यासकौशलो योगी॥ आत्मेच्छयैव घटयति पुटयो
पवनं क्षणार्द्धेन॥२९॥ एकस्यामयमास्ते कालं नाडीयुगद्वयं सार्द्धं॥ तामुत्सृज्य ततोन्यामधितिष्ठति नाडिकामनिल॥

॥ज्ञानार्णव॥
॥९७॥

३०॥षोडशप्रमिते केश्चिन्निर्णीतो वायुसंक्रमः॥अहोरात्रमिते काले द्वयोर्नाड्योर्यथाक्रमं॥३१॥षट्शताभ्यधिका
न्याहुः सहस्राण्येकविंशतिः॥अहोरात्रे नरि स्वस्थे प्राणवायोर्गमागमः॥३२॥संक्रांतिमपि नो वेत्ति यः समीरस्य सु
धीः॥स तत्त्वनिर्णयं कर्तुं प्रवृत्तः किं न लज्जते॥३३॥अथ कौतूहलहेतोः करोति वेधं समाधिसामर्थ्यात्॥सम्य
तपवनः शनैः शनैरर्कतूलेषु॥३४॥तत्र कृतनिश्चयोऽसौ जातीवकुलादिगंधद्रव्येषु॥स्थिरलक्ष्यतया शश्व
धं वितंद्रात्मा॥३५॥कर्पूरकुंकुमागुरुमलयजकुष्ठादिगंधद्रव्येषु॥वरुणपवनेन वेधं करोति लक्ष्ये कृताभ्यास
द्धि॥एतेषु लब्धलक्ष्यस्ततोऽतिसूक्ष्मेषु पत्रिकाद्येषु॥वेधं करोति वायुः प्रपंचयोजनचतुर॥३६॥मधुकरपतंगपु
त्रिषु तथाण्डजेष्वेषु मृगशरीरेषु॥संचरति जातलक्ष्यस्त्वनन्यचित्तो वशी धीरः॥३७॥नरतुरगकरिशरीरेऽक्रमे

॥९७॥

चरतिनिःसरत्येव मुक्तोपलक्ष्येषु च यदृच्छया संक्रमं कुर्यात् ॥३८॥ इति परपुरप्रवेशाभ्यासोत्थसमाधिसामर्थ्या

त् ॥ विचरति यदृच्छया सो मुक्त इवात्यंतनिर्लेप ॥४०॥ अथ कौतुकमात्रफलोयं परपुरप्रवेशो महाप्रयासेन ॥ सि

ध्यति न वा कथंचिन्महतामपि कालयोगेन ॥४१॥ स्मरगरलमनोविजयं समस्तरोगक्षयं वपुःस्थैर्यं ॥ पवनप्रचारच

तुरः करोति योगी न संदेह ॥४२॥ जन्मशतजनितमुग्रं प्राणायामाद्विलीयते पापं ॥ नाडीयुगलस्यांते यतेर्जिताक्ष

स्य धीरस्य ॥४३॥ उक्तं च ॥ जलबिंदु कुशाग्रेण मासे मासे तु यः पिबेत् ॥ संवत्सरशतं साग्रं प्राणायामश्च तत्समः ॥४४॥ ॥

॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे प्राणायामप्रकरणं ॥ ॥ समाकृष्येंद्रियार्थेभ्यः

साक्षं चेतः प्रशांतधीः ॥ यत्र यत्रेछया धत्ते प्रत्याहारः स उच्यते ॥१॥ निःसंगः संवृतस्वांतः कूर्मवत्संवृतेंद्रियः ॥ यमी सम

त्वमापन्नो ध्यानतंत्रे स्थिरी भवेत्॥२॥ किंच॥ गोचरेभ्यो हृषीकाणि तेभ्यश्चित्तमनाकुलं॥ पृथक्कृत्य वशी धत्ते
ललाटे त्यंतनिश्चलं॥३॥ सम्यक्समाधिसिद्ध्यर्थं प्रत्याहारः प्रशस्यते॥ प्राणायामेन विक्षिप्तं मनः स्वास्थ्यं न
दति॥४॥ प्रत्याहृतं पुनः स्वस्थं सर्वोपाधिविवर्जितं॥ चेतः समत्वमापन्नं स्वस्मिन्नेव लयं व्रजेत्॥५॥ वायोः सं
तुर्यमणिमाद्यंगसाधनं॥ प्रायः प्रत्यूहबीजं स्यान्मुनेर्मुक्तिमभीप्सत॥६॥ किमनेन प्रपंचेन स्वीतरागस्य यो
न॥ वशीकृताक्षवर्गस्य प्राणायामो न शस्यते॥७॥ प्राणस्यायमने पीडा तस्यां स्यादार्त्तसंभवः॥ तेन प्रच्याव्यते
न॥ ज्ञाततत्त्वोपि लक्षत॥८॥ पूरणे कुंभके चैव तथा श्वसननिर्गमे॥ व्यग्रीभवंति चेतांसि क्लिश्यमानानि वायु
भिः॥१०॥ किंच॥ नातिरिक्तं फलं सूत्रे प्राणायामात्प्रकीर्तितं॥ अतस्तदर्थमस्माभिर्नातिरिक्तं कृतः श्रमः॥११॥ निरु

॥स्वसंदेहार्तजन्मना॥ सुविचार्यैव तद्ध्येयं यन्मुक्तेबीजमग्रिमं॥७॥ संविग्नस्य प्रशांतस्य॥

ध्यकरणग्रामं समत्वमवलंब्य च॥ ललाटदेशसंलीनं विदध्यान्निश्चलं मनः॥१२॥ अथवा॥ नेत्रद्वंद्वे श्रवणयुगले
नासिकाग्रे ललाटे वक्त्रे नाभौ शिरसि हृदये तालुनि भ्रूयुगांते॥ ध्यानस्थानान्यमलमतिभिः कीर्तितान्यत्र देहे
ष्वेकस्मिन् विगतविषयं चित्तमालंबनीयं॥१३॥ स्थानेष्वेतेषु विश्रांतं मुनेर्लक्ष्यं वितन्वतः॥ उत्पद्यंते स्वसंवित्तेर्बह
वो ध्यानप्रत्ययाः॥१४॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे प्रत्याहारधारणाप्रकरणम्
॥छ॥ अनंतगुणराजीवबंधुरप्यत्र वंचितः॥ अहो भवमहाकक्षे प्रागहं कर्मवैरिभिः॥१॥ स्वविभ्रमसमुद्भूतैरगाध
तुलबंधनैः॥ बद्धो विडंबितः कालमनंतं जन्मदुर्गमे॥२॥ अद्य रागज्वरो नष्टो मोहनिद्रा विनिर्गता॥ ततः कर्मरिपुं ह
न्मि ध्याननिस्त्रिंशधारया॥३॥ आत्मानमेव पश्यामि निर्धूयाज्ञानजं तमः॥ ज्ञोषयामि तथाप्युग्रं कर्मेंधनसमुत्करं॥
॥४॥

बलध्यानवज्रेण दुरितद्रुमसंक्षयं॥तथा कुर्मो यथा दत्ते न पुनर्भवसंभवं॥५॥जन्मज्वरसमुद्भूतमहामूर्छा
प्लुषा॥स्वविज्ञानोद्भवः साक्षात् मोक्षमार्गो न वीक्षितः॥६॥मयात्मापि न विज्ञातो विश्वलोकैकलोचनः॥अवि
विषमग्राहदंतचर्वितचेतसा॥७॥परमात्मा परं ज्योतिर्जगज्ज्येष्ठोपि वंचितः॥आपातमात्ररम्यैस्तैर्विषयैरंतनीर
सैः॥८॥अहं च परमात्मा च द्वावेतौ ज्ञानलोचनौ अतस्तं ज्ञातुमिच्छामि तत्स्वरूपोपलब्धये॥९॥मम प्राप्ता गुण
ग्रामो व्यक्त्या च परमेष्ठिनः॥१०॥एतावानावयोर्भेदः प्राप्तिव्यक्तिस्वभावतः॥११॥उक्तं च॥नासत्पूर्वाश्च पूर्वा नो निर्वि
शेषविकारजाः॥स्वाभाविकविशेषाद्य भूतपूर्वास्तद्गुणाः॥१२॥तावन्मां पीडयत्येव महादाहोद्भवोद्भवः॥
न सुधांभोधेर्नावगाहः प्रवर्तते॥१३॥अहं न नारको नाम न तिर्यग्वापि मानुषः॥न देवः किंतु सिद्धात्मा सर्वोयं

॥९९॥

जः क्रमः॥१३॥अनंतवीर्यविज्ञानदृगानंदात्मकोप्यहं॥किंनप्रोन्मूलयाम्यद्यप्रतिपक्षविषद्रुमं॥१४॥अद्यासाद्य
स्वसामर्थ्यंप्रविश्यानंदमंदिरं॥नस्वरूपाच्च्यविष्येहंवाह्यार्थेषुगतस्पृहः॥१५॥मयाद्यैवविनिश्चेयंस्वस्वरूपंहिवस्तु
तः॥छित्वाप्यनादिसंभूतामविद्यांवैरिवागुरां॥१६॥इतिप्रतिज्ञांप्रतिपद्यधीरः समस्तरागादिकलंकमुक्तः॥आलंब्य
तेधर्ममचंचलात्मा॥शुक्लंचयद्यस्तिबलंविशालं॥१७॥प्रतिज्ञा॥ध्येयंवस्तुवदंतिनिर्मलधियःतच्चेतनाचेतनं
स्थित्युत्पत्तिविनाशलक्षणयुतंमूर्त्तेतरंचक्रमात्॥शुद्धध्यानविशीर्णकर्मकवचोदेवश्चमुक्तेर्वरः सर्वज्ञःसक
लःशिवःसभगवान्सिद्धःपरोनिःकलः॥१८॥अमीजीवादयोभावाश्चिदचिल्लक्षणलांछिताः॥तत्स्वरूपाविरोधे
नध्येयाधर्मेमनीषिभिः॥१९॥ध्यानेह्युपरतेधीमान्मनःकुर्यात्समाहितं॥निर्वेदपदमापन्नंमग्नंवाकरुणांबुधौ॥२०॥

थलोकत्रयीनाथममूर्तंपरमेश्वरं॥ध्यातुंप्रक्रमतेसाक्षात्परमात्मानमव्ययम्॥२१॥एकंचत्रिकालविषयं
साक्षाच्छक्तिव्यक्तिविवक्षया॥सामान्येननयेनैकंपरमात्मानमामनेत्॥२२॥साकारंनिर्गताकारंनिष्कलंप
क्षरं॥निर्विकल्पंचनिःकंपंनित्यमानंदमंदिरं॥२३॥विश्वरूपमविज्ञातस्वरूपंसर्वदोदितं कृतकृत्यंशिवंशांतं
निःकलंकरणच्युतं॥२४॥निःशेषभवसंभूतक्लेशद्रुमहुताशनं॥शुद्धमत्यंतनिर्लेपंज्ञानराज्येप्रतिष्ठितं॥२५॥
विशुद्धादर्शसंक्रांतप्रतिबिंबसमप्रभं॥ज्योतिर्मयंमहावीर्यंपरिपूर्णंपुरातनं॥२६॥विशुद्धाष्टगुणोपेतंनि
र्गतामयं॥अप्रमेयंपरिच्छिन्नंविश्वतत्वव्यवस्थितं॥२७॥यदग्राह्यंबहिर्भावैर्ग्राह्यंचांतर्मुखैःक्षणं॥तत्स्वभा
त्मकंसाक्षात्स्वरूपंपरमात्मनः॥२८॥अणोरपिचयःसूक्ष्मोमहानाकाशतोपिच॥जगद्वंद्यःससिद्धात्मानिष्प

त्यंत निर्वृतः॥३२॥ यस्यानुध्यानमात्रेण प्रीयंते जन्मजारुजाः॥ नान्यथा जन्मिनां सोयं जगतां प्रभुरच्युतः॥३३॥ अवि-
ज्ञातमपि निःशेषं यदज्ञानादपार्थकं॥ यस्मिंश्च विदिते विश्वं ज्ञातमेव न संशयः॥३४॥ यत्स्वरूपापरिज्ञानान्नात्म-
तत्त्वे स्थितिर्भवेत्॥ यं ज्ञात्वा मुनिभिः साक्षात्प्राप्तं तस्यैव वैभवं॥३५॥ स एव नियतं ध्येयः स विज्ञेयो मुमुक्षुभिः॥
अनन्यशरणीभूय तद्गतेनांतरात्मना॥३६॥ अवाग्गोचरमव्यक्तमनंतं शब्दवर्जितं॥ अजं जन्मभ्रमातीतं नि-
र्विकल्पं विचिंतयेत्॥३७॥ यद्बोधानंतभागेपि द्रव्यपर्यायसंभृतं॥ लोकालोकं स्थितिं धत्ते स स्याल्लोकत्रयी-
गुरुः॥३८॥ तत्स्वरूपाहितस्वांतस्तद्गुणग्रामरंजितः॥ योजयत्यात्मनात्मानं तस्मिंस्तद्रूपसिद्धये॥३९॥ इत्यज-
स्रमनायोगी तत्स्वरूपावलंबितः॥ तन्मयत्वमवाप्नोति ग्राह्यग्राहकवर्जितं॥४०॥ अनन्यशरणीभूय स तस्मि-

द्लीयतेतथा॥ध्यातृध्यानोभयाभावेध्येयेनैक्यंयथाव्रजेत॥३७॥सोयंसमरसीभावस्तदेकीकरणंस्मृतं॥अ
त्केनयत्रात्मालीयतेपरमात्मनि॥३८॥अनन्यशरणस्तद्धितत्संलीनैकमानसः॥तद्गुणस्तत्स्वभावात्मातं
त्म्यात्त्वसएवमन॥३९॥उक्तंच॥कटस्यकर्ताहमितिसंबंधःस्याद्वयोर्द्वयो॥ध्यानंध्येयंयदात्मैवसंबंधंक
प्रास्तदा॥४०॥यदज्ञानाज्जन्मीभ्रमतिनियतंजन्मगहनंविदित्वायंसद्यस्त्रिदशगुरुतां यातिगुरुतां॥सविज्ञेय
साक्षात्सकलभुवनानंदनिलयःपरंज्योतिस्त्राता परमपुरुषोचिंत्यचरितः॥४१॥इत्थंयत्रानवच्छिन्नभाव
ज्ञिर्भवच्युतं॥भावयत्यनिशंध्यानीतत्सवीर्यप्रकीर्तितं॥४२॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्ण
वेयोगप्रदीपाधिकारेसवीर्यध्यानप्रकरणम्॥छ॥अज्ञातस्वस्वरूपेणपरमात्मानबुध्यते॥आत्मैवप्राग्विनिश्चेयोवि

न पुरुषैः परं॥१॥ किंच॥ आत्मतत्त्वं न विज्ञस्य न स्यादात्मन्यवस्थितिः॥ मुह्यत्यंतः पृथक्कर्तुं स्वरूपं देहदेहिनोः॥२॥ तत
यो भेदापरिज्ञानान्नात्मलाभः प्रजायते॥ तदभावात्स्वविज्ञानसूतिः स्वप्नेपि दुर्घटा॥३॥ अतः प्रागेव निश्चेयः सम्य
गात्मा मुमुक्षुभिः॥ अशेषपरपर्यायः कल्पनाजालवर्जितः॥४॥ तथाहि॥ त्रिःप्रकारः सभृतेषु सर्वेष्वात्मा व्यव
स्थितः॥ बहिरंतः परश्चेति विकल्पैर्वक्ष्यमाणकैः॥५॥ आत्मबुद्धिः शरीरादौ यस्यात्मन्यात्मनिश्चयः॥ सोंतरात्मा म
तस्तज्ज्ञैर्विभ्रमध्वांतभास्करैः॥६॥ निर्लेपो निःकलः शुद्धो निःपन्नोत्यंतनिर्वृतः॥ निर्विकल्पश्च शुद्धात्मा परमात्मे
ति वर्णितः॥७॥ कथं तर्हि पृथक्कृत्वा देहाद्यर्थकदंबकात्॥ आत्मानमभ्यसेद्योगी निर्विकल्पमतींद्रियं॥९॥ अपा
स्य बहिरात्मानं सुस्थिरेणांतरात्मना॥ ध्यायेद्विशुद्धमत्यंतं परमात्मानमव्ययं॥१०॥ तद्यथा॥ संयोजयति देहेन
॥ यस्य स्यादात्मविभ्रमात्॥ बहिरात्मा स विज्ञेयो मोहनिद्रास्तचेतनः॥१२॥ त्रुटि॥॥

शरीरात् … आत्मानं
चिदात्मानं विमूढधीः । बहिरात्मा ततो ज्ञानी पृथक्पश्यति देहिनां ॥११॥ अक्षद्वारैरविश्रांतं स्वतत्त्वविमुखैर्भृशं
वेष्टित
तो बहिरात्मायं वपुरात्मेति मन्यते ॥१२॥ सुरं त्रिदशपर्याये नृपर्याये तथा नरं । तिर्यंचं च तदंगे स्वं न
आत्मस्वरूप
गं च नारकं ॥१३॥ वेत्त्यविद्यापरिश्रांतो मूढस्तन्न पुनस्तथा । किं त्वमूर्त्तं स्वसंवेद्यं तद्रूपं परिकीर्तितं ॥१४॥ स्वशरीर
मिवान्विष्य परांगं च्युतचेतनं । परमात्मानमज्ञानी परबुद्ध्याध्यवस्यति ॥१५॥ स्वपरात्मेतरविकल्पैस्तैः शरीरेष्ववलं
तं प्रवृत्तैर्वंचितं विश्वमनात्मन्यात्मदर्शिभिः ॥१६॥ ततः सोऽत्यंतभिन्नेषु पशुपुत्रांगनादिषु । आत्मत्वं
व्यापित … आत्मत्व
दं विद्याज्वरजिह्मितः ॥१७॥ साक्षात्स्वामेव निश्चित्य पदार्थान्निश्चितनेतरान् । स्वस्यैवं मन्यते मूढस्तन्नाशो
विषमग्रहेण
दिकं ॥१८॥ अनादिप्रभवः सोऽयमविद्याविषमग्रहः । शरीरादीनि पश्यंति येन स्वमिति देहिनः ॥१९॥ ख्याव

रचयति आत्मान

विज्ञानं वपुषो घटयत्ययं मां स्वस्मिन्नात्मेति बोधस्तु जिनत्वं गाच्छरीरिणाम् ॥२०॥ वपुष्यात्ममतिः सूते बंधुवि

पुद्गलेन

त्तादिकल्पनां स्वस्य संकल्पमेतेन मन्वानं मुषितं जगत् ॥२१॥ तेन चात्मेति यो भावः स स्याद्बीजं भवस्थिते ॥ बहिर्वि

तांक्षविक्षेपस्तत्त्यक्त्वांतर्विशेत्ततः ॥२२॥ अक्षद्वारैः स्वतश्च्युत्वा निमग्नो गोचरेष्वहं तानासाद्याहमित्येतन्नाहि

सम्यगवेदिषं ॥२३॥ बाह्यात्मानमपास्यैवमंतरात्मा ततस्त्यजेत् प्रकाशयत्ययं योगः स्वरूपं परमेष्ठिनः ॥२४॥

यद्ग्राह्यमिदं रूपं तत्तदन्यन्न चान्यथा ज्ञानवच्च व्यतीताक्षमतः केनात्र वच्म्यहं ॥२५॥ यज्ज्ञैरपि बोध्योहं य

आत्मन

ज्जनान्बोधयाम्यहं तद्विभ्रमपदं यस्मादहं विध्वस्तकल्पनः ॥२६॥ यः स्वमेवं समादत्ते नादत्ते यः स्वतोपरं निर्विकल्प

स विज्ञानी स्वसंवेद्योस्मि केवलं ॥२७॥ अज्ञातसर्पमतेर्यद्वच्छृंखलायां क्रियाभ्रमः ॥२८॥ तथैवं मे क्रियापूर्वास्तवादौ स्वा

नपुंसक

तिभ्रमात् ।२०। शृंखलायां यथावृत्तिर्विनष्टे भुजगभ्रमे । तन्वादौ मे तथावृत्तिर्नष्टात्मविभ्रमस्य वै ।२१। एतदे
पुरुष १ २
षैष एकं द्वे बहूनीति धियः पदं । नाहं यच्चात्मनात्मानं वेद्म्यात्मनि तदस्म्यहं ।२२। यदबोधे मया सुप्तं यद्बोधे
उत्थितं । तद्रूपमयमत्यक्षं स्वसंवेद्यमहं किल ।२३। ज्योतिर्मयं ममात्मानं पश्यतोत्रैव यांत्यमी । क्षयं रागाद
यस्तेन नारिः कोपि प्रियो न मे ।२४। अदृष्टमत्स्वरूपोयं जनो नारिर्न मे प्रियः । साक्षात्सुदृष्टरूपोपि जनो नारिः
सुहृन्न मे ।२५। इतः प्रभृति निःशेषं पूर्वपूर्वविचेष्टितं । मम मोह्यज्ञाततत्त्वस्य भाति स्वप्नेंद्रजालवत् ।२६। यो
प्रसिद्धात्मा परंज्योतिः सनातनः । सोहं तस्मात्प्रपश्यामि स्वस्मिन्नात्मानमच्युतं ।२७। बाह्यात्मानमपास्य
प्रसन्नेनांतरात्मना । विधूतकल्पनाजालं परमात्मानमामनेत् ।२८। बंधमोक्षावुभावेतौ भ्रमेतरनिबंधनौ ।

अभ्यसेत्

धंश्चपरसंबंधाद्भेदाभ्यासात्ततःशिवं॥३७॥अलौकिकमहोवृत्तंज्ञानिनःकेनवर्ण्यते॥अज्ञानीबध्यतेयत्रज्ञा
नीतत्रैवमुच्यते॥३८॥यज्जन्मगहनेखिन्नंप्राग्भ्रयादुःखसंकुले॥तदात्मेतरयोर्नूनमभेदेनावधारणात्॥३९॥म आत्मनि
यिसत्यपिविज्ञानप्रदीपेविश्वदर्शिनि॥किंनिमज्जत्ययंलोकोवराकोजन्मकर्दमे॥४०॥आत्मन्येवात्मनात्माय
स्वयमेवानुभूयते॥अतोन्यत्रैवमांज्ञातुंप्रयासःकार्यनिष्फलः॥४१॥सएवाहंसएवाहमित्यभ्यसन्ननारतं॥ बहिरात्मा
भावनां
वासनांदृढयत्नेनप्राप्नोत्यात्मन्यवस्थितिं॥४२॥स्याद्यद्यत्प्रीतयेज्ञस्यतत्तदेवापदास्पदं॥बिभेत्ययंपुनर्य
स्मिंस्तदेवानंदमंदिरं॥४३॥असुसंवृत्तेंद्रियग्रामेप्रसन्नेचांतरात्मनि॥क्षणंस्फुरतियत्तत्त्वंतद्रूपंपरमेष्ठिनः॥४४॥य
सिद्धात्मापरःसोहंयोहंसपरमेश्वरः॥मदन्योनमयोपास्योमदन्येनतुनाप्यहं॥४५॥आकृष्यगोचरव्याघ्रमुख

॥ज्ञानार्णव॥
॥१०४॥

दात्मानमात्मना॥ स्वस्मिन्नहं स्थिरीभूतश्चिदानंदमये स्वयं॥४६॥ पृथगिच्छन्न मां वेत्ति यस्तनो (शरीरात्) वीतविभ्रमः॥
कुर्वन्नपि तपस्तीव्रं न स मुच्येत बंधनैः॥४७॥ स्वपरांतरविज्ञानसुधास्पंदाभिनंदितः (बर्द्धितं)॥ खिद्यते न तपः कुर्वन्नपि
क्लेशैः शरीरजैः॥४८॥ रागादिमलविश्लेषाद्यस्य चित्तं सुनिर्मलं। सम्यक् स्वं स हि जानाति नान्यः केनापि हेतु
ना॥४९॥ निर्विकल्पं मनस्तत्वं न विकल्पैरभिद्रुतं। निर्विकल्पमतः कार्यं सम्यक्तत्वप्रसिद्धये॥५०॥ अज्ञानविप्लु
तः स्वतत्वादपवर्तते। विज्ञानवासितं तद्धि पश्यत्यंतः परं प्रभुं॥५१॥ मुनेर्यदि मनो मोहाद्रागाद्यैरभिभूयते (बाध्यते)॥
तन्नियोज्यात्मनस्तत्वे तान् (रागादीन्) क्षिपति क्षणात्॥५२॥ यत्राज्ञात्मा (बहिरात्मा) रतः काये (काये) तस्माद्व्यावर्तितो (शरीरात्) धिया (बुध्या)॥ चिदानं
दे रूपे योजितः प्रीतिमुत्सृजेत्॥५३॥ स्वविभ्रमोद्भवं दुःखं स्वज्ञानेनैव हीयते। तपसापि न तच्छेद्यमात्मवि

॥१०४॥

ज्ञानवर्ज्जितैः॥४२॥ रूपायुर्बलवित्तादिसंपत्तिं स्वस्य वांछति। बहिरात्माथ विज्ञानी मोक्षं तेभ्योपि विच्युतिं॥४
परत्वाहंमतिर्मन्यत्र बध्नाति स्वं स्वतश्च्युतः॥ आत्मन्यात्ममतिं कृत्वान्यस्मा ज्ञानी विमुच्यते॥४४॥ आत्मानं
वे॥ स विज्ञानी त्रिलिंगी संगतं वपुः॥ सम्यग्वेदी पुनस्तत्त्वं लिंगसंगविवर्जितं॥४५॥ समभ्यस्तं सुविज्ञानं निर्न्नी
तमपि तत्त्वतः॥ अनादिविभ्रमात्तत्त्वं प्रस्खलत्येव योगिनः॥४६॥ अचिद्रूपमिदं रूपं न चिद्रूपं ततो वृथा॥ म
म रागादयोर्थेषु स्वरूपं संश्रयाम्यतः॥४७॥ करोत्यज्ञो ग्रहत्यागौ बहिर्न्तस्तु तत्त्ववित्॥ शुद्धात्मा न बहिर्नांत
स्तो विदध्यात्कथंचन॥४८॥ वाक्कायाभ्यां पृथक्कृत्वा मनसात्मानमभ्यसेत्॥ वाक्तनुभ्यां प्रकुर्वीत कार्यमन्य
न्न चेतसा॥४९॥ विश्वासानंदयोः स्थानं स्याज्जगद्दत्तचेतसा॥ क्वानंदः क्व च विश्वासः स्वस्मिन्नेवात्मवेदिनां॥५०॥

॥ज्ञानार्णव॥
॥१०५॥

स्वबोधादपरं किंचिन्न स्वांते विभृयाच्चिरं। कुर्यात्कार्यवशात्किंचिद्वाक्कायाभ्यामनादृतः॥८३॥ यदक्षविषयं रूपं
मद्रूपात्तद्विलक्षणम्। आनंदनिर्भरं रूपमंतर्ज्योतिर्मयं मम॥८४॥ अंतर्दुःखं बहिः सौख्यं योगाभ्यासोद्यतात्म
सुप्रतिष्ठितयोगानां विपर्यस्तमिदं पुनः॥८५॥ तद्विज्ञेयं तदाख्येयं तच्छ्रव्यं चिंत्यमेव वा। येन भ्रांतिमपास्योच्चैः
स्यादात्मन्यात्मनः स्थितिः॥८६॥ विषयेषु न तत्किंचित्स्याद्धितं यच्छरीरिणां। तथाप्येष्वेव कुर्वंति प्रीतिमज्ञा
नयोगिनः॥८७॥ अनाख्यातमिवाख्यातमपि न प्रतिपद्यते। आत्मा न जडधीस्तेन वंध्यस्तत्र ममोद्यमः॥८८॥ त
[अकथित] [अंगीकृत्य] [विफल]
हं यन्मया किंचित्प्रज्ञापयितुमिष्यते। यो हं न स परग्राह्यस्तन्मुधा बोधनोद्यमः॥८९॥ निरुद्धज्योतिरज्ञो
[वृथा]
स्वतोन्यत्रैव तुष्यति। तुष्यत्यात्मनि विज्ञानी बहिर्विगतविभ्रमः॥९०॥ यावदात्मेच्छयादत्ते वाक्चित्तवपुषां ॥१०५॥

जन्मतावदमीषांतुभेदज्ञानाद्भवच्युतिः॥७१॥जीर्णेरक्तेघनेध्वस्तेनात्माजीर्णादिकःपटेएवंवपुषिजीर्णादौना
त्माजीर्णादिकस्तथा॥७२॥चलमप्यचलप्रख्यंजगद्यस्यावभासते।ज्ञानयोगक्रियाहीनंसएवास्कंदतिशिवं
॥७३॥तनुत्रयावृतोदेहीज्योतिर्मयवपुःस्वयं।नवेत्तियावदात्मानंक्वतावद्बंधविच्युतिः॥७४॥गलन्मिलदणुव्र
तसन्निवेशात्मकंवपुः।वेत्तिमूढस्तदात्मानमनाद्युत्पन्नविभ्रमात्॥७५॥मुक्तिरेवमुनेस्तस्ययस्यात्मन्य
चलास्थितिः।नतस्यास्तिध्रुवंमुक्तिर्नयस्यात्मन्यवस्थितिः॥७६॥दृढःस्थूलःस्थिरोदीर्घोजीर्णःशीर्णोलघु
र्गुरुः।वपुषैवमसंबध्नन्स्वंविंद्याद्वेदनात्मकं॥७७॥जनसंसर्गवाक्चित्तपरिस्पंदमनोभ्रमाः।उत्तरोत्तरबीजा
निज्ञानीजनस्ततस्त्यजेत्॥७८॥नगग्रामादिषुस्वस्यनिवासंवेत्त्यनात्मवित्।सर्वावस्थासुविज्ञानीत्वस्मि

आच्छादित

परमाणुसमूह

असंयोजयत् = जानीयात्

पर्वतसम

औदारिक मिश्र कार्मण आत्मा

कुतः

रचनाविशेषः

वृत्तावृते संयमात्

निबंधनो॥ तदंभावात्पुनर्मोक्षो मुमुक्षुस्तेन तत्यजेत्॥८७॥ प्रागसंयममुत्सृज्य संयमैकतरो भवेत्॥ ततोपि
विरमेत्प्राप्य सम्यगात्मव्यवस्थितिम्॥८८॥ जातिलिंगमिति द्वंद्वमंगमाश्रित्य वर्तते॥ अंगात्मकश्च संसारस्तस्मा
जातिलिंग अज्ञानी
त्तद्द्वितयं त्यजेत्॥८९॥ अभेदविद्यथा पंगोर्वेत्ति चक्षुरचक्षुषि॥ अंगेपि च तथा वेत्ति संयोगाद्दृष्यमात्मनः॥९०॥
ज्ञानी
भेदविन्नं यथा वेत्ति पंगोश्च चक्षुरचक्षुषि॥ ज्ञातात्मा न तथा वेत्ति तं काये दृष्यमात्मनः॥९१॥ मत्तोन्मत्तादि चेष्टा
अज्ञानी
सु यथाज्ञस्य स्वविभ्रमः॥ तथा सर्वास्ववस्थासु न क्वचित्तत्वदर्शिनः॥९२॥ देहात्मदृष्टिर्मुच्येत चेज्जागर्ति पठत्यपि
स्वप्नोन्मत्तोपि मुच्येत तस्मिन्नुत्पन्ननिश्चयः॥९३॥ आत्मानं सिद्धमाराध्य प्राप्नोत्यात्मापि सिद्धतां॥ वर्तिप्रदी
पमासाद्य यथाभ्येति प्रदीपतां॥९४॥ आराध्यात्मानमेवात्मा परमात्मत्वमश्नुते॥ यथा भवति वृक्षः स्वं स्वेनो
प्राप्यते

त्वंज्ञानिहि

रिकलयविशुद्धंस्वात्मनात्मानमेव॥४॥इतिसाधारणंध्येयंध्यानयोर्धर्मशुक्लयोः॥विशुद्धिस्वामिभेदेनभेदं

सूत्रेनिरूपितः॥१०५॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेशुद्धोपचारयोगप्रकर

णम्॥ छ॥ अनादिविभ्रमान्मोहादनभ्यासादसद्ग्रहात्॥ज्ञातमप्यात्मनस्तत्वंप्रचलत्येवयोगिनः॥१॥प्रवि

द्यावासनावेशाविशेषविवशात्मना॥योज्यमानमपिस्वस्मिन्नचेतःकुरुतेरतिं॥२॥साक्षात्कर्तुमतःक्षिप्रंवि

श्वतत्वंयथास्थितं॥विशुद्धिंचात्मनःशश्वद्वस्तुधर्मेस्थिरीभवेत्॥३॥प्रलक्ष्यंलक्ष्यसंबंधात्स्थूलात्सू

क्ष्मंविचिंतयेत्॥सालंबाच्चनिरालंबंतत्वविन्तत्वमंजसा॥४॥आज्ञापायविपाकानांक्रमशःसंस्थितेःतथा

विचयोयःपृथक्तद्धिधर्मध्यानंचतुर्विधां॥५॥वस्तुतत्वंस्वसिद्धांतप्रसिद्धंयत्रचिंतयेत्॥सर्वज्ञाज्ञाभियोगेनत

१वस्तुतत्वं— उत्पादव्ययध्रौव्यस्वभावं

अवलोकयेत्

दाज्ञाविचयो मतः॥६॥ अनंतगुणपर्यायसंयुतं तत्त्रयात्मकं॥ त्रिकालविषयं साक्षाज्जिनाज्ञासिद्धमामनेत्॥७॥त
च्चा॥ सूक्ष्मं जिनेंद्रवचनं हेतुभिर्यन्न हन्यते॥ आज्ञासिद्धं च तद्ग्राह्यं नान्यथावादिनो जिनाः॥८॥ इति॥ प्रमाणनयनि
क्षेपैर्निर्णीतं तत्त्वमंजसा॥ स्थित्युत्पत्तिव्ययोपेतं चिदचिल्लक्षणं स्मरेत्॥९॥ श्रीमत्सर्वज्ञदेवोक्तं श्रुतज्ञानं च निर्म्म

अविनश्वरं

लं॥ शब्दार्थनिचितं तत्त्वमत्र चिंत्यमविप्लुतं॥१०॥ श्रुतज्ञानं तद्यथा॥ परिस्फुरति यत्रैतद्विश्वविद्याकदंबकं॥ द्रव्यभा
वन्निदानं द्विशब्दार्थज्योतिरग्रिमं॥११॥ अपारमतिगंभीरं पुण्यतीर्थं पुरातनं॥ पूर्वापरविरोधादिकलंकपरिवर्जितं
१२॥ नयोपनयसंपातगहनं गणिभिः स्तुतं॥ विचित्रमतिचित्रार्थसंकीर्णं विश्वलोचनं॥१३॥ अनेकपदविन्यासैः

विस्तारितं रचितैः

ः प्रकीर्णकैः॥ प्रसृतं तद्विभात्युच्चैः रत्नाकर इवापरं॥१४॥ मदमत्तोद्धतस्फुरच्छासनाशीविषांतकं॥ दुरंतघन

सूर्यमंडलं    १श्रुतज्ञानं    १श्रुतज्ञानेन

मिथ्यात्वध्वांतघर्मांशुमंडलं ॥१५॥ यत्पवित्रं जगत्यस्मिन्विशुध्यति जगत्त्रयी ॥ येन तद्धीमतां सेव्यं श्रुतज्ञानं चतु
र्विधं ॥१६॥ स्थित्युत्पत्तिव्ययोपेतं तृतीयं योगिलोचनं ॥ नयद्वयसमावेशात् सार्वं नादिव्यवस्थितं ॥१७॥ निःशेषनय
वज्र    पर्वत
निक्षेपनिकषग्रावसन्निभं ॥ स्याद्वादपविनिर्घातभग्नान्यमतभूधरं ॥१८॥ इत्यादिगुणसंदर्भनिर्भरं भव्यशुद्धिदं ॥ ध्या
यंतु धीमतां श्रेष्ठाः श्रुतज्ञानमहार्णवं ॥१९॥ यज्जन्मज्वरघातकं त्रिभुवनाधीशैर्यदभ्यर्चितं ॥ यत्स्याद्वादमहाध्वजं न
यप्राताकीर्णं च यत्प्रमतं ॥ उत्पादस्थितिभंगलांछनयुतं यस्मिन्पदार्थाः स्थितास्तच्छ्रीवीरमुखारविंदगदितं देया
युष्माकं च्छ्रुतं वः श्रियं ॥२०॥ वाग्देव्याः कुलमंदिरं बुधजनानंदैकचंद्रोदयं ॥ मुक्तेर्मंगलमग्रिमं शिवपथप्रस्थानदिव्यानकं
तत्त्वश्रन्यास्वेतपरमृगा सिंह
तत्त्वाभासकुरंगपंचवदनं भव्यान्विनेतुं क्षमं तच्छ्रोत्रांजलिभिः पिबंतु गुणिनः सिद्धांतवार्द्धेः पयः ॥२१॥ ये नैते निपतं

सर्वज्ञाज्ञां पुरस्कृत्य सम्यगर्थान् विचिन्तयेत् ॥ यत्र तद्ध्यानमाम्नातं आज्ञाख्यं योगिपुंगवैः ॥२३॥



वादिगिरयस्तुष्यंतियोगीश्वराभव्यायेनविदंतिनिर्वृत्तिपदंमुंचंतिमोहंबुधाः॥यद्बंधुर्यमिनांयदक्षयसुखस्या
धारभूतंनृणांतल्लोकद्वयशुद्धिदंजिनवचःपुष्याद्विवेकश्रियं॥२२॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयो
गप्रदीपाधिकारेआज्ञाविचयप्रकरणं॥३३॥अपायविचयंध्यानंतद्वदंतिमनीषिणः॥अपायःकर्मणांयत्रसोपा
यःस्मर्यतेबुधैः॥१॥तद्यथा॥श्रीमत्सर्वज्ञनिर्दिष्टंमार्गंरत्नत्रयात्मकं॥अनासाद्यभवारण्येचिरंनष्टाःशरीरिणः॥२॥
मज्जनोन्मज्जनंप्राप्ताश्चिज्जंतिभवसागरे॥वराकाःप्राणिनोप्राप्ययानपात्रंजिनेश्वरं॥३॥महाव्यसनसप्तार्चिःप्रदीप्ते
न्मकानने॥भ्रमतांद्यमयाप्राप्तंसम्यग्ज्ञानांबुधेस्तटं॥४॥अद्यापियदिनिर्वेदविवेकाग्रंड्मस्तकात्॥स्खले
वंजन्मांधःकूपपातोनिवारितः॥५॥अनादिभ्रमसंभूतंकथंनिर्वार्यतेमया॥मिथ्यात्वाविरतिप्रायंकर्मबंधनिबं

घनानंदसोहं शुद्धः प्रसिद्धात्मा दृग्बोधविमलेक्षण ॥ जन्मपंके चिरं खिन्नः खंऽऽमानः स्वकर्मणा ॥ ७ ॥ एकतः कार्मणं

सैन्यमहमेकस्ततोन्यतः ॥ स्थातव्यमप्रमत्तेन मयास्मिन्नरिसंकटे ॥ ८ ॥ निर्द्धूय कर्मसंघातं प्रबलध्यानवह्निना ॥

आत्मानं कदा स्वं शोधयिष्यामि धातुस्थमिव कांचनं ॥ ९ ॥ किमुपेयो ममात्मायं किं वा विज्ञानदर्शने ॥ चरणं चापवर्गाय त्रि

आत्मा भिः सार्द्धं स एव वा ॥ १० ॥ कोहं ममाश्रवः कस्मात्कथं बंधः क्व निर्जरा ॥ का मुक्तिः किं विमुक्तस्य स्वरूपं च निगद्यते ॥ ११ ॥

जन्मनः प्रतिपक्षस्य मोक्षस्यात्यंतिकं सुखं ॥ अव्याबाधं स्वभावोत्थं केनोपायेन लभ्यते ॥ १२ ॥ मय्येव विदिते साक्षा

आत्मा पदार्थाः

द्विज्ञातं भुवनत्रयं ॥ यतोहमेव सर्वज्ञः सर्वदर्शी निरंजनः ॥ १३ ॥ उक्तं च ॥ एको भावः सर्वभावः स्वभावः सर्वे भावा ए

कभावस्वभावाः ॥ एको भावस्तत्वतो येन बुद्धः सर्वे भावास्तत्वतस्तेन बुद्धाः ॥ १४ ॥ यावद्यावच्च संबंधो मम स्याद्वाह्यवस्तु

एकस्मिन्नात्मनि प्रतिबिंबिता.

न्निः॥ तावत्तावत्सदा स्वस्मिन्स्थितिः स्वप्नेपि दुर्घटा॥१५॥ तथ्यैवैते नुभूयंते पदार्था सूत्रसूचिताः॥ अतो मार्गेत्र ल
ब्धोहं प्राप्तो एव शिवास्पदं॥१६॥ इत्युपायो विनिश्चेयो मार्गच्यवनलक्षणः॥ कर्मणां च यथापायस्तूपायश्चात्मसि
॥१७॥ इति नयशतलीलालंबि निर्धूतदोषं च्युतसकलकलंकैः कीर्तितं ध्यानमेतत्॥ अविरतमनुपूर्वं ध्या
प्रमादं स्फुरति हृदि विशुद्धज्ञानभास्वत्प्रकाशः॥१८॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपा
अपायविचयप्रकरणम्॥ छ॥ स विपाक इति ज्ञेयो यः स्वकर्मफलोदयः॥ प्रतिक्षणसमुद्भूतश्चित्ररूपः शरीरिणां॥
१॥ कर्मजातं फलं दत्ते विचित्रमिह देहिनां॥ आसाद्य नियतं नाम द्रव्यादिकचतुष्टयं॥२॥ तद्यथा॥ स्रक्शय्यासन
यानवस्त्रवनितावादित्रमित्रांगजात्कर्पूरागुरुचंद्रचंदनवनक्रीडाद्रिसौधध्वजाना मातंगाश्च

प्राप्य

भक्ष्यान्नपानानि वांछ्रत्रादीन्युपगम्य वस्तुनिचयान् सौख्यं श्रयंते गिनः ॥ ३ ॥ क्षेत्राणि रमणीयानि सर्वर्तुसुखदानि च

भाला खड्ग छुरा गज

कामभोगास्पदान्युच्चैः प्राप्य सौख्यं निषेव्यते ॥ ४ ॥ प्रासासिक्षुरयंत्रपन्नगगरव्यालानलोग्रग्रहान् श्रीणोगंडक्रमि

कीच पाषाण बंदिग्रहान बेडी किलक

कीटकंटकरजः क्षाराश्थिपंकोपलान् ॥ कारान् श्रृंखलपूतिकुकांडनिगडक्रूरारिवैरांस्तथाऽव्याप्याप्य भजंति दुः

खमखिलं जीवा भवाब्धिस्थिता ॥ ५ ॥ निसर्गेणातिरौद्राणि भयक्लेशास्पदानि च ॥ दुःखमेवानुवंत्युच्चैः क्षेत्राण्यासा

द्य जंतवः ॥ ६ ॥ अरिष्टोत्पातनिर्मुक्तो वातवर्षार्तिवर्जितः ॥ शीतोष्मरहितः कालः स्यात्सुखाय शरीरिणां ॥ ७ ॥ वर्षातप

कारण

तुषाराढ्य इत्युत्पातादिसंकुलः ॥ कालः सदैव सत्वानां दुःखानलनिबंधनं ॥ ८ ॥ प्रशमादिसमुद्भूतो भावः सौख्याय दे

हिनां ॥ कर्मगौरवजः सोयं महाव्यसनमंदिरं ॥ ९ ॥ मूलप्रकृतयस्तत्र कर्मणामष्ट कीर्तिताः ॥ ज्ञानावरणपूर्वास्ता ज

न्मिनां बंधहेतवः॥१०॥ ज्ञानं त्वृत्तिकरं कर्म पंचभेदं प्रपंचितं। निरुद्धं येन जीवानां मतिज्ञानादिपंचकं॥११॥
कर्म दृगावरणसंज्ञकं। रुध्यते येन जंतूनां शश्वद्दिष्टार्थदर्शनं॥१२॥ वेदनीयं विदुः प्राज्ञा द्विधा कर्म शरीरिणाम्।
न्मधूलिप्तखड्गधारासमप्रभं॥१३॥ असुरोरगनराधीशसेवितं श्रूयते सुखं। सातोदयवशात्प्राणी संक
रोद्भवं॥१४॥ असद्वेद्योदयाज्जीवं शरीरं मानसं द्विधा। जीवैर्विषह्यते दुःखं शश्वच्छ्वभ्रादिभूमिषु॥१५॥ दृष्टिमोहप्रकोपे
न दृष्टिः साध्वी विलुप्यते। तद्विलोपान्निमज्जंति प्राणिनः श्वभ्रसागरे॥१६॥ चारित्रमोहपाकेन नांगिभिः प्राप्यते क्षणं।
भावशुद्ध्यात्मसात्कर्तुं चरणं स्वांतशुद्धिदं। १७ लब्ध्वापि यत्प्रमाद्यंति यत्संवलंत्यथ संयमात्। सोऽपि चारित्रमोहस्य
कः परिकीर्तितः॥१८॥ सुरायुराख्यककर्मपाकात्संभूय नाके प्रथितप्रभावैः। समर्थ्यते देहिभिरायुरग्र्यं सुखामृतां

दनलोलचित्तैः॥१९॥ नरायुषः कर्मविपाकयोगान्नरत्वमासाद्य शरीरभाजः॥ सुखासुखाक्रांतधियो नितांतं नयंति काल
बहुभिः प्रपंचैः॥२०॥ चरस्थिरविकल्पासु तिर्यग्गतिषु जंतुभिः॥ तिर्यगायुःप्रकोपेन दुःखमेवानुभूयते॥२१॥ नरका
शीघ्र
युःप्रकोपेन नरके चिंत्यवेदने॥ निपतत्यंगिनस्तूर्णं कृतार्तकरुणस्वराः॥२२॥ नामकर्मोदयः साक्षाद्धत्ते चित्राण्य
नेकधा॥ नामानि गतिजात्यादिविकल्पानीह देहिनाम्॥२३॥ गोत्राख्यं जंतुजातस्य कर्म दत्ते स्वकं फलं॥ शस्ताश
अंतरायके
स्तेषु गोत्रेषु जन्म निःपाद्य सर्वथा॥२४॥ निरुणद्धि स्वसामर्थ्याद्दानलाभादिपंचकं॥ विघ्नसंततिविन्यासैर्विघ्नकृ
त्कर्म देहिनाम्॥२५॥ मंदवीर्याणि जायंते कर्माण्यतिबलीन्यपि॥ अपक्वपाचनायोगात्फलानीव वनस्पतेः॥२६॥ अ
पक्वपाकः क्रियतेऽस्ततंद्रैस्तपोभिरुग्रैर्वरशुद्धियुक्तैः॥ क्रमाद्गुणश्रेणिसमाश्रयेण सुसंवृतांतःकरणैर्मुनींद्रैः॥२७॥

[शुक्लध्यानेन]
ङ्व्याद्युत्कृष्टसामग्रीमासाद्योग्रतपोबलात्॥ कर्माणि घातयंत्युच्चैस्तुर्यध्यानेन योगिनः॥२५॥ विलीनाशेषक
र्माणं स्फुरंतमतिनिर्मलं॥ [आत्मान] स्वं ततः पुरुषाकारं स्वांगगर्भगतं स्मरेत्॥२६॥ इति विविधविकल्पं कर्मचित्रस्वरूपं प्रति
समयमुदीर्णं जन्मवर्त्यंगभाजां॥ स्थिरचरविषयाणां भावयन्नस्ततंद्रो दहति [पापवन] दुरितकक्षं संयमी शांतमोहः॥
२७॥ इत्थं कर्मकटुप्रपाककलितासंसारघोरार्णवे जीवा दुर्गतिदुःखवाडवशिखासंतानसंतापिता॥ मृ
महोर्मिजालनिचिता मिथ्यात्ववातेरिताः [पवने प्रेरिताः]॥ क्लिश्यंते तदिदं स्मरंतु नियतं धन्याः स्वसिद्ध्यर्थिनः॥२८॥ दु
र्यश्री शुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे विपाकविचयप्रकरणं॥३४॥ अनंतानंतमाकाशं सर्व
[स्वभावे स्थितं] सुप्रतिष्ठितं॥ तन्मध्येयं स्थितो लोकः श्रीमत्सर्वज्ञवर्णितः॥१॥ स्थित्युत्पत्तिव्ययोपेतैः पदार्थैश्चेतनेतरैः॥ सं

[आकाश] [आकाशं] [पद्विते]

नादिमं सिद्धं कर्तृव्यापारवर्जितं॥५॥ऊर्ध्वाधोमध्यभागैर्यो बिभर्ति भुवनत्रयं॥अतः स एव सूत्रज्ञैस्त्रैलोक्याधार

[घनोदधि]

इष्यते॥६॥पर्युपरि संक्रांतैः सर्वतोपि निरंतरैः॥त्रिभिर्वायुभिराकीर्णो महावेगैर्महाबलैः॥७॥घनाब्धिः प्रथ

[पवनानां] [घनवात] [धृत्वा]

मस्तेषां ततोन्यो घनमारुतः॥तनुवातस्तृतीयोंते विज्ञेया वायवः क्रमात्॥८॥उद्धृत्य सकलं लोकं स्वशक्त्यै

[अंतरहिते] [पवन] [स्थूलवादीर्घशरीराः]

व व्यवस्थिताः॥पर्यंतरहिते व्योम्नि मरुतः प्रांशुविग्रहाः॥९॥घनाब्धिवलये लोकः स घनांते व्यवस्थितः॥तनुवा [घनोदधि] [घनवात]

तांतरे सोपि संचाकाशे स्वयं स्थितिः॥१०॥अधो वेत्रासनाकारो मध्ये स्याज्झल्लरीनिभः॥मृदंगसदृशश्चाग्रे समित्त्रि

धेति व्यवस्थितः॥११॥अस्य प्रमाणमुन्नत्या सप्त सप्त च रज्जवः॥सप्तैकापंचैकाच मूलमध्यांतविस्तरे॥१२॥तत्राधो

भागमासाद्य संस्थिताः सप्त भूमयः॥यासु नारकषंढानां निवासः संति भीषणाः॥१३॥काश्चिद्दग्ध्वानलप्रख्याः का

श्चिच्छीतोष्मसंकुलाः॥ तुषारबहुलाः काश्चिद्भूमयोऽत्यंतभीतिदाः॥११॥ उदीर्णानलदीप्तासु निमग्नोष्मासु
मिषु मेरुमात्रोऽप्ययःपिंडः [लोह पिंड] क्षिप्तः सद्यो विलीयते॥१२॥ शीतभूमिष्वपि प्राप्तो मेरुमात्रोऽपि शीर्यते॥ शतधासं
वयःपिंडः प्राप्य भूमिं क्षणांतरे॥१३॥ हिंसास्तेयानृताब्रह्मबह्वारंभादिपातकैः॥ विशंति नरकं घोरं प्राणिनो
निर्दयाः॥१४॥ मिथ्यात्वाविरतिक्रोधरौद्रध्यानपरायणाः॥ पतंति जंतवः श्वभ्रे कृष्णलेश्यावशंगताः॥१५॥
सिपत्रवनाकीर्णे पुत्रशूलासिसंकुले॥ नरकेऽत्यंतदुर्गंधे वसासृक्कृमिकर्दमे॥१६॥ शिवा [स्यालणी] श्वव्या
मांसाशि [मांसभक्षी] विहगाचिते [सेवुके]॥ वज्रकंटकसंकीर्णे शूलशाल्मलिदुर्गमे॥१७॥ संभूय [उत्पद्य] कुष्टिकामध्ये [सरावसंपुटमध्ये] ऊर्द्धपादाव
धोमुखाः॥ ततः पतंति साक्रंदं वज्रज्वलनभूतले॥१८॥ अयःकंटककीर्णासु द्रुतलोहाग्निवीथिषु [भूमिषु]॥ छिन्नभि

सामस्तेन

विशीर्णा गात्रा उत्पतंति पतंति च ॥१९॥ दुःसहानि प्रतीकारा ये रोगाः संति केचन । साकल्येनैव गात्रेषु नारका
णां भवंति ते ॥२०॥ अदृष्टपूर्वमालोक्य तस्य रौद्रं भयास्पदं । दिशः सर्वाः समीक्षंते वराकाः शरणार्थिनः ॥२१॥
शरीरा
न तत्र सुजनः कोपि न मित्रं न च बांधवाः । सर्वे ते निर्दयाः पापाः क्रूरा भीमोग्रविग्रहाः ॥२२॥ सर्वे च कुंडसंस्थान
शब्दे
स्फुलिंगसदृशेक्षणाः । विवर्द्धितांगुभध्यानाः प्रचंडाश्चंडशासनाः ॥२३॥ तत्राक्रंदरवैः सार्द्धं श्रूयते कर्कश
स्वनाः । दृश्यंते गृध्रगोमायुसर्प्पशार्दूलमंडलाः ॥२४॥ घ्रायंते पूतयो गंधाः स्पृश्यंते वज्रकंटकाः । जलानि
पूतिगंधीनि नद्योस्रग्मांसकर्द्दमाः ॥२५॥ चिंतयंति तदा लोकपरोऽस्मत्यंतशंकिताः । केयं भूमिः क्व चानीताः के
वयं केन कर्मणा ॥२६॥ ततो विदुर्विभंगात्त्वं पतितं श्वभ्रसागरे । कर्मणात्यंतरौद्रेण हिंसाद्यारंभजन्मना ॥२७॥

ततः प्रादुर्भवत्युच्चैः पश्चात्तापोऽतिदुःसहः। दहन्नविरतं चेतो वज्राग्निरिव निर्दयः॥२८॥ मनुष्यत्वं समासाद्य
केश्चिन्महात्मभिः। अपवर्गाय संविग्नैः कर्म पूज्यमनुष्ठितं॥२९॥ विषयाशामपाकृत्य विध्याप्य दहनानलं
सावधानै आचरित
प्रमत्तैस्तपश्चीर्णं धन्यैर्जन्मार्तिशांतये॥३०॥ उपसर्गाग्निपातेपि धैर्यमालंब्य चोन्नतं। तैः कृतं तदनुष्ठानं ये
सिद्धं समीहितं॥३१॥ प्रमादमदमुत्सृज्य भावशुद्ध्या मनीषिभिः। केनाप्यचिंत्यवृत्तेन स्वर्गमोक्षश्च साधितः
पूअवगणिताः= शिवाभ्युदयदं मार्गं दिशंतोप्यतिवत्सलाः। मया वधीरिताः संतो निर्भर्त्स्य कटुकाक्षरैः॥३२॥ आत्मन्नपि
च्युत्वे परलोकैक शुद्धिदो मया तत्संचितं कर्म यज्ञातं श्वभ्रसंबलं॥३३॥ अविद्याक्रांतचित्तेन विषयांधीकृता
नां चरस्थिरांगिसंघातो निर्दोषोपि हतो मया॥३४॥ परवित्तामिषासक्तः परस्त्रीसंगलालसः। बहुव्यसनवि

२ नरकसामग्री

कारणाय = प्राय
प्रेतस्य = शोधनंदंडं

त्तोरौद्रध्यानपरायणः॥४६॥यत्स्थितः प्राक्चिरं कालं तस्यैतत्फलमागतं॥अनंतयातनासारे दुरंते श्वभ्रसाग
रे॥४७॥यन्मयावंचितो लोको वराको मूढमानसः॥उपायैर्बहुभिर्निंद्यैः स्वाक्षसंतर्पणार्थिना॥४८॥कृतः परा
भवो येषां धनभूःस्त्रीकृते मया॥घाताश्च तैरत्र संप्राप्ताः कर्तुं तस्याद्य निःक्रयं॥४९॥येतदा शशकप्रायां मया बल
वता हताः॥ तेत्र जाता मृगेंद्राभा हंतुं मां विविधैर्वधैः॥५०॥मनुष्येपि स्वतंत्रेण यत्कृतं नात्मनो हितं॥तदद्य किं क
रिष्यामि दैवपौरुषवर्जितः॥५१॥मदांधेनातिपापेन निस्त्रिंशेनास्तबुद्धिना॥विराध्याराध्यसंतानं कृतं कर्म
ति निंदितं॥५२॥यत्पुरग्रामविंध्येषु मयाक्षिप्तो हुताशनः॥जलस्थलबिलाकाशचारिणो जंतवो हताः॥५३॥अर्ज
तं ति मम मर्माणि स्मर्यमाणान्यनारतं॥प्राचीनान्यद्य कर्माणि क्रकचानीव निर्दयं॥५४॥किं करोमि क्व गच्छामि

आत्माधीनेन; हितं; निर्दयेन; २ मनुष्यभवे

१ पूर्वोपार्जितानी = ; करवतानीव

२ सागरोपमै

कर्मजाते पुरस्थिते॥ शरणं किं प्रपद्यामि वराको दैववंचित॥४५॥ यन्निमेषमपि सोढुं स्मर्तुं श्रोतुं न शक्यते॥ तद्दु
खं मे त्र सोढव्यं वार्द्धिमानैः कथं मया॥४६॥ एतान्यदृष्टपूर्वाणि बिलानि च कुलानि च॥ यातनाश्च महाघोरा नारका
अवलोकिताः · कर्मणा
णां मयेक्षिता॥४७॥ विषज्वलनसंकीर्णं वर्द्धमानं प्रतिक्षणं॥ मम मूर्द्धि विनिक्षिप्तं दुःखं दैवेन निर्दयं॥४८॥ न द्व
निमित्ते
प्यते त्र ते भृत्या न पुत्राः न च बांधवाः॥ येषां कृते मया कर्म कृतं स्वस्यैव घातकं॥४९॥ न कलत्राणि मित्राणि न पा
निर्दय = निर्दय
पे प्रेरको जनः॥ पदमप्येकमायातो मया सार्द्धं गतत्रपः॥५०॥ आश्रयंति यथा वृक्षं फलितं पत्रिणः पुरा॥ फलापा
ये पुनर्यांति तथा ते स्वजना गताः॥५१॥ शुभाशुभानि कर्माणि यांत्येव सहदेहिनि॥ स्वार्जितानीति यत्प्रोचुः संत ६ कथयतिस्म
धर्मः
स्तत्सत्यतां गतं॥५२॥ धर्म एव समुद्धर्त्तुं शक्तो स्मात् श्वभ्रसागरात्॥ न स स्वप्नेपि पापेन मया सम्यक् उपार्जितः॥५३॥ स

हाय: कोपि कस्यापि नाभून्न च भविष्यति ॥ मुक्त्वैकं प्राकृतं कर्म सर्वसत्त्वाभिनंदकं ॥ ५४ ॥ तत्कुर्वंत्यधमाः कर्म जिह्वोपस्थादिदंडिताः ॥ येन श्वभ्रेषु पच्यंते कृतांतकरुणास्वनाः ॥ ५५ ॥ च स्मरन्निमेषमात्रस्य सुखस्यार्थे कृतं मया ॥ तत्पापं येन संपन्ना अनंता दुःखराशयः ॥ ५६ ॥ यातिमांद्ये ततः पातिकरोति नियतं हितं ॥ हंति दुःखं सुखं दत्ते यः सबंधुर्निपोषितः ॥ ५७ ॥ परिग्रहमहाग्राहसंग्रस्तेनार्तचेतसा ॥ न दृष्टा यमशार्दूलचपेटा जीवनाशिनी ॥ ५८ ॥ पातयित्वा महाघोरे मां श्वभ्रेऽचिंत्यवेदने ॥ क्व गतास्तेऽधुना पापा मद्वित्तफलभोजिनः ॥ ५९ ॥ इत्यजस्रं सुदुःखार्त्ता विलापमुखराननाः ॥ शोचंतः पापकर्माणो वसंति नरकालये ॥ ६० ॥ यावंति संति लोमानि शरीरे देहधारिणः ॥ तावंतो नरके कल्पा वसंति पिपासितार्त्तानाः ॥ ६१ ॥ इति चिंतानलेनोच्चैर्दह्यमानस्य ते तदा ॥ धावंति शरशूलासिकराः क्रोधाग्निदीपिताः ॥ ६२ ॥

७ नारकाः

लोहितं ॥११॥ बलाद्विदार्य संदंशैर्वदनं क्षिप्यते क्षणात् ॥ विलीनं प्रज्वलं ताम्रं यैः पीतं मद्यमुद्धतैः ॥१२॥ परमांसा
नि यैः पापैर्भक्षितान्यत्र निर्दयैः ॥ शूलपक्वानि मांसानि तेषां खादंति नारकाः ॥१३॥ यैः प्राक्परकलत्राणि सेवि
तान्यात्मवंचकैः ॥ योज्यंते प्रज्वलंतीभिः स्त्रीभिस्ते ताम्रजन्मभिः ॥१४॥ न सौख्यं चक्षुरुन्मेषमात्रमप्युपलभ्यते
नरके नारकैर्दीनैर्हन्यमानैः परस्परं ॥१५॥ किमत्र बहुनोक्तेन जन्मकोटिशतैरपि ॥ केनापि शक्यते वक्तुं न दुःखं न
रकोद्भवं ॥१६॥ विस्मृतं यदि केनापि कारणेन क्षणांतरं ॥ स्मारयंति तदाभ्येत्य पूर्ववैरं सुराधमाः ॥१७॥ बुभुक्षा जाय १आग
ते त्यर्थं नरके तत्र देहिनां ॥ यां न शामयितुं (तृप्तयितु) शक्तः पुद्गलप्रचयोऽखिलः ॥१८॥ तृष्णा भवति या तेषु वाडवाग्निरिवोल्ब ६उत्कट
णा ॥ न सा शाम्यति निःशेषैः पीतैरप्यंबुराशिभिः ॥१९॥ बिंदुमात्रं न तैर्वारि प्राप्यते पातुमातुरैः ॥ तिलमात्रोपि नाहा

भ्रमितुं लभ्यते हि तैः ॥ ६० ॥ तिलादप्यतिसूक्ष्माणि कृतखंडानि निर्दयैः । वपुर्मिलति वेगेन न पुनस्तेषां वि
शातं ॥ ६१ ॥ यातना रुक् कुपारी रायुर्लेपूया दुःखभयादिकं वर्द्धमानं विनिश्चेयं मघोधः श्वभ्रभूमिषु ॥ ६२ ॥ स्वमध्यभाग
स्ततो मध्ये आस्ते सौ झल्लरीनिभः । यत्र द्वीपसमुद्राणां व्यवस्था वलयाकृतिः ॥ ६३ ॥ जंबूद्वीपादयो द्वीपा लवणोदा
दयोऽर्णवाः । स्वयंभुरमणांतास्ते प्रत्येकं द्वीपसागराः ॥ ६४ ॥ द्विगुणद्विगुणाभोगाः प्रावृत्यान्योन्यमास्थिताः ।
भनामानो वलयाकारधारिणः ॥ ६५ ॥ मानुषोत्तरशैलेंद्रमध्यस्थमतिसुंदरं । नरक्षेत्रं सरिच्छैलसुराचलवि
तं ॥ ६६ ॥ तत्रार्यम्लेच्छखंडानि भूरिभेदानि तेषु भूमी । आर्यम्लेच्छा नराः संति तत्क्षेत्रजनितैर्गुणैः ॥ ६७ ॥
नुष्योपेतं क्वचिद्व्यंतरसंभृतं । क्वचिद्भोगधराकीर्णं नरक्षेत्रं निरंतरं ॥ ६८ ॥ ततो नभसि तिष्ठंति विमानानि दिवौ ॥११७॥

पीडा रोग ज्ञातव्यः मध्यलोके गोलाकृति विस्ताराः वेष्टनेन हिमवतादि नरक्षेत्रेषु देवानां

१ भेदानी — स्वर्गाः

कर्मा ॥ चरस्थिरविकल्पानि ज्योतिष्काणां यथाक्रमं ॥८९॥ तदूर्ध्वं संति देवेशकल्पाः सौधर्मपूर्विकाः ॥ ते षोडश
च्युतास्वर्गपर्यंता नभसि स्थिताः ॥९०॥ उपर्युपरि देवेशनिवासयुगलक्रमात् ॥ अच्युतांतं ततोप्यूर्ध्वमेकैकं
त्रिदशास्पदं ॥९१॥ निशादिनविभागोयं न यत्र त्रिदशास्पदे ॥ रत्नालोकः स्फुरत्युच्चैः सततं नेत्रसौख्यदः ॥९२॥
वर्षातपतुषारादिसमयैः परिवर्जितः ॥ सुखदः सर्वदा सौम्यस्तत्र कालः प्रवर्तते ॥९३॥ उत्पातभयसंतापभंगवै
रादिविद्रुराः ॥ न हि स्वप्नेपि दृश्यंते क्रुद्धसत्त्वाश्च दुर्जनाः ॥९४॥ तद्भूम्यः ॥ चंद्रकांतशिलानद्धाः प्रवालदलदंतु
राः ॥ वज्रेंद्रनीलनिर्माणा विचित्रास्तत्र भूमयः ॥९५॥ माणिक्यरोचिषां चक्रैः कर्बुरीकृतदिङ्मुखाः ॥ वाप्यः स
र्णोबुजछन्ना रत्नसोपानराजिताः ॥९६॥ सरांस्यमलवारीणि हंसकारंडमंडलैः ॥ वाचालैरुद्धतीर्थानि दिव्य

रात्रि दिन भेद · प्रकाश · कालैः · भयदाः · बद्धाः · खचि · दीप्ताना

७ समूहे — ७ तटानि

॥ज्ञानार्णव॥
॥११०॥

नारीजनेन च ॥८१॥ वः कामदुघाः सर्व्वाः कल्पवृक्षाश्च पादपाः ॥ चिंतारत्नानि रत्नानि स्वर्गलोके स्वभावतः

इंद्राः

॥८२॥ ध्वजचामरछत्राङ्कैर्विमानैर्वनितासखाः ॥ संचरंति सुरास्सारैः सेव्यमानाः सुरेश्वराः ॥८३॥ यक्षकिन्न

आलिंगिताभिः पुष्पलतापिहितोदरेषु

रीभिर्मंदारवनवीथिषु ॥ कांताश्लिष्टाभिः सानंदं गीयंते त्रिदशेश्वराः ॥८४॥ क्रीडागिरिनिकुंजेषु पुष्पश्र

हेषु च ॥ रमंते त्रिदशा यत्र वरस्त्रीवृंदवेष्टिताः ॥८५॥ मंदारचंपकाशोकमालतीरेणुरंजिताः ॥ भ्रमंति यत्र

सुगंधपवन मंदे मंदे

त्वगंधवाहाः शनैः शनैः ॥८६॥ लीलावनविहारैश्च पुष्पावचयकौतुकैः ॥ जलक्रीडादिविज्ञानैर्विलासा

मृदंगा ताडिता

स्तत्र योषितां ॥८७॥ वीणामादाय रत्यंते कलं गायंति योषितः ॥ ध्वनंति मुरजा धीरं दिविदेवांगनाहताः ॥८८॥

किलाः कल्पवृक्षेषु चैत्यागारेषु योषितः ॥ विबोधयंति देवेशान्ललितैर्गीतनिस्वनैः ॥८९॥ नित्योत्सवयुतं ॥११०॥

संबोधयंति इंद्रान्

२वाप्य.　　२वनमध्ये

सर्व्वाभ्युदयमंदिरं सुखसंपद्गुणाधारकैः स्वर्गमुपमीयते द्वीपं । पंचवर्णमहारत्ननिर्माणाः सप्तभूमिकाः प्रासा
दाः पुष्करिण्यश्चऽऽद्ग्रालावनांतरे ।७। प्राकारपरिखावप्रगोपुरोत्तुंगतोरणैः । चैत्यद्रुमसुरागारैर्नगर्यो रत्नरा
जिताः ।८। इंद्रायुधश्रियं धत्ते यत्रा नित्यं नभस्तलं । हर्म्याग्रलग्नमाणिक्यमयूखैः कर्बुरीकृतं ।९। मणिभित्ति
दप्राणीकैर्विमानैरंगनान्वितैः । कल्पद्रुमगिरींद्रेषु रमंते विबुधेश्वराः ।१०। हस्त्यश्वरथपादातवृषान्गंधर्व्वन
र्तकीम् । सप्तानीकानि संत्यस्य प्रत्येकं च महत्तरान् ।११। शृंगारसारसंपूर्णलावण्यवनदीर्घिकाः । पीनस्तन
भराक्रांताः पूर्णचंद्रनिभानना ।१२। विनीताः कामरूपिण्यो महर्द्धिमहिमान्विताः । हावभावविलासाढ्यानि
तंबभरमंथराः ।१३। अनन्ये शृंगारसर्वस्वमेकीकृत्य विनिर्मिताः । स्वर्गवासिविलासिन्यः संति मूर्त्ता इव श्रियः ।१४।

ज्ञानार्णव ॥११९॥

आलिंगनादि

तवादित्रविद्यासु शृंगाररसभूमिषु ॥ परिरंभादिसंगेषु स्त्रीणां दाक्ष्यं स्वभावतः ॥१५॥ सर्वावयवसं

काम देवसमाना उच्चशरीरा

दिव्यलक्षणलक्षिताः ॥ अनंगप्रतिमा धीराः प्रसन्नाः प्रांशुविग्रहाः ॥१६॥ हारकुंडलकेयूरकिरीटांगदभू

प्रभूतउत्साह मंत्र ३

ताः मंदारमालतीगंधा अणिमादिगुणान्विताः ॥१७॥ प्रसन्नामलपूर्णेंदुकांताः कांतजनप्रियाः ॥ प्राक्तित्र

क्रीडा

णोपेताः प्राप्तक्रीडालीलावलंबिनः ॥१८॥ विज्ञानविनयोद्दामप्रीतिप्रसरसंभृताः ॥ निसर्गसुभगाः स्वर्गे भवंति

देवा.

दिवौकसः ॥१९॥ न तत्र दुःखितो दीनो वृद्धो रोगी गुणच्युतः ॥ विकलांगो गतश्रीकः स्वर्गलोके विलोक्यते ॥२०॥

सभापति — देवाना निकटवर्ती परिवार अति चतुरस्त्री

भ्यसामानिकामात्यलोकपालप्रकर्णकाः ॥ मित्राद्यं निमतं तेषां पार्श्ववर्त्ती परिग्रहः ॥२१॥ बंदिगायकपौ

अतिमनोज्ञता

षी स्वांगरक्षा पदातयः ॥ नटवेत्रिविलासिन्यः सुराणां सेवको जनः ॥२२॥ तत्रातिभव्यताधारे विमाने ॥११९॥

मले उपपादशिलागर्भे संभवंति स्वयं सुराः॥२३॥ सर्वाक्षसुखदे रम्ये नित्योत्सवविराजिते॥ गीतवादित्रली
लाढ्ये जयजीवस्वनाकुले॥२४॥ दिव्याकृतिसुसंस्थानाः सप्तधातुविवर्जिताः॥ कायकांतिपयःपूरैः प्रसा
१ व्यापितदिशांतराः धितदिगंतराः॥२५॥ शिरीषसुकुमारांगाः पुण्यलक्षणलक्षिताः॥ अणिमादिगुणोपेताः ज्ञानविज्ञानपारगाः
२ चंद्रबिंबाभा — वात पित्तश्लेष्मरहिताः ॥२६॥ मृगांकमूर्तिसंकाशाः शांतदोषाः शुभाशयाः॥ अचिंत्यमहिमोपेताः भयक्लेशादिविवर्जिताः॥२७॥ वर्द्धमा
नमहोत्साहा वज्रकाया महाबलाः॥ अचिंत्यपुण्ययोगेन गृह्णंति वपुरूर्जितं॥२८॥ सुखामृतमहांभोधेर्म ५ गाढ हंवं
ध्यादिव विनिर्गताः॥ भवंति त्रिदशाः सद्यः क्षणेन नवयौवनाः॥२९॥ किंच पुष्पफलाक्रांतैः प्रवालदलदंतुरैः॥ ६ खचि
७ देवानां तेषां कोकिलवाचालैर्द्रुमैर्जन्म निगद्यते॥३०॥ गीतवादित्रनिर्घोषैर्जयमंगलपावकैः॥ विबोध्यंते शुभैः शब्दैः

१ देव    १ दिशाः    १ तदाइतिचिंतयति

सुखसुप्ताइवस्वयं॥३१॥किंचिन्नूममपाकृत्यवीक्षतेसंशानैःशनैः॥याबदाशामुखःस्निग्धैस्तदाकर्णांतलोच
नैः॥३२॥इंद्रजालमथस्वप्नःकिंनुमायाभ्रमोनुकिं॥दृश्यमानमिदंचित्रंनायातिममनिश्चयं॥३३॥इदंरम्या
सेव्यमिदंश्लाघ्यमिदंहितं॥इदंप्रियमिदंभव्यमिदंचित्तप्रशांतिदं॥३४॥एतत्कंदलितानंदमेतत्कल्याणमं
एतन्नित्योत्सवाकीर्णमेतदत्यंतसुंदरं॥३५॥सर्वर्द्धिमहिमोपेतंमहर्द्धिकसुरार्चितं॥सप्तानीकान्वितंभातित्रि
प्रोद्दसभाजिरं॥३६॥किंच॥मामेवोद्दिश्यसानंदःप्रवृत्तःकिमयंजनः॥पुण्यमूर्तिःप्रियःश्लाघ्योविनीतो
तवत्सलः॥३७॥अत्रैलोक्यनाथसंसेव्यःकोयंदेशःसुखाकरः॥अनंतमहिमाधारोविश्वलोकाभिनंदितः॥३८॥
पुरमतिस्फीतंवनोपवनराजितं॥अभिभूयजगत्कृत्यावलातीवध्वजांशुकैः॥३९॥प्राकलय्यंतदाकूतंस

मनोज्ञ    स्थान    विकशितं    अंगणं    अभिक्रम्य    विस्तीर्ण    अतिक्रम्य    नृत्यतीव    ज्ञात्वा

४ सप्तसेनास्स    ६ वर्द्धितः    ७ तस्यइंद्रस्याभिप्रायं    सभापतय.

नम्रीभूतं अवसरयोग्य नम्रीभूतानां दृष्ट्या

वादिव्यचक्षुषः॥नतिपूर्वंप्रवर्त्ततेवक्तुंकालोचितंतदा॥४०॥प्रसादःक्रियतांदेवनतानांस्वेच्छयादृशा॥श्रूय
तांचवचोस्माकंपौर्वापर्यप्रकाशकं॥४१॥तद्यथा॥अद्यनाथवयंधन्याःसफलंचाद्यजीवितं॥अस्माकंयत्व
यास्वर्गःसंभवेनपवित्रितः॥४२॥प्रसीदजयजीवत्वंदेवपुण्यस्तवोद्भवः॥भवःप्रभुःसमग्रस्यस्वर्गलोकस्य
संप्रति॥४३॥सौधर्मोयंमहाकल्पःसर्वामरशतार्च्चितः॥नित्यांनिनंदकल्याणवार्द्धिवर्द्धनचंद्रमाः॥४४॥कल्प
सौधर्म्मनामायमीशानप्रमुखाःसुराः॥इहोत्पन्नस्यशक्रस्यकुर्वंतिपरमोत्सवं॥४५॥पाठांतरं॥अत्रसंकल्पि
ताःकामानवंनित्यंचयौवनं॥अत्राविनश्वरीलक्ष्मीःसुखंचात्रनिरंतरं॥४६॥स्वर्विमानमिदंरम्यंकामगंकांत
दर्पनं॥पादांबुजनताचेयंतवत्रिदशमंडली॥४७॥एतेदिव्यांगनाकीर्णाश्चंद्रकांतमनोहराः॥प्रासादारत्न

वांछित मनोज्ञ

प्रकाशं

पंश्चक्रीडानद्यश्चभूधराः॥४०॥सभाभवनमेतत्तेनतामरव्रातार्चितं॥रत्नदीपकृतालोकंपुष्पप्रकरशोभितं॥
४१॥विनीतवेषधारिण्यःकामरूपावरस्त्रियः॥तवादेशंप्रतीक्ष्यंतेलास्यलीलारसोत्सुकाः॥४२॥
मिदंचहरिविष्टरं॥एतच्चचामरव्रातमेतेविजयकेतवः॥४३॥एताअग्रमहादेव्योवरस्त्रीवृंदवंदिताः॥तरुणी

पूदेवानां =

रांधीशलावण्यैश्वर्यसंपदः॥४४॥शृंगारजलधेर्वेलाविलासोद्भासितभ्रुवः॥लीलालंकारसंपूर्णास्तवना
॥४५॥सर्वविषयवनिर्माणश्रीरामानोपमास्पदं॥यासांश्लाघ्यमलंस्निग्धपुण्यपण्यप्रभवंवपुः॥४६॥अयमै
णोनामदेवदंतीमहामनाः॥४७॥धत्तेगुणाष्टकैश्वर्यांऋद्धिंयंविश्वातिशायिनी॥४८॥इदंमत्तगजानीकमितोऽश्वी
वं॥एतेस्वर्णरथास्तुंगावल्गंत्येतेपदातयः॥४९॥एतानिसप्तसैन्यानिपालितान्यमरेश्वरैः॥नमंतितेपदद्वंद्वंवेत्ति

अश्वसमूहं

२ तव

१ कथिते सति

प्तिपूर्वकं॥४॥ तमग्रं स्वर्गसाम्राज्यं दिव्यभूत्योपलक्षितं। पुण्यैस्ते संमुखीभूतं गृहाण प्रणतामर॥५॥ इति वादिनि सु
स्निग्धे सचिवे त्वं तवत्सले। अवधिज्ञानमासाद्य पौर्वापर्यं स बुध्यते॥६॥ अहो तपः पुराचीर्णं मयान्यजनदुश्चरं
दर्शनज्ञानचारित्रतप
वितीर्णं चाभयं दानं प्राणिनां जीवितार्थिनां॥७॥ आराधितं मनः शुद्ध्या दृग्बोधादिचतुष्टयं। देवश्च जगतां नाथः
सर्वज्ञः परमेश्वरः॥८॥ निर्दग्धं विषयारण्यं स्मरवैरी निपातितः। कषायतरवश्छिन्ना रागशत्रुर्नियंत्रितः॥९॥ स
वी
र्वसत्त्वस्य प्रभाय्य मह्यं ये नाद्य दुर्गतेः। उद्धृत्य स्थापितः स्वर्गराज्ये त्रिदशवंदिते॥१०॥ रागादिदहनज्वालां न प्रशाम्यंति
चारित्र
देहिनां। सद्वृत्तवार्यसंसिक्ताः क्वचिज्जन्मशतैरपि॥११॥ तन्नात्र सुलभं मन्ये तत्किं कुर्मोऽधुना वयं। सुराणां स्वर्गलो
के स्मिन्न दर्शनस्यैव योग्यता॥१२॥ अतस्तत्त्वार्थश्रद्धां मे श्रेयसी स्वार्थसिद्धये। अर्हद्देवपदद्वंद्वे भक्तिश्चात्यंतनिश्च

१ जिनबिंबाना

लाः॥ दृष्ट्यान्यत्र प्रतिबिंबानि स्वर्गलोके जिनेशिनां॥ विमानचैत्यवृक्षेषु मेर्वाद्युपवनेषु च॥६८॥ तेषां पूर्वं
कृत्वा सद्द्रव्यैः स्वर्गसंभवैः॥ पुष्पचंदननैवेद्यैर्गंधदीपाक्षतोत्करैः॥६९॥ गीतवादित्रनिर्घोषैः स्तुतिस्तोत्रैर्मनो
हरैः॥ स्वर्गैश्वर्यं ग्रहीष्यामि ततस्त्रिदशवंदितं॥६९॥ इति सर्वज्ञदेवस्य कृत्वा पूजामहोत्सवं॥ स्वीकुर्वंति तदा
पट्टबंधादिलक्षणं॥७०॥ तस्मिन् (स्वर्गे) मनोजवैर्यानैर्विचरंतो यदृच्छया॥ वनाद्रिसागरांतेषु दीव्यंति त्रिदिवौकसः
७१॥ संकल्पानंतरोत्पन्नैर्दिव्यभोगैः समर्पितं (निश्चयानीत)॥ सेव्यमानाः सुरानीकैः (इन्द्रादिदेवाः) प्रयांति स्वर्गिणः सुखं॥७२॥ महाप्र — ४ क्रिडयंति
पन्नैर्महाभूत्योपलक्षितै॥ कालं गतं न जानंति निमग्नाः सौख्यसागरे॥७३॥ क्वचिद्गीतैः क्वचिन्नृत्यैः क्वचिद्वाद्यै
र्मनोहरैः॥ क्वचिद्विलासिनीव्रात (समूह) क्रीडाशृंगारदर्शनैः॥७४॥ मंद्यतूर्यग्रहज्योतिर्भूषाभोजनविग्रहाः॥ स्रग्दी

माद्यकवस्तु वाद्य — उद्योत — आभूषण — पुष्पमाला

१ देवांगना १ कल्पवृत्ती. १ स्वर्गवासिन:

स्त्रपात्रांगादशधा कल्पपादपाः॥७५॥ दशांगभोगजैः सौख्यैर्लाल्यमानाः क्वचित्क्वचित्॥ वसंति स्वर्गिणः स्वर्गे
कल्पनातीतवैभवे॥७६॥ यत्सुखं नाकिनां स्वर्गे तद्वक्तुं केन पार्यते॥ स्वभावजमनातंकं सर्वाक्षप्रीणनक्षमं॥७७
अशेषविषयोद्भूतं दिव्यस्त्रीसंगसंभवं॥ विनीतजनविज्ञानैर्ज्ञानाद्यैश्वर्यलांछितं॥७८॥ सो धर्माद्यं च्युतां तायं
कल्पाः षोडशा वर्णिताः॥ कल्पातीतास्ततो ज्ञेया देवा वैमानिकाः परे॥७९॥ अहमिंद्राभिधानास्ते प्रवीचारविवर्जि
ताः॥ विवर्द्धितशुभध्यानाः शुक्ललेश्यावलंबिनः॥८०॥ अनुत्तरविमानेषु श्रीजयंतादिपंचसु॥ संभूय स्वर्गिणश्च्युत्
त्वा व्रजंति पदमव्ययं॥८१॥ कल्पेषु च विमानेषु परतः परतोऽधिकाः॥ सुखलेश्यायुर्विज्ञानप्रभावैः स्वर्गिणः स्वयं
८२॥ ततोऽग्रे शाश्वतं धाम जन्मजातंकविच्युतं॥ ज्ञानिनां यदधिष्ठानं क्षीणनिःशेषकर्मणां॥८३॥ चिदानंदगुणो

(Interlinear glosses: देवाना; नियोगं; स्वर्गरहिताः; उत्पद्य देवा; margin: स्थितसुख)

तानिष्टितार्था विबंधना॥ यत्र संति स्वयंबुध्ः सिद्धाः सिद्धेः स्वयंबराः॥८४॥ समस्तोयं महालोकः केव
नगोचरः केवलज्ञानगोचरः॥ तं व्यस्तं वा समस्तं वा स्वप्राप्तं या चिंतयेद्यति॥८५॥ विलीनाशेषकर्माणं
मतिनिर्मलं॥ स्वं ततः पुरुषाकारं स्वांगगर्भगतं स्मरेत्॥८६॥ इति निगदितमुच्चैर्लोकसंस्थानमित्थं नियत
मनियतं वा ध्यायतः शुद्धबुद्धेः॥ भवति सततयोगाद्योगिनो निःप्रमादं॥ नियतमनतिदूरे केवलज्ञा
८७॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे संस्थानविचयप्रकरणं॥३३॥ पिंडस्थं च प
स्थं रूपवर्जितं॥ चतुर्द्धा ध्यानमाम्नातं भव्यराजीवभास्करैः॥१॥ पिंडस्थे पंच विज्ञेया
र्णिताः॥ संयमी यास्व संमूढो जन्मपापान्निकृंतति॥२॥ पार्थिवी स्यात्तथाग्नेयी श्वसनाख्याथ वारुणी॥ तत्व



Marginal glosses: १ सिद्धत्वेन; १ज्ञानपिंडात्मका; समदीद; २ आमोन=; समीपे; अमर्याद; कथित; पवनाख्या; ७ अथधारणा; ७ छेदयति; ७ धारणासु = दक्ष

१ धारणाः

पवतीचेति विज्ञेयास्तायथाक्रमं।३। तत्र धा।। तिर्यग्लोकसमं योगी स्मरति क्षीरसागरं। निःशब्दं शांतकल्लोल

क्षीरसागरस्य = निपन्नं — अमर्यादभूत — कमल

मौक्तिकहार = हारनीहारसंनिभं।४। तस्य मध्ये सुनिर्माणं सहस्रदलमंबुजं। स्मरत्यमितभादीप्तं द्रुतहेमसमप्रभं।५। अब्ज

रागसमुद्भूतकेसराली विराजितं। जंबूद्वीपप्रमाणं च चित्तभ्रमररंजकं।६। स्वर्णाचलमयीं दिव्यं तत्र स्मरति क २ कमले

पीतकृत — कर्णिकायां

र्णिकां। स्फुरत्पिंगप्रभाजालपिशांगितदिगंतरां।७। शरच्चंद्रनिभं तस्यां स्मरेदुन्नतं हरिविष्टरं। तत्रात्मानं सुखा

सीनं प्रशांतमिति चिंतयेत्।८। रागद्वेषादिनिःशेषकलंकक्षपणक्षमं। उद्युक्तं च भवोद्भूतकर्मसंतानशात ५ छेदने:

६ योगी = ने।९। पार्थिवी।। ततोसौ निश्चलाभ्यासात्कमलं नाभिमंडले। स्मरत्यतिमनोहारि षोडशोन्नतपत्रकं।१०। प्रति

७ स्थित पत्रं समासीनं स्वरमाला विराजितं। कर्णिकायां महामंत्रं विस्फुरंतं विचिंतयेत्।११। रेफरुद्धं कलाबिंदुलांछि

७-चतुर्दशस्वरसंयुक्तं =

१ निर्गच्छंति = १ दिशा =

ज्ञानार्णव॥ ॥२४॥

तं शून्यमक्षरं लसद्विंदुच्छटाकोटिकांतिव्याप्तहरिन्मुखं॥१२॥ अर्हं॥ तस्य रेफाद्विनिर्यांतीं प्रानैर्धूमशिखां

तां स्फुलिंगसंततिं पश्चाज्ज्वालालीं तदनंतरं॥१३॥ तेन ज्वालाकलापेन वर्द्धमानेन संततं॥ दहत्यविरतं धीर

पुंडरीकं हृदि स्थितं॥१४॥ तदष्टकर्मनिर्माणमष्टपत्रमधोमुखं॥ दहत्येव महामंत्रध्यानोत्थप्रबलानलः॥

॥१५॥ ततो बहिः शरीरस्य त्रिकोणं वह्निमंडलं॥ स्मरेज्ज्वालाकलापेन ज्वलंतमिव वाडवं॥१६॥ वह्निबीजसमा

पर्यंते स्वस्तिकांकितं॥ ऊर्द्ध्ववायुपुरोद्भूतं निर्धूमं कांचनप्रभं॥१७॥ अंतर्दहति मंत्रार्चिर्बहिर्वह्निपुरं पुरं॥ ध

धूधूगिति विस्फुर्यत्ज्वालाप्रचयभासुरं॥१८॥ भस्मभावमसौ नीत्वा शरीरं तच्च पंकजं॥ दाह्याभावात्स्वयं

तिवह्निः शनैः शनैः॥१९॥ आग्नेयी॥ विमानपथमापूर्य संचरंतं समीरणं॥ स्मरत्यविरतं योगी महावेगं महाब ॥१२

कमल ५ मंडल = मंडल ७ आकाशं = २ योग

२ जगत्गृहे १ मेरुं १ मेघसमूहं

चालयंतं सुरानीकं धुन्वंतं त्रिदशाचलं। दारयंतं घनव्रातं क्षोभयंतं महार्णवं॥२१॥ व्रजंतं भुवनाभोगे संचरंतं
(दिशा) हरिन्मुखे। विसर्पंतं जगन्नीडे निर्व्विपंतं धरातले॥२२॥ (स्फेटयित्वा) उद्धूय तद्रजः शीघ्रं तेन प्रबलवायुना। ततः स्थिरीकृ
तांभ्यासः समीरं शांतिमानयेत्॥२३॥ मारुती॥ वारुण्यां स हि पुण्यात्मा घनव्रातचितं नभः। (मेघसमूह) इंद्रायुधतडि
ज्जित्चमत्काराकुलं स्मरेत्॥२४॥ सुधांबुप्रभवैः सांद्रैर्बिंदुभिर्मौक्तिकोज्वलैः। (घनैः) वर्षंतं तं स्मरेद्धीरः स्थूलस्थूलै
निरंतरैः॥२५॥ ततोर्द्धेंदुसमं कांतं पुरं वरुणलांछनं। ध्यायेत्सुधापयःपूरैः प्लावयंतं नभस्तलं॥२६॥ तेनाचिं
त्यप्रभावेन दिव्यध्यानोत्थितांबुना। प्रक्षालयति निःशेषं तद्रजः कायसंभवं॥२७॥ वारुणी॥ सप्तधातुवि
निर्मुक्तं पूर्णचंद्रामलत्विषं। (दीप्ति) सर्व्वज्ञकल्पमात्मानं ततः स्मरति शुद्धधीः॥२८॥ मृगेंद्रविष्टरारूढं दिव्यातिश

७ सर्वज्ञसदृशं

५ अप्मण्डलं = ५ बीजाक्षरं = ५ अंबुना

यसंयुतं॥कल्याणमहिमोपेतं देवदैत्योरगार्चितं॥२९॥विलीनाशेषकर्माणं स्फुरंतमतिनिर्मलं॥स्वं

:पुरुषाकारं स्वांगगर्भगतं स्मरेत्॥३०॥रूपवती॥इत्यविरतं स योगी पिंडस्थे जातनिश्चलाभ्यासः

वसुखमनन्यसाध्यं प्राप्नोत्यचिरेण कालेन॥३१॥इत्थं यत्रा (ध्याने) नवद्यं स्मरति नवसुधाधामचंद्रांशुगौरं श्री

ज्ञकल्पं कनकगिरितटे (मेरुशिखरे) वीतविश्वप्रपंचं॥आत्मानं निर्विकल्पं त्रिदशगुरुगणै (इंद्रसमूहै) रप्यचिंत्यप्रभावं तत्पिं

ष्ठ्यं प्रणीतं जिनसमयमहांभोधिपारं प्रयाते॥३२॥विद्यामंडलयंत्रमंत्रकुहक (कपटिमा) क्रूराभिचारक्रियाः॥सिं

पूर्णीविषदैत्यदंतिसरभा (शार्दूलाः) द्या यांत्येवं निःसारतां॥शाकिन्यो ग्रहराक्षसप्रभृतयो मुंचंत्यसद्वासनामेतं ध्यानध

(योगिन) संनिधिवशाज्ज्ञानोर्यथा कौशिकाः॥३३॥इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे

॥१२

पवित्राणि क्रियते द्रव्यार्थिकपर्यायार्थिक प्राज्ञैः

पिंडस्थध्यानप्रकरणं॥३६॥ पदान्यालंब्यपुण्यानियोगिभिर्यद्विधीयते॥ तत्पदस्थंमतंध्यानंविचित्रनयपा
रगैः॥१॥ तद्यथा॥ ध्यायेदनादिसिद्धांतप्रसिद्धांवर्णमातृकां॥ निःशेषशब्दविन्यासजन्मभूमिंजगन्नुतां॥२॥ द्वि
गुणाष्टदलांभोजेनाभिमंडलवर्तिनि॥ भ्रमंतींचिंतयेद्ध्यानीप्रतिपत्रंस्वरावलीं॥३॥ चतुर्विंशतिपत्राढ्यंहृदि
कंजंसकर्णिकं॥ तत्रवर्णानिमान्ध्यायेत्संयमीपंचविंशतिं॥४॥ ततोवदनराजीवेपत्राष्टकविभूषिते॥ परंव
र्णाष्टकंध्यायेत्संचरंतंप्रदक्षिणं॥५॥ इत्यजस्रंस्मरन्योगीप्रसिद्धांवर्णमातृकां॥ श्रुतज्ञानांबुधेःपारंप्रयाति
विगतभ्रमः॥६॥ उक्तंच॥ कमलदलोदरमध्येध्यायेद्वर्णाननादिसंसिद्धान्॥ नष्टादिविषयेबोधंध्यातासंपद्य
तेकालात्॥७॥ उक्तंच॥ आप्याज्ञयेत्क्षयमरोचकमग्निमांद्यंकुष्टोदरामकसनश्वसनादिरोगान्॥ प्राप्नोचा
ति

अष्टशवाच्यागारिष्ठां = महत्पुरुषेभ्यः

ज्ञानार्णव॥
॥१२६॥

तिमेवाममहतीमहद्भ्यः पूजांपरत्रचगतिंपुरुषोत्तमांप्रां॥९॥अथमंत्रपदाधीशंसर्वतत्वैकनायकं॥आदि
मध्यांतभेदेनस्वरव्यंजनसंभवं॥१०॥अर्हं॥अर्हं॥ऊर्द्धाधोरेफसंरुद्धंसकलंबिंदुलांछितं॥अनाहतयुतंत
कथ्यते मस्तक
त्वंमंत्रराजंप्रचक्षते॥११॥ॐ॥ ॥देवासुरनतंभीमंदुर्बोधध्वांतभास्करं॥ध्यायेन्मूर्द्धस्थचंद्रांशुकलापाक्रां
उपविष्ट
तदिङ्मुखं॥१२॥अपिचकनककमलगर्भेकर्णिकायांनिषण्णंविगतमलकलंकंसांद्रचंद्रांशुगौरं॥गगन
स्थितु
मनुसरंतंसंचरंतंहरित्सुस्मरजिनपतिकल्पंमंत्रराजंयतींद्रः॥१३॥अत्रमतानि॥बुद्धःकेचिदजःकेचिद्धरिः
केचिन्महेश्वरः॥शिवःसर्वस्तथेशानःसोयंवर्णःप्रकीर्तितः॥१४॥मंत्रमूर्तिंसमादायदेवदेवःस्वयंजिनः
मेघ
सर्वज्ञःसर्वगःशांतःसोयंसाक्षाद्व्यवस्थितः॥१५॥ज्ञानबीजंजगद्वंद्यंजन्मज्वलनवार्मुचं॥पवित्रंमतिमान्

॥१२६॥

एकबार २ अंकुर = नुद्यते मोचाय सज्जीकृत

ध्यायेदिदं मंत्रं महेश्वरं ॥१७॥ सकृदुच्चरितं येन हृदयेन स्थिरीकृतं ॥ तत्त्वं तेनापवर्गाय पाथेयं प्रगुणीकृतं ॥१८
यदैवेदं महातत्त्वं मुनेर्द्धत्ते हृदि स्थितिं ॥ तदैव जन्मसंतानप्ररोहः प्रविशीर्यते ॥१९॥ स्फुरंतं भ्रूलतामध्ये वि
शंतं वदनांबुजे ॥ तालुरंध्रेण गच्छंतं स्रवंतममृतांबुभिः ॥२०॥ स्फुरंतं नेत्रपत्रेषु कुर्वंतमलिके स्थितिं ॥ २ ललाटके
भ्रमंतं ज्योतिषां चक्रे स्पर्द्धमानं शितांशुना ॥२०॥ संचरंतं दिशामास्ये २ चंद्रेण
छलंतं नभस्तले ॥ छेदयंतं कलंकौघं स्फोटयंतं भवभ्रमं ॥२१॥ नयंतं परमं स्थानं योजयंतं शिवश्रियं ॥ इति
मंत्राधिपं धीरः कुंभकेन विचिंतयेत् ॥२२॥ अर्हं ॥ अनन्यशरणः साक्षात्तत्संलीनैकमानसः ॥ तथा स्मरत्य
सौ ध्यानी यथा स्वप्नेपि न स्खलेत् ॥२३॥ इति मत्वा स्थिरीभूतं सर्वावस्थासु सर्वथा ॥ नासाग्रे निश्चलं धत्ते यदि

वाम्भूलतांतरे॥२४॥तत्रकेष्विच्चवर्णादिभेदैस्तत्वंप्रकल्पितं॥मंत्रमंडलमुद्रादिसाधनैरिष्टसिद्धिदं॥२५॥उत्कं(?)चा
कारादिहकारांतंरेफमध्यंसबिंदुकं॥तदेवपरमंतत्वंयोजनानिमंतत्ववित्॥२६॥सर्वावियवसंपूर्णं
विच्युतं॥क्रमेणचिंतयेद्ध्यानीवर्णमात्रंशशिप्रभं॥२७॥ह॥बिंदुहीनंकलाहीनंरेफद्वितयवर्जितं॥अन
मापन्नमनुच्चार्यंचचिंतयेत्॥२८॥अ॥चंद्ररेखासमंसूक्ष्मंस्फुरंतंभानुभास्वरं॥अनाहताभिधंदेवंदिव्यरूपं
विचिंतयेत्॥२९॥अस्मिन्स्थिरीकृताभ्यासाः संतः शांतिंसमाश्रिताः॥अनेनदिव्यपोतेनतीर्त्वाजन्मोग्र
३०॥तदेवचपुनःसूक्ष्मंक्रमाद्बालाग्रसन्निभं॥ध्यायेदेकाग्रतांप्राप्यकर्तुंचेतःसुनिश्चलं॥३१॥ततोपिगलितं
षविषयीकृतमानसः॥अध्यक्षमीक्षतेसाक्षाज्जगज्ज्योतिर्मयंक्षणे॥३२॥सिध्यंतिसिद्धयःसर्वाअणिमा

रेफकलाबिंदुरहितं

मंत्रे

प्रत्यक्षं

परित्यज्य–

शयः ॥३३॥ सेवां कुर्वंति दैत्याद्या आज्ञैश्वर्यं च जायते ॥ क्रमात्प्रच्याव्य लक्ष्येभ्यस्ततोऽलक्ष्ये स्थिरं मनः ॥ दधतोऽस्य स्फु-
रत्यंतर्ज्योतिरत्यक्षमक्षयं ॥३४॥ इति लक्षानुसारेणालक्ष्यभावः प्रकीर्तितः ॥ तस्मिन् स्थितस्य मन्येऽहं मुनेः सिद्धं
समीहितं ॥३५॥ एतत्तत्त्वं शिवाख्यं वा समालंब्य मनीषिणः ॥ उत्तीर्णा जन्मकांतारमनंतक्लेशसंकुलं ॥३६॥ मंत्रराज-
मेघं ॐकार
अनाहतं च ॥ क्ष्रौं ॥ स्मर दुःखानलज्वालाप्रशांतेर्नवनीरदं ॥ प्रणवं वाङ्मयं ज्ञानप्रदीपं पुण्यशासनं ॥३७॥ यस्माच्छ-
ॐकारः
मर्थशब्द– पंचपर- ब्दात्मकं ज्योतिः प्रसूतमतिनिर्मलं ॥ वाच्यवाचकसंबंधस्तेनैव परमेष्ठिनः ॥३८॥ हृत्कंजकर्णिकासीनं स्वरव्यंजन- १ हृदयक
मेष्ठी=
विस्तीर्ण दुर्धार्ष गलत् संक्रमित संश्लिष्ट
वेष्टितं ॥ स्फीतमत्यंतदुर्द्धर्षं देवदैत्येंद्रपूजितं ॥३९॥ प्रक्षरन्मूर्द्धसंक्रांतचंद्रलेखामृतप्लुतं ॥ महाप्रभावसंपन्नं क-
वन
र्मकक्षहुताशनं ॥४०॥ महातत्त्वं महाबीजं महामंत्रं महत्पदं ॥ शरच्चंद्रनिभं ध्यानी कुंभकेन विचिंतयेत् ॥४१॥ सांद्र

१ सुवर्णसमं =

सिंदूरवर्णाभंयदिवाविद्रुमप्रभं॥चिंत्यमानंजगत्सर्वंक्षोभयत्यतिसंगतं॥४२॥जांबूनदनिभंस्तंभेविद्वेषेकज्ज
लत्विषं॥ध्येयंवश्यादिकेरक्तंचंद्राभंकर्मशातने॥४३॥ॐ॥पंचगुरुनमस्कारलक्षणंमंत्रमूर्जितं॥चिंतयेज्जग
ज्जंतुपवित्रीकरणक्षमं॥४४॥स्फुरद्विमलचंद्राभेदलाष्टकविभूषिते॥कंजेतत्कर्णिकासीनंमंत्रंसप्ताक्षरं
४५॥दिग्दलेषुततोन्येषुविदिक्पत्रेष्वनुक्रमात्॥सिद्धादिकंचतुष्कंचदृष्टिबोधादिकंतथा॥४६॥ॐणमोअ
पं॥णमोसिद्धाणंणमोआयरियाणं॥णमोउवज्झायाणंणमोलोएसव्वसाहूणं॥अपराजितमंत्रोयं॥दर्शनज्ञा
चारित्रतपांसि॥श्रियमात्यंतिकींप्राप्तायोगिनोयेत्रकेचन॥अमुमेवमहामंत्रंतेसमाराध्यकेवलं॥४७॥प्रभा
(अज्ञानी)
स्यनिःशेषंयोगिनामप्यगोचरं॥अनभिज्ञोजनोब्रूतेयःसमन्येनिलार्दितः॥४८॥अनेनैवविशुध्यंतिजंतवः

७ वातपीडितः =

चतुर्थउपवासस्य फलं=

मंत्रः

पंकिताः॥अनेनैवं विमुच्यंते भवक्लेशान्मनीषिणः॥४९॥असावेवं जगत्यस्मिन् भवव्यसनबांधवः॥अमुं विह
यसत्वानां नान्यः कश्चित्कृपाकरः॥५०॥पतद्व्यसनपाताले भ्रमत्संसारसागरे॥अनेनैवं जगत्सर्वमुद्धृत्य विधृतं शि
वे॥५१॥कृत्वा पापसहस्राणि हत्वा जंतुशतानि च॥अमुं मंत्रं समाराध्य तिर्यंचोऽपि दिवं गताः॥५२॥शतमष्टोत्तरं चास्य
विशुद्धश्चिंतयेन्मुनिः॥भुंजानोऽपि चतुर्थस्य प्राप्नोत्यविकलं फलं॥५३॥स्मर मंत्रपदोद्भूतां महाविद्यां जगन्नुतां॥गु
रुपंचकनामोत्थां षोडशाक्षरराजितां॥५४॥अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यो नमः॥षोडशाक्षरां विद्यां॥अ
स्याः शतद्वयं ध्यानी जपन्नेकाग्रमानसः॥अनिच्छन्नप्यवाप्नोति चतुर्थतपसः फलं॥५५॥विद्यां षड्वर्णसंभूतामं
जय्यां पुण्यशालिनीं॥जपन्प्रागुक्तमभ्येति फलं ध्यानी शतत्रयं॥५६॥अरहंत सिद्ध॥चतुर्वर्णमयं मंत्रं चतुर्वर्गफ

पिंकमात्॥ एकप्रः प्रतिपत्रं तु तस्मिन्नेव निवेशयेत्॥७२॥ स्वर्णगौरीं स्वरोद्भूतां केशरालीं ततः स्मरेत्॥ कर्णिकां च
सुधास्पंदबिंदुव्रजविभूषितां॥७३॥ प्रोद्यत्संपूर्णचंद्राभं चंद्रबिंबाच्छनैः शनैः॥ समागच्छत्सुधाबीजं मायावर्णं
चिंतयेत्॥७४॥ विस्फुरंतमतिस्फीतं प्रभामंडलमध्यगं॥ संचरंतं मुखांभोजे तिष्ठंतं कर्णिकोपरि॥७५॥ क्ष्रौं॥ भ्रमंतं प्र
तिपत्रेषु चरंतं वियति क्षणे॥ छेदयंतं मनोध्वांतं स्रवंतममृतांबुभिः॥७६॥ व्रजंतं तालुरंध्रेण स्फुरंतं भ्रूलतांतरे
तिर्मयमिवाचिंत्यप्रभावं भावयेन्मुनिः॥७७॥ वाक्पथातीतमाहात्म्यं देवदैत्योरगार्चितं॥ विद्यार्णवमहापोतं वि
तत्वप्रदीपकं॥७८॥ अमुमेवं महामंत्रं भावयन्नस्तसंप्रायः॥ अविद्याव्यालसंभूतं विषवेगं निरस्यति॥७९॥ इति ध्या
यन्नसौ ध्यानी तत्संलीनैकमानसः॥ वाङ्मनोमलमुत्सृज्य श्रुतांभोधिं विगाहते॥८०॥ ततो निरंतराभ्यासान्मासैः

२ धर्मानुरागः = वैराग्य

वर्षपर्यंतं =

षड्भिः स्थिराशयः॥ मुखरंध्राद्विनिर्यांतीं धूमवर्तिं प्रपश्यति॥ ८१॥ ततः संवत्सरं यावत्तथैवाभ्यासतो यदि॥ प्रपश्य
ति महाज्वालां निःसरंतीं मुखोदरात्॥ ८२॥ ततोऽतिजातसंवेगो निर्वेदालंबितो वशी॥ ध्यायन्पश्यत्यविश्रांतं स
र्वज्ञमुखपंकजं॥ ८३॥ अथाप्रतिहतानंदप्रीणितात्मा जितश्रमः॥ श्रीमत्सर्वज्ञदेवं स प्रत्यक्षमिव वीक्षते॥ ८४॥ स
र्वातिशयसंपूर्णदिव्यरूपोपलक्षितं॥ कल्याणमहिमोपेतं सर्वसत्वाभयप्रदं॥ ८५॥ प्रभावलयमध्यस्थं भव्यरा
जीवरंजकं॥ ज्ञानलीलाधरं धीरं देवदेवं स्वयंभुवं॥ ८६॥ ततो विधूततंद्रोसौ तस्मिन् (सर्वज्ञे) संजातनिश्चयः॥ भवभ्रममपा
कृत्य लोकाग्रमधिरोहति॥ ८७॥ स्मर सकलसिद्धविद्यां प्रधानभूतां प्रसन्नगंभीरां॥ विधु (चंद्रः) बिंबनिर्गतामिव क्षर
त्सुधार्द्रीं महाविद्यां॥ ८८॥ अविचलमनसा ध्यायन्ललाटदेशस्थितामिमां देवीं॥ प्राप्नोति मुनिरजस्रं समस्तक

समूहं=  ललाट=



ल्याणानिकुरंबं॥८०॥ अमृतजलधिगर्भान्निःसरंतीसुदीप्तां मौलिकतलनिषण्णां चंद्रलेखांस्मरत्वं॥ अमृत
णविकीर्णांप्लावयंतींसुधाभिःपरमपदधरित्र्यांधारयंतींप्रभावं॥८१॥ एतांविचिंतयन्नेवंस्तिमितेनांतरात्म
ना॥ जन्मज्वरजयंकृत्वायातियोगीशिवास्पदं॥८२॥ यदिसाक्षात्समुद्विग्नोजन्मदावोग्रसंक्रमात्॥ तदास्म
दिमंत्रस्यप्राचीनंवर्णसप्तकं॥८३॥ णमोअरहंताणं॥ यदत्रप्रणवंशून्यमनाहतमितित्रयं॥ एतदेवविदुःप्रा
स्त्रैलोक्यतिलकोपमं॥८४॥ नासाग्रदेशसंलीनंकुर्वन्नत्यंतनिश्चलं॥ ध्याताज्ञानमवाप्नोतिप्राप्यपूर्वंगुणा
कं॥८५॥ ॐ ह्रीं॥ नमः॥ पश्चात्‌पोषैर्दुःकुंदधवलांध्यातादेवास्त्रयोविधानेन॥ जनयंतिसर्वविषयंबोधंकालेनत
नातां॥८६॥ प्रणवयुगलस्ययुग्मंपार्श्वेमायायुगंविचिंतयति॥ मूर्द्धस्थंहंसपदंकृत्वाव्यक्तंवित्तंज्ञात्मा॥८७॥

निर्विघ्नो  ज्ञानं  ह्रीं

६सर्वपदार्थगोचर

॥१३१॥

ह्रांॐसह  ७निरालस्य=

ॐ ॐ ह्रीँ ॥ ततो ध्यायेन्महाबीजं स्त्रीकारं छिन्नमस्तकं ॥ अनाहतयुतं दिव्यं विस्फुरंतं मुखोदरे ॥ ९७ ॥ स्त्री ॥ श्रीवीर
वदनोद्भूतां विद्यां चाचिंत्यविक्रमां ॥ कल्पवल्लीमिवाचिंत्यफलसंपादनक्षमां ॥ ९८ ॥ विद्या च ॥ ॐ जोग्गे मग्गे तच्चे
भूए भव्वे भविस्से अरके परके जिणपार्श्वे स्वाहा ॥ ९९ ॥ ॐ ह्रीँ स्वऽर्हन्नमो नमोऽर्हतां णं ह्रीँ नमः ॥ १०० ॥ विद्यां जपति य
दैमां निरंतरं शांत विस्पंदः संकल्पविकल्प ॥ अणिमादिगुणान् लब्ध्वा ध्यानी शास्त्रार्णवं तरति ॥ १ ॥ त्रिकालविषयं साक्षाज्ज्ञानम
स्योपजायते ॥ विश्वतत्त्वप्रबोधश्च संततान्यासयोगतः ॥ २ ॥ शाम्यंति जंतवः क्रूरास्तथान्ये व्यंतरादयः ॥ ध्यान
विध्वंसकर्त्तारो येनंतद्व्दिप्रपंच्यते ॥ ३ ॥ दिग्दलाष्टकसंपूर्णे राजीवे सुप्रतिष्ठितं ॥ स्मरत्यात्मानमत्यंतस्फुरद्ग्रीष्म
र्कभास्वरं ॥ ४ ॥ प्रणवाद्यस्य मंत्रस्य पूर्वादिषु प्रदक्षिणं ॥ विचिंतयति पत्रेषु वर्णैकैकमनुक्रमात् ॥ ५ ॥ ॐ णमो अ

५ मुने·

वेस्तार्थतेमयाकिं

॥ज्ञानार्णव॥ ॥३३॥

स्वीकृत्य = दले =

रहंताणं॥ अधिकृत्य छदं पूर्वं सर्वाशासमुखः परं॥ स्मरत्यष्टाक्षरं मंत्रं सहस्रैकं शताधिकं॥६॥ प्रत्यहं प्रतिप
पुं मेहेंद्राशाद्यं नुक्रमात्॥ अष्टरात्रं जपेद्योगी प्रसन्नामलमानसः॥ तस्याचिंत्यप्रभावेन क्रूराशय कलंकि
तां॥७॥ त्यजंति जंतवो दर्प्पं सिंहत्रस्ता इव द्विपाः॥८॥ अष्टरात्रे व्यतिक्रांते कमलस्यास्य वर्त्तिनः॥ निरूपयति प — २ स्थापयति —
४ पुर्वोक्तान् = त्रेषु वर्णानेतान् अनुक्रमात्॥९॥ आलंब्य प्रक्रियामेतां पूर्वं विघ्नौघशांतये॥ पश्चात्सप्ताक्षरं मंत्रं ध्यायेत्प्र — ४ पुर्वोक्तान् =

इहलोकार्थं

णववर्जितं॥१०॥ मंत्रः प्रणवपूर्वोयं निःशेषाभीष्टसिद्धिदः॥ ऐहिकानेकधर्म्मार्थं मुक्त्यर्थं प्रणवच्युतः॥११॥ — पूर्वोक्तां —
णमो अरहंताणं॥ स्मर मंत्रपदं चान्यज्जन्मसंघातघातकं॥ रागाद्युग्रतमस्तोमप्रध्वंसरविमंडलं॥१२॥ श्री
वृषभादिवर्द्धमानांतेभ्यो नमः॥ मनः कृत्वा सुनिःकंपं तां विद्यां पापभक्षिणीं॥ स्मर सत्वोपकाराय या

॥३५॥

ड्रैः प्रकीर्तिता ॥१४॥ ॐ अर्हन्मुखकमलवासिनि पापात्मक्षयंकरि श्रुतज्ञानज्वालासहस्रप्रज्वलिते सरस्वति
मत्पापं हन हन दह दह क्षां क्षीं क्षूं क्षौं क्षः क्षीरवरधवले अमृतसंभवे वं वं हूं हूं स्वाहा ॥१५॥ पापभक्षिणी ॥
(प्रकटी भवति)
२ निर्मलता = चेतः प्रसन्नतां धत्ते पापपंकः प्रलीयते ॥ आविर्भवति विज्ञानं मुनेरस्याः प्रभावतः ॥१६॥ मुनिभिः संजयंत
(अगात्) (सिद्धचक्रस्य)
द्यैर्विद्यावादात्समुद्धृतं ॥ मुक्तिमुक्तेः परं धाम सिद्धचक्राभिधं स्मर ॥१७॥ तस्य प्रयोजकं शास्त्रं तदाप्त्यौप
देशतः ॥ ध्येयं मुनीश्वरैर्जन्ममहाव्यसनशांतये ॥१८॥ सिद्धचक्रं ॥ स्मर मंत्रपदाधीशं मुक्तिमार्गप्रदीपकं ॥
(सर्वव्यापि)
नाभिपंकजसंलीनमवर्णं विश्वतोमुखं ॥१९॥ अ ॥ सिवर्णं मस्तकांभोजे साकारं मुखपंकजे ॥ आकारं कंठ
(उ)
कंजस्थं स्मरोंकारं हृदि स्थितं ॥२०॥ असिआउसा ॥ सर्वकल्याणबीजानि बीजान्यन्यान्यपि स्मरेत् ॥ यान्यार

ध्यंशिवंप्राप्ता योगिनः शीलसागराः॥२१॥ नमः सर्वसिद्धेभ्यः॥ श्रुतसिंधुसमुद्भूतमन्यद्वापदमक्षरं॥ त

न्निर्ध्येयंस्यात्पदस्थप्रसिद्धये॥२२॥ एवंसमस्तवर्णेषुमंत्रविद्यापदेषुच॥ कार्यःक्रमेणविश्लेषोलक्ष्य — २भिन्नत्व=

सिद्धये॥२३॥ अन्यद्यद्यछ्रुतस्कंधबीजंनिर्वेदकारणं॥ तत्तद्ध्यायन्नसौध्यानीनापवर्गपथिस्खलेत्॥२४॥ उक्तं

कथितजीवादिपदार्थविपर्ययाऽभावात्

३जीवापदार्थसमूहं= च॥ ध्येयंस्याद्वीतरागस्यविश्ववर्त्यर्थसंचयं॥ तद्धर्मव्यत्ययाभावान्माध्यस्थ्यमधितिष्ठति॥२५॥ उक्तंच॥ वीत

गोभवेद्योगीयत्किंचिदपिचिंतयेत्॥ तदेवध्यानमाम्नातमतोन्येग्रंथविस्तराः॥२६॥ वीतरागस्यविज्ञेयाध्यान

४स्वभावविपरीतत सिद्धिर्ध्रुवंमुनेः॥ क्लेशः॥ एवंतदर्थस्याद्रागार्तस्येहदेहिनः॥२७॥ निर्मथ्यश्रुतसिंधुंतत्तधियःश्रीवीरचं

येतत्वान्येवंसमुद्धरंतिमुनयोयत्नेनरत्नान्यतः॥ तान्येतानिहृदिस्फुरंतिसुभगन्यासानिभव्यात्मनांयेवां

५समुद्रात्= तत्वानि=

१आत्मानं =

त्यं निशं विमुक्तिललनासंभोगसंभावनां॥२७॥विलीनाशेषकर्माणं स्फुरंतमतिनिर्म्मलं॥स्वं ततः पुरुषाकारं स्व
गगर्भगतं स्मरेत्॥२८॥इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे पदस्थध्यानप्रकरणं॥

समवशरणादिक =

॥छ॥आर्हंत्यमहिमोपेतं सर्वज्ञं परमेश्वरं॥ध्यायेद्देवेंद्रचंद्रार्क्कसभांतस्थं स्वयंभुवं॥१॥सर्व्वातिशयसंपूर्णं सर्व्वल
क्षणलक्षितं॥सर्व्वभूतहितं देवं शीलशैलेंद्रशेखरं॥२॥सप्तधातुविनिर्मुक्तं मोक्षलक्ष्मीकटाक्षितं॥अनंतम

मुनिभिः सेवितं त्रैलोक्य

हिमाधारं सयोगीपरमेश्वरं॥३॥अचिंत्यचरितं चारुचारित्रैः समुपासितं॥विचित्रनयनिर्न्नीतविश्वं विश्वैकबांधवं

मघ

॥४॥निरुद्धकरणग्रामं निषिद्धविषयद्विषं॥ध्वस्तरागादिसंतानं भवज्वलनवार्मुचं॥५॥दिव्यरूपधरं धीरं विशुद्धज्ञा

वज्र पर्वतं

नलोचनं॥अपि त्रिदशयोगींद्रैः कल्पनातीतवैभवं॥६॥स्याद्वादपविनिर्घातभिन्नान्यमतभूधरं॥ज्ञानामृतपयः

॥ज्ञानार्णव॥
॥३४॥

पूरैः पवित्रितजगत्त्रयम् ॥७॥ अथवा सवा ॥ इत्यादिगणनातीतगुणरत्नमहार्णवं देवदेवं स्वयंबुद्धं स्मराद्यं जिन
रां ॥८॥ अथवा ॥ जन्ममृत्युजराक्रांतं रागादिविषमूर्छितं ॥ सर्वसाधारणैर्दोषैरष्टाभिर्दपुरावृतं ॥९॥ अनेकव्य
संयमज्ञानविच्युतं ॥ संज्ञामात्रेण केचिच्च सर्वज्ञं प्रतिपेदिरे ॥१०॥ अन्यच्च ॥ इतरोपि नरः षड्भिः प्रमाणैर्वस्तुसंचयं ॥ प्रा
दन्मतः कैश्चित्सर्वज्ञः सोपि नेष्यते ॥११॥ अतः सम्यक्त्वविज्ञेयः परित्यज्यान्यशासनं ॥ युक्त्यागमविभागेन ध्या
(निराकृत्य — चेष्टितं — सर्वज्ञस्य)
र्मनीषिभिः ॥१२॥ युक्त्यावृषभसेनाद्यैर्निर्धूयासाधुवल्गितं ॥ यस्य सिद्धिः मतां मध्ये लिखिता चंद्रमंडले ॥१३॥ तद्यथा ॥ अनेकवस्तुसंपूर्णं जगद्यस्य चराचरं ॥ स्फुरत्यविकलं बोधविशुद्धादर्शमंडले ॥१४॥ स्वभावजमसंदिग्धं निर्दोषं
सर्वदोदितं ॥ यस्य विज्ञानमत्यक्षं लोकालोकं विसर्पति ॥१५॥ यस्य विज्ञानघर्मांशुप्रभाप्रसरपीडिताः ॥ क्षणादेव

॥३४॥

Margin notes: २ जानन् = ; ६ जिनस्य = ; ३ प्रत्यक्ष । अनुमान । आगम । उपमान । अर्थापत्ति । अभाव ॥ ६ ॥ णसहितं = वांछकैः

यांति खद्योता इव दुर्णयाः ॥१६॥ पादपीठीकृताशेषत्रिदशेंद्रसभाजितं ॥ योगिगम्यं जगन्नाथं गुणरत्नमहार्णवं ॥१७॥
पवित्रितधरापृष्ठं समुद्धृतजगत्त्रयं ॥ मोक्षमार्गप्रणेतारमनंतं पुण्यशासनं ॥१८॥ प्रभामंडलनिरुद्धार्कचंद्रकोटिसम
प्रभं ॥ शरण्यं सर्वगं शांतं दिव्यवाणीविशारदं ॥१९॥ अक्षोरगशकुंतेशं सर्वाभ्युदयमंदिरं ॥ दुःखार्णवपतत्सत्त्वादत्त
हस्तावलंबनं ॥२०॥ मृगेंद्रविष्टरारूढं मारमातंगघातकं ॥ इंदुत्रयसमोद्दामछत्त्रत्रयविराजितं ॥२१॥ हंसालीपातलील
ढ्यचामरव्रजवीजितं ॥ वीततृष्णं जगन्नाथं वरदं विश्वरूपिणं ॥२२॥ दिव्यपुष्पानकाशोकराजितं रागवर्जितं ॥ प्राति
हार्यमहालक्ष्मीलक्षितं परमेश्वरं ॥२३॥ नवकेवललब्धिश्रीसंभवं स्वात्मसंभवं ॥ तुर्यध्यानमहावज्रीकृतकर्मेंधनो
त्करं ॥२४॥ रत्नत्रयसुधास्यंदमंदीकृतभवभ्रमं ॥ वीतरागं जितद्वैतं शिवं शांतं सनातनं ॥२५॥ अर्हंतमजमव्यक्तं कामदं

दक्षं — इंद्रियसर्प — गरुडं — उत्कट — हंसपंक्ति — अविनश्वरं

कामघातकं॥पुराणपुरुषंदेवंदेवदेवंजिनेश्वरं॥२६॥विश्वचक्षुर्जगद्वंद्यंयोगिनाथंमहेश्वरं॥ज्योतिर्मयमना
त्रातारंभुवनेश्वरं॥२७॥योगीश्वरंतमीशानमादिदेवंचतुर्मुखं॥अनंतमच्युतंशांतंभास्वंतंभूतनायकं॥२८॥सन्म
तिंसुगतंसिद्धंजगज्ज्येष्ठंपितामहं॥महावीरंमुनिश्रेष्ठंपवित्रंपरमाक्षरं॥२९॥नित्यमव्ययमव्यक्तंपरिपूर्णं
नं॥इत्यादिसान्वयानेकपुण्यनामोपलक्षितं॥३०॥सान्वयानीकयोगींद्रवंद्यनामोपलक्षितं॥स्मरसर्वगतं
वीरममरनायकं॥३१॥अनन्यशरणःसाक्षात्तत्संलीनैकमानसः॥तत्स्वरूपमवाप्नोतिध्यानीतन्मयतांगतः
आत्मानं
३२॥यमाराध्यशिवंप्राप्तायोगिनोजन्मनिःस्पृहाः॥यंस्मरंत्यनिशंभव्याःशिवश्रीसंगमोत्सुकाः॥३३॥य
गमृतस्यैकामासाद्यकणिकामपि॥शाश्वतेपथितिष्ठंतिप्राणिनःप्रास्तकल्मषाः॥३४॥देवदेवःसईशानोभव्यां

परमात्मनि—

जैकभास्करः॥ ध्येयः सर्वात्मना धीरैर्निश्चलीकृतमानसैः॥ तस्मिन्निरंतराभ्यासवशात्संजातनिश्चयाः॥ सर्वाव
स्थासु पश्यंति तमेव परमेष्ठिनं॥३६॥ तदालंब्य परंज्योतिस्तद्गुणग्रामरंजितः॥ अविक्षिप्तमना योगी तत्स्वरूपमु
प्राप्यते स्खलते
पाश्नुते॥३७॥ इत्थं तद्भावनानंदसुधास्यंदाभिनंदितः॥ न हि स्वप्नाद्यवस्थासु ध्यायन्प्रच्यवते मुनिः॥३८॥ अथ
सहितानां
वा॥ तस्य लोकत्रयैश्वर्यं ज्ञानराज्यं स्वभावजं॥ ज्ञानत्रययुषामन्ये योगिनामप्यगोचरः॥३९॥ किंच॥ साक्षान्नि
र्विषयं कृत्वा साक्षं चेतः स संयमी॥ नियोजयत्यविश्रांतं तस्मिन्नेव जगद्गुरौ॥४०॥ तद्गुणग्रामसंलीनमानसस्त
द्गताशयः॥ तद्भावभावितो योगी तन्मयत्वं प्रपद्यते॥४१॥ तथा हि॥ यदाभ्यासवशात्तस्य तन्मयत्वं प्रजायते॥ त ६ परमात्मस्य—
दात्मानमसौ ध्यानी सर्वज्ञीभूतमीक्षते॥४२॥ एष देवः स सर्वज्ञः सोऽहं तद्रूपतां गतः॥ तस्मात्स एव नान्योऽहं विश्व

१ संबंधं करोति = आत्मा = १ स्फटिकमणिः =

दर्शीति मन्यते॥४३॥ उक्तं च॥ येन येन हि भावेन युज्यते यंत्रवाहकः॥ तेन तन्मयतां याति विश्वरूपो मणिर्यथा॥
४४॥ अथवा॥ भव्यतैव हि भूतानां साक्षान्मुक्तेर्निबंधनं॥ अतः सर्वज्ञता भव्ये भवंती नात्र शंक्यते॥४५॥ अयमा
स्वसामर्थ्याद्विश्वमाति न केवलं॥ चालयत्यपि संक्रुद्धो भुवनानि चतुर्दश॥४६॥ त्रैलोक्यानंदबीजं जननजल
धेर्यानपात्रं पवित्रं लोकालोकप्रदीपं स्फुरदमलशरच्चंद्रकोटिप्रभाढ्यं॥ कस्यामप्यग्रकोटौ जगदखिलमति
म्यलब्धप्रतिष्ठं देवं विश्वैकनाथं शिवमजमनघं वीतरागं भजस्व॥४७॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञाना
र्णवे योगप्रदीपाधिकारे रूपस्थध्यानप्रकरणं॥ छ॥ वीतरागं स्मरन्योगी वीतरागो विमुच्यते॥ रागी सरागमालं
क्रूरकर्माश्रितो भवेत्॥ मंत्रमंडलमुद्रादिप्रयोगैर्ध्यातुमुद्यतः॥ सुरासुरनरव्रातं क्षोभयत्यखिलं क्षणात्॥२॥ क्रु

४ परिज्ञानोत्कृष्टे ज्ञाति सति =

३ स्वर्ग भवनवासी । नरक व्यंतरवासी । ज्योतिष्क । ग्रीवेयक । नवोत्तर । पंचोत्तर =

१ जीवस्य = ३ आत्मा =

स्याप्यस्य सामर्थ्यमचिंत्यं त्रिदशैरपि ॥ अनेकविक्रियासारध्यानमार्गावलंबिनः ॥३॥ बहूनि कर्माणि मुनिप्रवीरै
र्विद्यानुवादात्प्रकटीकृतानि ॥ असंख्यभेदानि कुतूहलार्थं कुमार्गकुध्यानगतानि संति ॥४॥ असावनंतप्रथित २ विख्यात् =
प्रभावः स्वभावतो यद्यपि यंत्रनाथः ॥ नियुज्यमानः स पुनः समाधौ करोति विश्वं चरणाग्रलीनं ॥५॥ अथवा ॥ स्व
प्नेपि कौतुकेनापि नासद्ध्यानानि योगिभिः ॥ सेव्यानि यांति बीजत्वं यतः सन्मार्गहानये ॥६॥ सन्मार्गात्प्रच्युतं चेतः
पुनः वर्षशतैरपि ॥ शक्यते न हि केनापि व्यवस्थापयितुं पथि ॥७॥ असद्ध्यानानि जायंते स्वनाशायैव केवलं ॥ रा
गाद्यसद्ग्रहावेशात्कौतुकेन कृतान्यपि ॥८॥ निर्भरानंदसंदोहपदसंपादनक्षमं ॥ मुक्तिमार्गमतिक्रम्य कैः कुमार्गे
प्रवर्तते ॥९॥ क्षुद्रध्यानपरप्रपंचचतुरा रागानलोद्दीपिता मुद्रामंडलमंत्रयंत्रकरणैराराध्य यत्स्वादृताः ॥ कामक्रोध ८ आदरपराः =

वशीकृतानिहंसुरान्संसारमोख्यार्थिनोदुष्टाप्राग्निहतापतंतिनरकेभोगार्थिनिर्वंचिता:॥१॥तस्मैयंतदनु
यंतद्धिचिंत्यंमनीषिभि:॥यज्जीवकर्मसंबंधविध्वंसायैवंजायते॥ स्वयमेवहिसिध्यंतिसिद्धय:शांतचेत
अनेकफलसंपूर्णामुक्तिमार्गावलंबिनां॥२॥संभवंतिनचाभीष्टसिद्धय:क्षुद्रयोगिनां॥भवत्यैवपुनस्तेषां
निर्विछको मुनय-
थ्यभ्रंशोनिवारित:॥३॥भवप्रभवसंबंधेनिरपेक्षामुमुक्षव:॥नहिस्वप्नेपिविक्षिप्तंमन:कुर्वंतियोगिन:॥४॥अ
उद्यमंकुरुते
रूपेस्थिरीभूतचित्त:प्रक्षीणविभ्रम:॥अमूर्तमजमव्यक्तंध्यातुंप्रक्रमतेतत:॥५॥चिदानंदमयंशुद्धममू
अथ
र्तंक्षरंस्मरेद्यत्रात्मनात्मानंतद्रूपातीतमीक्ष्यते॥६॥वदंतियोगिनोध्यानंचित्तमेवमनाकुलं॥कथंशिव
॥तद्यथा॥
पन्नमात्मानंसंस्मरेन्मुनि:॥७॥विविच्यतद्गुणग्रामंतत्त्वरूपंनिरूप्यच॥अनन्यशरणोज्ञानीतस्मिन्नेवल

५ स्वस्वरूपे —
८ विचार्य —

व्रजेत्॥१८॥तद्गुणग्रामसंपूर्णं तत्स्वभावैकभावितं॥ कृत्वात्मानं ततो ध्यानी योजयेत्परमात्मनि॥१९॥द्वयोर्गुणैर्म
तं साम्यं व्यक्तिशक्तिव्यपेक्षया॥ विशुद्धेतरयोः स्वात्मतत्वयोः परमागमे॥२०॥किंच॥ यः प्रमाणनयैर्नूनं स्वतत्व
मवबुध्यते॥ बुध्यते परमात्मानं स योगी वीतविभ्रमः॥२१॥व्योमाकारमनाकारं निष्पन्नं शांतमच्युतं॥ चरमांगा
त्कियन्न्यूनं स्वप्रदेशैर्घनैः स्थितं॥२२॥लोकाग्रशिखरासीनं शिवीभूतमनामयं (नीरोगं)॥ पुरुषाकारमापन्नमप्यमूर्तं वि
(निःशरीरस्य)
चिंतयेत्॥२३॥तथाहि॥ निःकलस्य विशुद्धस्य निष्पन्नस्य जगद्गुरोः॥ चिदानंदमयस्योच्चैः कथं स्यात्पुरुषाकृ
तिः॥२४॥तद्यथा॥ विनिर्गतमधूच्छिष्टप्रतिमे मूषिकोदरे॥ यादृग्गगनसंस्थानं तदाकारं स्मरेद्विभुं॥२५॥सर्वावय
वसंपूर्णं सर्वलक्षणलक्षितं॥ विशुद्धादर्शसंक्रांतप्रतिबिंबसमप्रभं॥२६॥इत्यसौ संतताभ्याससवशात्संजातनिश्चलः॥
योगी

अपिस्वप्नाद्यवस्थासु तमेवाध्यक्षमीक्षते॥२८॥सोऽहं सकलवित्सार्वः सिद्धसाध्यो भवच्युतः॥परमात्मापरं
तिर्विश्वदर्शी निरंजनः॥२९॥तदासौ निश्चलोऽमूर्त्तो निष्कलंको जगद्गुरुः॥चिन्मात्रो विस्फुरत्युच्चैर्ध्यान
विवर्जितः॥२९॥पृथग्भावमतिक्रम्य तथैक्यं परमात्मनि॥प्राप्नोति स मुनिः साक्षाद्यथान्यत्वं न विद्यते॥३०॥
॥उक्तंच॥निष्कलः परमात्माऽहं लोकालोकावभासकः॥विश्वव्यापी स्वभावस्थो विकारपरिवर्जितः॥३१॥इ
विगतविकल्पं क्षीणरागादिदोषं विदितसकलवेद्यं त्यक्तविश्वप्रपंचं॥शिवमजमनवद्यं विश्वलोके
पं परमपुरुषमुच्चैर्भावशुध्या भजस्व॥३२॥इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे
रूपातीतप्रकरणं॥छ॥प्रसीद शांतिं व्रज संनिरुध्यतां दुरंतजन्मज्वरविप्लुतं मनः॥अगाधजन्मार्णव
व्यापित

प्रसद्धाना =

पारवर्तिनां यदि श्रियं वांछसि विश्वदर्शिनां ॥४॥ यदि रोद्धुं न शक्नोति तुच्छवीर्यो मुनिर्मनः ॥ तद्वा रागेतरध्वं
संकृत्वा कुर्यात्सुनिश्चलं ॥५॥ अनुप्रेक्षाश्च धर्मस्य स्युः सदैव निबंधनं ॥ चित्तभूमौ स्थिरीकृत्य ताः स्वरूपं
निरूपय ॥६॥ स्फेटयत्याशु निःकंपो यथा दीपो घनं तमः ॥ तथा कर्मकलंकौघं मुनेर्ध्यानं सुनिश्चलं ॥७॥ अ
थवा ॥ चलत्येवाल्पसत्त्वानां क्रियमाणमपि स्थिरं ॥ चेतः शरीरिणां शश्वद्विषयैर्व्याकुलीकृतं ॥८॥ न स्वा
परमशुक्ले
त्वमतः प्रोक्तं विद्यतेऽत्यल्पचेतसां ॥ आद्यसंहननस्यैव तत्प्रणीतं पुरातनैः ॥९॥ यतः उक्तं च ॥ छिन्ने भिन्ने हते दग्धे
विभिन्नं घ्राणेति
देहे स्वमिव दूरगः ॥ प्रपश्यन् वर्षवातादिदुःखैरपि न कंपते ॥१॥ न पश्यति तदा किंचिन्न शृणोति न जिघ्रति स्पृ
ष्टं किंचिन्न जानाति साक्षान्निर्वृत्तलेपवत् ॥१०॥ अद्यसंहननोपेता निर्वेदपदवीं श्रिताः ॥ कुर्वंति निश्चलं चेतः शु

निष्पन्नः

२ परित्यज्य— १ भातापुरुषस्य मुनेः २ संयोगं न करोति १ आद्यसंहनन चतुर्दशपूर्वयो



क्तध्यानक्षमं नराः॥७॥सामग्र्योरुभयोर्ध्याता ध्यानं बाह्यांतरंगयोः॥पूर्वयोरेव शुक्लं स्यान्नान्यथा जन्मकोटिषु॥१०॥
अतिक्रम्य शरीरादिसंगानात्मन्यवस्थितः॥नैवाक्षमनसोर्योगं करोत्येकाग्रतां श्रितः॥११॥असंख्येयमसंख्येयं
द्विगुणे वृंहा क्षीयते क्षपकस्यैव कर्मजातमनुक्रमात्॥१२॥शमकस्य क्रमात्कर्म शांतिमायाति पूर्ववत्॥प्राप्नोति नि
तातंकं स सौख्यं समलक्षणं॥१३॥धर्मध्यानस्य विज्ञेया स्थितिरांतर्मुहूर्तिकी॥क्षायोपशमिको भावो लेश्या शुक्लैव
शाश्वती॥१४॥इदमत्यंतनिर्वेदविवेकप्रशमोद्भवं॥स्वात्मानुभवमत्यक्षं योजयत्यंगिनां सुखं॥१५॥तथा चोक्तं॥अ
लौल्यमारोग्यमनिष्ठुरत्वं गंधः शुभो मूत्रपुरीषमल्पं॥कांतिः प्रसादः स्वरसौम्यता च योगप्रवृत्तेः प्रथमं हि चिन्हं॥१६॥
पर्यवसाने स्वतनुं विहाय ध्यानेन सन्यस्तसमस्तसंगाः॥ग्रैवेयकानुत्तरपुण्यवासं सर्वार्थसिद्धौ प्रभवंति भव्याः॥१७॥

समूह उपशमकस्य प्रसन्न शब्द मुने

परित्यक्तसंगाः परिग्रहाः

शृंगारदर्पनोल्लसितलोचनसहस्रश्रीत्रिदशपतिमुद्रालंकृतसमस्तभुवनावलंबिसुनाशीरपरिकलितज
गद्दयः॥ पृथ्वीतलं समाप्तं॥ तदुपरि पुनर्नानाति विपुलतरसुधासमुद्रसन्निभसमुल्लसन्निजशरीरप्रभापट
लव्याप्तसकलगगनांतरालवैश्यापशी विषविषधरावनद्धवारुणपुरप्रतिष्ठितविपुलतरबीजाक्षरमंडन
पुंडरीकलक्ष्मोपलक्षितपारावारमयखंडेंदुमंडलाकारवरुणपुरप्रतिष्ठितविपुलतरप्रचंडमुद्राग्रहेण
विकीर्णशिशिरतरपयःकणाक्रांतिकर्बुरितसकलककुप्चक्रकरिमकरमारूढपाशास्तपाशपाणिवरु
णामृतमुद्राबंधविधुरितनिःशेषविषानलसंतानभगवद्वरुणनिर्व्यूढोत्संगप्रदेशः॥ विस्फुरितनिजवपु
र्वहलज्वालावलीपरिकलितसकलदिग्वलयद्विजदंदशूकरक्षिताशुशुक्षणिरवर्णविस्फुरितविस्तीर्णक

कोपपन्नत्रिकोणतेजोमयपुरमध्यबद्धवसतिवस्त्राधिरूढप्रज्वलदलातहस्तानलमुद्रोद्दीपितस
क्तविरचितोरःप्रदेशः॥अग्नितत्वं॥अविरतपरिस्फुरत्फूत्कारमारुतांदोलितसकलभुवनाभोगपरि
घद्धरणचक्रवालकालिमानिजतनुसमुत्थलद्धहलकांतिपटलपिहितनिखिलनभस्तलस्फूर्त्काड्वेयव
लयितमरुन्मुद्रोपपन्नविंदुसंदोहसुंदरमहामारुतवलयत्रितयात्मकसकलभुवनाभोगवायुपा
भस्वत्पुरांतर्गतवाहनकुरंगवेगविहरणदुर्ल्लितकरतलकलितचलविटपकोटिकिप्लय
लिमरुन्मुद्रोच्छलितसकलभुवनपवनमयवदनारविंदः॥वायुतत्वं॥गगनगोचरामूर्त्तजयविजयभुजंग
भूषणोनंताकृतिपरमविभुनभस्तलनिलीनसमस्ततत्वात्मकसमस्तज्वररोगविषयधरोद्दुमरडाकिनी

यक्षकिंनरनरेंद्रारिमारिपरयंत्रमंत्रमुद्रामंडलज्वलनहरिसरभशार्दूलद्विपदैत्यदुष्टप्रभृतिसमस्तोपसर्ग
निर्मूलनकारिसामर्थ्यः॥परिकलितसमस्तगारुडमुद्रामंडलाडंबरसमस्ततत्वात्मकः संन्नात्मैवगारुडग
गोचरत्वमवगाहते॥ विषतत्वं॥ यदिपुनरसौसकलजगच्चमत्कारिकार्मुकास्पदनिवेशितमंडलीकृतसर
सेक्षुकांडस्वरसहितकुसुमसायकविधिलक्षीकृतदुर्ल्लक्षमोक्षलक्ष्मीसमागमोत्कंठितकठोरतरमुनि
मनाः स्फुरन्मकरकेतुकमनीयसकलललनावृंदवंदितसौंदर्यरतिकेलिकलापदुर्ल्ललितचेताश्चतुरचेष्टि
तभ्रूभंगमात्रवशीकृतजगत्त्रयस्त्रैणसाधनोदुरधिगमागाधगहनरागसागरांतरदोलितसुरासुरनरभुज
गयक्षसिद्धगंधर्वविद्याधरादिवर्गः॥स्त्रीपुरुषभेदभिन्नसमस्तसत्वपरस्परमनःसंघटनसूत्रधारः॥विविधवन

जिपरिमलपरिमिलितमधुकरकुलविकसितसितकुसुमस्तबकतरलितकटाक्षप्रगटसौभाग्येनसह
रलताकिसलयकरोन्मुक्तमंजरीपरागपिष्टातकप्रिसुनितप्रवेशोत्सवेनमदमुखरमधुकरकुटुंबिनीको
लालापसंवलितमांसलितकोकिलाकुलकणत्कारसंगीतकप्रियेणमलयगिरिमेखलावनकृतनिलयचं
लतालास्योपदेशकुशलैः सुरतभरखिन्नपन्नगनितंबिनीजनवदनकवलितशिखैरपि विरहिणीनिःश्वास
सलीकृतकायैःकेरलीकुरलांदोलनदक्षैरुत्कंपितकुंतलकामिनीकुंतलैःपरिगतसुरतखेदोन्मिषित
ललाटश्वेदांबुकणिकापानदोहदवद्भिरासादितानेकनिर्झरशिशिरशीकरैर्वकुलामोदसंदर्भनिर्भरैःपा
लुंटितपाटलासौरभैःपरिमिलितनवमालिकामोदैर्मदसंचरणशीलैराकुलीकृतसकलभुवनजनमनोभिर्म ॥७२॥

मारुतैः॥समुद्भ्रसितसौभाग्येन वसंतसुहृदा दूरमारोपितप्रतापः॥प्रारब्धोत्तमतपस्तपश्रांतमुनिजनप्रार्थितप्रवे
शोत्सवेन स्वर्गापवर्गद्वारसंघटनवज्रार्गलः॥सकलजगद्विजयवैजयंतीकृतचतुरकामिनीभ्रूविभ्रमः॥सोभए
दिमुद्राविशेषपुष्पालीसकलजगद्वशीकरणसमर्थ्यइतिचिंत्यते॥तदायमात्मैवकामोक्तिविषयतामनुभवती
तदेवं यदिह जगति शरीरविशेषसमवेतं किमपि सामर्थ्यमुपलभामहे॥तत्सकलमात्मन एवेति निश्चयः॥अ
त्म प्रवृत्तिपरंपरोत्पादितत्वाद्विग्रहग्रहणस्येति॥१९॥यदिह जगति किंचिद्विस्मयोत्पत्तिबीजं भुजगमनुजदेवे
ष्वस्ति सामर्थ्यमुच्चैः॥तदखिलमपि मत्वा नूनमात्मैकनिष्ठं भजत नियतचित्ताः शाश्वदात्मानमेव॥२०॥अचिंत्यमे
स्य सामर्थ्यं प्रवक्तुं कः प्रभुर्भवेत्॥तच्च नानाविधध्यानपदवीमधितिष्ठति॥२१॥तदस्य कर्तुं जगदंघ्रिलीनं तिरो

हितांस्तेसहजैर्वप्राप्तिं॥प्रबोधितस्तांसमभिव्यनक्तिप्रसह्यविज्ञानमयःप्रदीपः॥अथवा॥अयंत्रिजगती
विश्वज्ञोनंतशक्तिमानं॥नात्मानमपिजानातिस्वस्वरूपात्परिच्युतः॥२॥अनादिकालसंभूतैःकलंकैःक
कृतः॥स्वेछयार्थान्समादत्तेस्वतोत्यंतविलक्षणान्॥३॥दृग्बोधनयनःसोयमज्ञानतिमिराहतः॥जानन्नं
[विष पीडीत]
जा नातिपश्यन्नपिनपश्यति॥४॥अविद्योद्भूतरागादिगरव्यग्रीकृताशयः॥पतत्यनंतदुःखाग्निप्रदीप्तेजन्म
मे॥५॥लोष्टेष्वपियथोन्मत्तःस्वर्णबुद्ध्याप्रवर्तते॥अर्थेष्वनात्मभूतेषुस्वेछयायंतथाभ्रमात्॥६॥वासनाजनिता
वसुखदुःखानिदेहिनाम्॥अनिष्टमपियेनायमिष्टमित्यभिमन्यते॥७॥अविश्रांतमसौजीवोयथाकामार्थ
मः॥खिद्यतेत्रयदिस्वार्थेतथाकिंनविमुच्यते॥८॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेत्रि ॥१३॥

तत्वप्रकरणं ॥ अथ केचिद्यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इति अष्टावंगानि योगस्य स्थानानि ॥ तथान्ये: यमनियमौ वपास्य आसनप्राणायामप्रत्याहारधारणाध्यानसमाधय इति षट् ॥ तथान्ये ॥ उत्साहान्निश्चयाद्धैर्यात्संतोषात्तत्वदर्शनात् ॥ मुनेर्जनपदत्यागात् षड्भिर्योगः प्रसिध्यति ॥ ३ ॥ एतान्येवांग: केचिच्च मनःस्थैर्याय प्रयुंजते तस्मिन् स्थिरीकृते साक्षात् स्वार्थसिद्धिर्ध्रुवा भवेत् ॥४॥ यमादिषु कृताभ्यासो निःसंगो निर्ममो मुनिः ॥ रागादिक्लेशनिर्मुक्तं करोति स्ववशं मनः ॥५॥ अष्टावंगानि योगस्य यान्युक्तान्यार्यसूरिभिः ॥ चित्तप्रसमार्गेण बीजं स्युस्तानि मुक्तये ॥६॥ अंगान्यष्टावपि प्रायः प्रयोजनवशात्क्वचित् ॥ उक्तान्यत्रैव तान्युच्चैर्विदांकुर्वंतु योगिनः ॥७॥ मनोरोधे भवेद्रुद्धं विश्वमेव शरीरिभिः ॥ प्रायो संवृत्तचित्तानां शेषरोधोप्यपार्थकः ॥८॥ इति ॥ कलंकवि

लयः साक्षान्मनःशुद्धैवदेहिनाम्॥ तस्मिन्नपि समीभूते स्वार्थसिद्धिरुदाहृता॥९॥ चित्तप्रपंचजानेकवि
धकाः प्राप्नुवंति नरा नूनं मुक्तिकांताकरग्रहम्॥१०॥ अतस्तदेव संरुध्य कुरु स्वाधीनमंजसा॥ यदि छेत्तुं
त्वं कर्मनिगडं दृढं॥११॥ सम्यग् स्मिन् प्रशमं नीते दोषा जन्मभ्रमोद्भवाः॥ जन्मिनां खलु शीर्यंति ज्ञानश्रीप्रतिबं
॥१२॥ एक एव मनोदैत्यः जयः सर्वार्थसिद्धिदः॥ अन्यत्र विफलः क्लेशो यमिनां तज्जयं विना॥१३॥ एक एव मनोरोधः
सर्वाभ्युदयसाधकः॥ यमेवालंब्य संप्राप्ता योगिनस्तत्वनिश्चयं॥१४॥ पृथक् करोति यो धीरः स्वपराववेकतां गतो॥
चापलं निगृह्णाति पूर्वमेवांतरात्मनः॥१५॥ मनःशुद्ध्यैव शुद्धिः स्याद्देहिनां नात्र संशयः॥ वृथा तद्व्यतिरेकेण काय
यं कदर्थनं॥१६॥ ध्यानशुद्धिं मनःशुद्धिः करोत्येव न केवलं॥ विछिनत्त्यपि निःशंकाः कर्मजालानि देहिनाम्॥१७

पंकजसंलीनं तस्यैतद्भुवनत्रयं ॥ यस्य चित्तं स्थिरीभूय स्वस्वरूपे लयं गतं ॥ १८ ॥ मनः कृत्वा सुनिःसंगं निःशेषविषयच्यु
तं ॥ मुनिभृंगैः समालीढं मुक्तेर्वदनपंकजं ॥ १९ ॥ यथा यथा मनःशुद्धिर्मुनेः साक्षात्प्रजायते ॥ तथा तथा विवेकश्रीर्हृ
दि धत्ते स्थिरं पदं ॥ २० ॥ चित्तशुद्धिमनासाद्य मोक्तुं यः सम्यगिच्छति ॥ मृगतृष्णातरंगिण्यां स पिबत्यंबु केवलं ॥ २१ ॥ तद्ध्या
नं तद्धि विज्ञानं तद्ध्येयं तत्त्वमेव वा ॥ येनाविद्यामतिक्रम्य मनस्तत्त्वे स्थिरीभवेत् ॥ २२ ॥ विषयग्रामलुब्धेन चित्तदैत्ये
न सर्वथा ॥ विक्रम्य स्वेच्छया जस्रं जीवलोकः कदर्थितः ॥ २३ ॥ अवार्यविक्रमः सोयं चित्तदंती निवार्यतां ॥ न याव
द्ध्वंसयत्येष सत्संयमनिकेतनं ॥ २४ ॥ विभ्रमन्विषयारण्ये चलच्चेतोबलीमुखः ॥ येन रुद्धो ध्रुवं सिद्धं फलं तस्यै
व वांछितं ॥ २५ ॥ चित्तमेकं न शक्नोति जेतुं स्वातंत्र्यवर्तियः ॥ ध्यानवार्तां ब्रुवन्मूढः स किं लोके न लज्जते ॥ २६ ॥ यदसाध्यं

मोक्षं

तपोनिष्टैर्मुनिनिर्वीतमत्सरैः॥तत्पदंप्राप्यतेधीरैश्चित्तप्रसरबंधकैः॥२७॥अनंतजन्मजानेककर्मबंधस्थितिर्दृ
भावशुद्धिंप्रपन्नस्यमुनेःप्रक्षीयतेक्षणात्॥२८॥यस्यचित्तंस्थिरीभूतंप्रसन्नंज्ञानवासितं॥सिद्धमेवंमुनेस्त
साध्यंकिंकायदंडनैः॥२९॥तपःश्रुतयमज्ञानतनुक्लेशादिसंचयं॥अनियंत्रितचित्तस्यस्यान्मुनेस्तुषकंडनं॥३०॥
वंहिमनःशुद्धिर्लोकाग्रपथदीपिका॥स्खलितंबहुभिस्तत्रतामनासाद्यनिर्मलां॥३१॥असंतोपिगुणाःसं
स्यांसत्यांशरीरिणाम्॥संतोपियांविनायांतिसामनःशुद्धिःशस्यते॥३२॥अपिलोकत्रयैश्वर्यंसर्वाक्षप्रीणनक्ष
भजत्यचिंत्यवीर्योयंचित्तदैत्योनिरंकुशः॥३३॥प्रशमश्रुतयमोपेताजिताक्षाःशंसितव्रताः॥विदंत्यनिर्जित
ताःस्वस्वरूपंनयोगिनः॥३४॥विलीनविषयंशांतंनिःसंगंत्यक्तविक्रियं॥स्वस्थंकृत्वामनःप्राप्तंमुनिभिःपदमं

दिक्चक्रं दैत्यधिष्ण्यं त्रिदशपतिपुराण्यंबुवाहांतरालं द्वीपांभोधिप्रकांडं खचरनरसुराहींद्रवासं समग्रं। एतत्त्रै-
लोक्यनीडं पवनचयचितं चापलेन क्षणार्द्धेनाभ्रांतं चित्तदैत्यो भ्रमति तनुमतां दुर्विचिंत्यप्रभावः॥३६॥
ध्यानसमाधिध्यानविज्ञानहेतोर्विनयनयविवेकोदारचारित्रसिद्ध्यै। इह जयति चेतःपन्नगं दुर्न्निवारं स ख-
लु जगति योगिव्रातवंद्यो मुनींद्रः॥३७॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे मनोव्या-
पारप्रतिपादविकरणं॥ निःशेषविषयोत्तीर्णं विकल्पव्रजवर्जितं। स्वतत्त्वैकपरं धत्ते मनीषी नियतं मनः॥१॥ अथव
क्रियमाणमपि स्वस्थं मनः सद्यो निभूयते। अनाद्युत्पन्नसंबंधै रागादिरिपुभिर्बलात्॥२॥ स्वतत्त्वानुगतं चेतः
करोति यदि संयमी। रागादयस्तथाप्येते क्षिपंति भ्रमसागरे॥३॥ आत्माधीनमपि स्वांतं सद्यो रागैः कलंक्यते।

तदूरतः पूर्वमत्रयत्नो विधीयताम्॥४॥ अयत्नेनापि जायंते चित्तभूमौ शरीरिणाम्॥ रागादयः स्वभावोत्थज्ञा
ज्यांगघातकाः॥५॥ इंद्रियार्थानपाकृत्य स्वतत्वमवलंब्यते॥ यदि योगी तथाप्येते छलयंति मुहुर्मनः॥६॥
ढंक्व चिज्ञातं क्वचिद्गीतं क्वचिद्भुतं प्रांकितं च क्वचित्क्लिष्टं रागाद्यैः क्रियते मनः॥७॥ अजस्रं रुध्यमानोपि चिरा
भ्यासादृढीकृताः॥ चरंति हृदि निःशंका नृणां रागादिराक्षसाः॥८॥ प्रयासैः फल्गुनिर्मूढैः किमात्मा दंड्यते धि
॥शाक्यते न हि चेच्चेतः कर्तुं रागादिवर्जितं॥९॥ क्षीणरागं च्युतद्वेषं ध्वस्तमोहं सुसंवृतं॥ यदि चेतः समापन्नं
द्धं समीहितं॥१०॥ मोहपंके परिक्षीणे प्रशांते रागविभ्रमे॥ पश्यंति यमिनः स्वस्मिन् स्वरूपं परमात्मनः॥११॥
संग्रामे शिवश्रीसंगमोत्सुकैः॥ योगिभिर्ज्ञानशस्त्रेण रागमल्लो निपातितः॥१२॥ असंक्लिष्टमविभ्रांतमविद्रु

नाकुलं॥ निश्चलं च मनः कृत्वा वस्तुतत्वं निरूपय॥३॥ रागादिनिर्हतं चेतः स्वतत्वविमुखं भवेत्॥ ततः प्रच्यवते क्षि
प्रं ज्ञानरत्नाद्रिमस्तकात्॥४॥ रागद्वेषभ्रमाभावे मुक्तिमार्गे स्थिरी भवेत्॥ संयमी जन्मकांतारसंक्रमक्लेशशंकि
तः॥५॥ रागादिनिर्विश्रांतं वंच्यमानं मुहुर्मनः॥ न पश्यति परं ज्योतिः पुण्यपापेंधनानलं॥६॥ रागादिपंकविश्ले
षात्प्रसन्ने चित्तवारिणि॥ परिस्फुरति निःशेषं मुनेर्वस्तुकदंबकं॥७॥ स कोपि परमानंदो वीतरागस्य जायते॥ ये
न लोकत्रयैश्वर्यमप्यचिंत्यं तृणायते॥८॥ प्रशाम्यति विरागस्य दुर्बोधविषमग्रहः॥ स एव वर्द्धते जस्रं रागार्तस्येह
देहिनः॥९॥ स्वभावजमनातंकं वीतरागस्य यत्सुखं॥ न तस्यानंतभागोपि प्राप्यते त्रिदशेश्वरैः॥१०॥ एतावना
दिसंभूतौ रागद्वेषौ महासुरौ॥ अनंतदुःखसंतानप्रसूतेः प्रथमांकुरौ॥११॥ उक्तं च॥ रागी बध्नाति कर्माणि वीतरा

मुनिरूप्यभावम्शुद्धायतत्स्वतद्बंधमोक्षाय॥३९॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेरा
षप्रकरणम्॥३३॥मोहवह्निमपाकर्तुंस्वीकर्तुंसंयमश्रियं।छेत्तुंरागद्रुमोद्यानंसमत्वमवलंब्यताम्॥१॥चि
त्रक्षणैर्भवैरिष्टानिष्टतयास्थितैः।नमुह्यतिमनोयस्यतस्यसाम्येस्थितिर्भवेत्॥२॥विरज्यकामभोगे
वपुषिस्पृहां।समत्वंभजसर्वज्ञज्ञानलक्ष्मीकुलास्पदं॥३॥छित्वाप्रशमशस्त्रेणभवव्यसनवागुरां।मुक्तेःस्वयं
धीरव्रजशनैःशनैः॥४॥साम्यसूर्यांशुभिर्भिन्नेरागादितिमिरोत्करे।प्रपश्यतियमीस्वस्मिन्स्वरूपंपर
॥५॥साम्यसीमानमालंब्यकृत्वात्मन्यात्मनिश्चयं।पृथक्करोतिविज्ञानीसंश्लिष्टेजीवकर्मणी॥६॥
रिणिशुद्धानांमतांज्ञानैकचक्षुषां।इहैवानंतबोधादिराज्यलक्ष्मीःसखीभवेत्॥७॥भावयस्वतथात्मानं

नाति निर्भरां नयथा द्वेषरागाभ्यां गृहात्यर्थकदंबकम् ॥ रागादिविपिनं भीमं मोहशार्दूलपालितं । दग्धं मुनिमहा
अग्नि शिखा
वीरैः साम्यधूमध्वजार्चिषा ॥ मोहपंके परीक्षीणे प्रीणे रागादिबंधने । नृणां हृदि पदं धत्ते साम्यश्रीर्विश्ववंदिता
॥१०॥ आशाः सद्यो विपद्यंते यांत्यविद्याः क्षयं क्षणात् । म्रियते चित्तभोगीन्द्रो यस्य सा साम्यभावना ॥११॥ साम्यकोटि
समारूढो यमी जयति कर्म यत् । निमेषांतेन तज्जन्मकोटिभिस्तपसेतरः ॥१२॥ साम्यमेव परं ध्यानं प्रणीतं विश्वद
र्शिभिः । तस्यैव व्यक्तये नूनं मन्येयं शास्त्रविस्तरः ॥१३॥ साम्यभावितभावानां स्यात्सुखं यन्मनीषिणां । तन्मन्ये ज्ञा
नसाम्राज्यसमत्वमवलंबते ॥१४॥ यः स्वभावोत्थितां साध्वीं विशुद्धिं स्वस्य वांछति । स धारयति पुण्यात्मा समत्वा
धिष्ठितं मनः ॥१५॥ तनुत्रयविनिर्मुक्तं दोषत्रयविवर्जितं । यदा वेत्त्यात्मनात्मानं तदा साम्ये स्थितिर्भवेत् ॥

ज्ञेषपरपर्यायैः परद्रव्यैर्विलक्षणं निश्चिनोति यदात्मानं तदा साम्यं प्रसूयते ॥१७॥ तस्यैवाविचल-

(भिन्नत्वं)

व्ययमात्तस्यैव बंधविश्लेषः समत्वं यस्यायं योगिनः ॥१८॥ यस्य हेयं न चादेयं जगद्विश्वं चराचरं। स्या-

(शुभाशुभकर्मक्षय)

त्साक्षाच्छुभाशुभमलक्षयः ॥१९॥ तथाहि॥ शाम्यंति जंतवः क्रूरा बद्धवैराः परस्परं। अपि स्वार्थप्रवृ-

(मुनिना)

त्ते मुनेः साम्यप्रभावतः ॥२०॥ भजंति जंतवो मैत्रीमन्योन्यं त्यक्तमत्सराः। समत्वालंबिनां प्राप्य पादपद्मार्चितां

(मेघे)

क्षितिं ॥२१॥ शाम्यंत्येयोगिभिः क्रूरा जंतवो नेति शंक्यते। दावदीप्तमिवारण्यं यथा वृष्टैर्बलाहकैः ॥२२॥ भवं-

प्रसन्नानि कश्मलान्यपि देहिनां। चेतांसि योगिसंसर्गेगस्त्ययोगे जलानि वा ॥२३॥ अपि च॥ क्षुभ्यंति

(हस्ती दैत्य सिंह शार्दूल सर्पादय)

प्रक्षकिन्नरनरास्तुष्यंति नाकेश्वरा मुंचंति द्विपदैत्यसिंहशरभव्यालादयः क्रूरतां। रुग्वैरप्रतिबद्धविभ्रमभय

ष्टं जगज्जायते स्याद्योगी ऽसमत्वसाध्यमथवा किं किं न सद्यो भुवि ॥ २४ ॥ चंद्रः सांद्रैर्विकरति सुधामंशुभिर्जी
वलोकं भास्वानुग्रैः किरणपटलैरुच्छिनत्त्यंधकारं धात्री धत्ते भुवनमखिलं विश्वमेतच्च वायुर्यद्वत्साम्या
च्छमयति तथा जंतुजातं यतींद्रः ॥ २५ ॥ सारंगी सिंहसावं स्पृशति सुतधिया नंदिनी व्याघ्रपोतं मार्जारी हंसबालं
प्रणयपरवशा केकिकांता भुजंगं वैराण्याजन्मजातान्यपि गलितमदा जंतवोऽन्ये त्यजंति श्रित्वा साम्यैकरू
ढं प्रशमितकलुषं योगिनं क्षीणमोहं ॥ २६ ॥ एकः पूजां रचयति नतः पारिजातप्रसूनैः क्रुद्धः कंठे क्षिपति भु
जगं हंतकामस्ततोऽन्यः तुल्या वृत्तिर्भवति च तयोर्यस्य नित्यं स योगी साम्यारामं विशति परमज्ञानदत्तावका
शो ॥ २७ ॥ नारण्यान्नगरं न मित्रमहिताद्लोष्टान्न जांबूनदं न स्रग्दाम भुजंगमान्न दृषदस्तल्पं शशांकोज्ज्वलं यस्मा

तःकरणे विभर्तिं कलया नो क्रुष्टतामीषदप्यार्यास्तं परमोपशांतिपदवीमारूढमाचक्षते ॥२८॥ मोधोत्संगेस्म
स्तुतिज्ञापनविधौ कर्द्दमे कुंकुमे वा पल्यंके कंटकाग्रे दृषदि शशिमणौ चर्मचीनांशुकेषु । शीर्णांगे दिव्य
अनुपमशाम्यवशात्
समसमवशाद्यस्य चित्तं विकल्पैर्नालीढं सोयमेकः कलयति कुशलः साम्यलीलाविलासं ॥२९॥ चलत्यं
चलमालेयं कदाचिद्दैवयोगतः । नोपसर्गैरपि स्वांतं मुनेः साम्यप्रतिष्ठितं ॥३०॥ उन्मत्तमथवा विभ्रांतं दिग्मूढं
सुप्तमेव वा । साम्यस्थस्य जगत्सर्वं योगिनः प्रतिभासते ॥३१॥ वाचस्पतिरपि ब्रूते यद्यजस्रं समाहितः । वक्तुं तथा
पि शक्नोति न हि साम्यस्य वैभवं ॥३२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे साम्यप्र
करणम् ॥ छ ॥ दुःप्रज्ञाबललुप्तवस्तुनिचया विज्ञानशून्याशया विद्यंते प्रतिमंदिरं निजनिजस्वार्थोद्यता देहि

नः॥आनंदामृतसिंधुपूरीकरच्चयैर्निर्वाप्यजन्मानलं येमुक्तेर्वदनेंदुवीक्षणपरास्तेसंतिद्वित्रायदि॥साम्यश्रीना
तिनिःशंकंसतामपिहृदिस्थितिं धत्तेमुनिश्चलध्यानसुधासंबंधवर्जितं॥ यस्यध्यानंसुनिःकंपंसमत्वंतस्य
ध्यानसाम्ययोः
निश्चलं॥ नानयोर्विद्ध्यधिष्ठानमन्योन्यंस्याद्विभेदतः॥ साम्यमेवनसद्ध्यानात्स्थिरीभवतिकेवलं॥ शुध्यत्यपि
आत्मा
कर्मौघकलंकीयंत्रवाहकः॥ यदेवसंयमीसाक्षात्समत्वमवलंबते स्यात्तदैवपरंध्यानंतस्यकर्मौघघात
प्रसरित
कं॥ अनादिविभ्रमोद्भूतंरागादितिमिरंघनं॥ स्फोटयत्याशुजीवस्यध्यानार्कःप्रविजृंभितः॥ भवज्वलनसं
भूतःमहादाहप्रशांतये॥ शश्वद्ध्यानांबुधेर्धीरैरवगाहःप्रशस्यते॥ ध्यानमेवापवर्गस्यमुख्यमेकंनिबंधनं॥
तदेवदुरितव्रातगुरुकक्षहुताशनं॥ अपास्यखंडविज्ञानरसिकापापवासना॥ असद्ध्यानानिचादेयं

योगं॥ तद्यथा॥ ज्वलनवनविषास्त्रव्यालशार्दूलदैत्यैः स्थलजलबिलसत्वैर्दुर्जनारातिभूपैः॥ स्वजनधनशरीरध्वं
सिभिस्तैरनिष्टैर्भवति यदिह योगाद्यमार्त्तं तदेतत्॥ २६॥ तथा चरस्थिरैर्भावैरनेकैः समुपस्थितैः॥ अनिष्टैर्य
त्क्लिष्टं स्यादार्त्तं तत्प्रकीर्त्तितं॥ २७॥ श्रुतैर्दृष्टैः स्मृतैर्ज्ञातैः प्रत्यासत्तिं च संश्रितैः॥ योऽनिष्टार्थैर्मनः क्लेशः
॥ २८॥ प्रत्नोपानिष्टसंयोगे तद्वियोगानुचिंतनं॥ यत्स्यात्तदपि तत्वज्ञैः पूर्वमार्त्तं प्रकीर्त्तितं॥ २९॥ प्रथमं॥
र्य्यकलत्रबांधवसुहृत्सौभाग्यभोगात्यये (विनाशे) चित्तप्रीतिकरप्रसन्नविषयप्रध्वंसभावेऽथवा॥ सं
विवशैर्यत्खिद्यतेऽहर्निशं तत्स्यादिष्टवियोगजं तनुमतां ध्यानं कलंकास्पदम्॥ ३०॥ दृष्टश्रुतानुभूतैस्तैः
श्चित्तरंजकैः॥ वियोगे यन्मनः खिन्नं स्यादार्त्तं तद्द्वितीयकं॥ ३१॥ मनोज्ञवस्तुविध्वंसे पुनस्तत्संगमार्थिभिः॥ क्लि

तेयत्नदेवस्याद्द्वितीयार्त्तस्यलक्षणं॥३२॥द्वितीयं॥कासश्वासभगंदरोदरजकुष्टातिसारज्वरैःपित्तश्लेष्ममरुत्प्र
कोपजनितैरोगैःशारीरांतकैःस्यात्छश्वत्प्रबलैःप्रतिक्षणभवैर्यद्व्याकुलत्वंनृणांतज्झोगार्तमनिंदितैःप्रकटितं
दुर्वारदुःखाकरं॥३३॥अल्पानामपिरोगाणांमाभूत्स्वप्नेपिसंभवःममेतियानृणांचिंतास्यादार्तंतत्तृतीयकं॥३४॥
भोगाभोगीन्द्रसेव्यास्त्रिभुवनजयनीरूपसाम्राज्यलक्ष्मीराज्यंक्षीणारिचक्रंविजितसुरवधूलास्यलीलायुव
त्यःअन्यच्चानंदभूतंकथमिहभवतीत्यादिचिंतासुभाजांयात्तज्झोगार्तमुक्तंपरमगणधरैर्जन्मसंतानसूत्रं
॥३५॥पुन्यानुष्ठानजातैरभिलषतिपदंयज्जिनेंद्रामराणांयद्वातैरेववांछत्यहितकुलकुजच्छेदमत्यंतकोपात्
पूजासत्कारलाभप्रभृतिकमथवायाचतेयद्विकल्पैःस्यादार्तंतन्निदानप्रभवमिहनृणांदुःखदावोग्रधाम॥३६॥

इष्टभोगादिसिद्ध्यर्थं रिपुघातार्थमेव वा। यन्निदानं मनुष्याणां स्यादार्त्तं तत्तुरीयकं॥ चतुर्थं॥ इत्थं चतुर्भिः
विस्तारितैः
थितैर्विकल्पैरार्त्तं समासादिह हि प्रणीतं। अनंतजीवाशयभेदभिन्नं ब्रूते समग्रं यदि वीरनाथः॥३१॥ अनिष्ट
पंचमगुणस्थानेषु श्रावकेषु
प्रथम
मपि पर्यंते रम्यमप्यग्रिमक्षणे। विद्ध्यसद्ध्यानमेतद्धि षड्गुणस्थानभूमिकं॥३३॥ संयतासंयतेष्वेतच्चतुर्भेदं प्र
षष्ठगुणस्थानवर्ति मुनिकू
यतां। प्रमत्तसंयतानां तु निदानरहितं त्रिधा॥३४॥ कृष्णनीलाद्यसल्लेश्याबलेन प्रविजृंभते। इदं दुरितदावा
आर्त्त
र्चिः प्रसूतेरिंधनोपमं॥३५॥ एतद्विनापि यत्नेन स्वयमेव प्रसूयते। अनाद्यसत्समुद्भूतसंस्कारादेव देहिनां॥
आर्त्तस्य
अनंतदुःखसंकीर्णमस्य तिर्यग्गतेः फलं। क्षायोपशमिको भावः कालश्चांतर्मुहूर्त्तकं॥३७॥ शंकाशोक
मादकलहाश्चिंताभ्रमोद्भ्रांतय उन्मादो विषयोत्सुकत्वमसकृन्निद्रांगजाड्यश्रमाः मूर्छादीनि शरीरि

कथयिता

रतंलिंगानिबाह्यान्यैलं॰आर्ताधिष्ठितचेतसांश्रुतधरैर्व्यावर्णिताविस्फुटं॥४४॥इत्याचार्यश्रीशुभचंद्रविरचिते

ज्ञानार्णवेयोगप्रदीपाधिकारेआर्तध्यानप्रकरणम्॥छ॥रुद्राशयभवंभीममपिरौद्रंचतुर्विधं॥कीर्त्यमानंविदं

त्वार्य्याःसर्वसत्वाभिनंदकाः॥१॥रुद्रःक्रूराशयःप्राणीप्रणीतस्तत्वदर्शिभिः॥रुद्रस्यकर्मभावोवारौद्रमित्यभि

धीयते॥२॥हिंसानंदान्मृषानंदाच्चौर्य्यात्संरक्षणात्तथा॥प्रभवत्यंगिनांप्राश्वदंपिरौद्रंचतुर्विधं॥३॥हिंसारौद्रं

॥तद्यथा॥हतेनिपीडितेध्वस्तेजंतुजातेकदर्थिते॥स्वेनचान्येनयोहर्षस्तद्धिंसारौद्रमुच्यते॥४॥अनारतंनिःक

रुणस्वभावःस्वभावतःक्रोधकषायदीप्तः॥मदोद्धतःपापमतिःकुशीलःस्यान्नास्तिकोयःसहिरौद्रधामा॥

संगः

५॥हिंसाकर्मणिकौशलंनिपुणतापापोपदेशेभृशंदाक्ष्यंनास्तिकशासनेप्रतिदिनंप्राणातिपातेरतिः॥संवास

सहनिर्दयैर्विरतं नैसर्गिकी क्रूरता यस्य देहभृतां तद्रौद्रं गदितं प्रशांताशयैः ॥४॥ केनोपायेन घातो भव
ति तनुमतां कः प्रवीणोऽत्र हंता हंतुं कस्यानुरागः कतिभिरिह दिनैर्हन्यते जंतुजातं । हत्वा पूजां करिष्ये द्विजगु
रुमरुतां पुष्टिशांत्यर्थमिष्टं यत्स्यादिंसाभिनंदो जगति तनुभृतां तद्धि रौद्रं प्रणीतं ॥५॥ गगनवनधरित्रीचारि
णां देहभाजां दलनदहनबंधच्छेदघातेषु यत्नं । इति नखकरनेत्रोत्पाटने कौतुकं यत्तदिह गदितमुच्चै
रौद्रमिष्टं ॥६॥ अस्य घातो जयोन्यस्य समरे जायतामिति स्मरत्यं गीतदप्याहू रौद्रमध्यात्मवेदिनः ॥७॥
जंतुबधाद्युरुपराभवे यो हर्षस्तद्धि विज्ञेयं रौद्रं दुःखानलेंधनं ॥८॥ अहं कदा करिष्यामि पूर्ववैरस्य निः
अस्य चित्रैर्वधैश्चेति चिंता रौद्राय कल्पिता ॥९॥ किं कुर्मः शक्तिवैकल्याज्जीवत्यद्यापि विद्विषः तद्धमुत्र हनि

ध्यामः प्राप्य कालं तथा बलं ॥२९॥ अनिलषति नितांतं यत्परस्योपकारं व्यसनविशिषभिन्नं वीक्ष्य यत्तोषमेति ॥
यदिह गुणगरिष्टां द्वेष्टि [द्वेषकरोति] दृष्ट्वान्यभूतिं भवति हृदि सशल्यः तद्धि रौद्रस्य लिंगं ॥३०॥ हिंसानंदोद्भवं रौद्रं वक्तुं कस्या
स्ति कौशलं । जगज्जंतुसमुद्भूतविकल्पशतसंभवं ॥३१॥ हिंसोपकरणादानं क्रूरसत्वेष्वनुग्रहं ॥ निस्त्रिंशतादि
गा निरौद्रे बाह्यानि देहिनां ॥३२॥ इत्याचार्य श्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे हिंसानंदः प्रथम
॥ छ ॥ असत्यकल्पनाजालकश्मलीकृतमानसः चेष्टते यज्जनस्तद्धि मृषारौद्रं प्रकीर्तितं ॥१॥ तद्यथा ॥ विधा
य वंचकं शास्त्रं मार्गमुद्दिश्य निर्दयं । प्रपात्य व्यसने लोकं भोक्ष्येहं [भोगयिष्यामि] वांछितं सुखं ॥२॥ असत्यचातुर्यबलेन लो
द्वित्तं ग्रहिष्यामि बहुप्रकारं । तथाश्वमातंगपुराकराणि कन्यादिरत्नानि च बंधुराणि ॥३॥ असत्यवाग्वंचनया

तंप्रवर्तयत्यत्रजनंवराकं॥स्वधर्ममार्गादतिवर्तनेनमदोद्धतोयःसहिरौद्रधामा॥४॥असत्यसामर्थ्यवशाद
तीन्नृपेणचान्येनचघातयामि॥अदोषिणांदोषचयंविधायचिंतेतिरौद्रायमतामुनींद्रैः॥५॥पातयामिजनं
मूढंव्यसनेनर्थसंकटे॥वाक्कौशल्यप्रयोगेणवांछितार्थप्रसिद्धये॥६॥इमानजडानबोधविचारविच्युतान
तारयाम्यद्यवचोनिरुन्नतैः॥७॥अमीप्रवर्त्यंतिमदीयकौशलादकार्यवर्गेष्वितिनात्रसंशयः॥८॥अनेकासत्यसं
कल्पैर्यःप्रमोदःप्रजायते॥मृषानंदात्मकंरौद्रंतत्प्रणीतंपुरातनैः॥९॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञाना
र्णवेयोगप्रदीपाधिकारेअसत्यरौद्रंद्वितीयं॥२॥छ॥चौर्योपदेशबाहुल्यंचातुर्यंचौर्यकर्मणि॥यच्चौर्यै
तःसच्चौर्यानंदइष्यते॥१॥तद्यथा॥यच्चौर्यायशरीरिणामहरहश्चिंतासमुत्पद्यतेकृत्वाचौर्यमपिप्रमोदमतुलं

कुर्वंतियत्संततं॥चौर्येण॥पिहितेपरैःपरधनेयज्जायतेसंभ्रमस्तच्चौर्यप्रभवंवदंतिनिपुणारौद्रंसुनिंदास्पदं॥२
कृत्वासहायंवरवीरसैन्यंतथाभ्युपायांश्चबहुप्रकारान्॥धनान्यलभ्यानिचिरार्जितानिसद्योहरिष्यामिजन
स्यधात्र्याम्॥३॥द्विपदश्चतुष्पदसारंधनधान्यवरांगनासमाकीर्णम्॥वस्तुपरकीयमपिमेस्वाधीनंचौर्यसाम
र्थ्यात्॥४॥इत्थंचुरायांविविधप्रकारःशरीरिभिर्यःक्रियतेऽभिलाषः॥अपारदुःखार्णवहेतुभूतंरौद्रंतृतीयंत
दिहप्रणीतं॥५॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेचौर्यानंदरौद्रंतृतीयं॥३॥छ॥ब
ह्वारंभपरिग्रहेषुनियतंरक्षार्थमभ्युद्यतेयत्संकल्पपरंपरांवितनुतेप्राणीहरौद्राशयः॥यच्चालंब्यमहत्त्वमु
न्नतमनाराजेत्यहंमन्यतेतत्तुर्यंप्रवदंतिनिर्मलधियोरौद्रंभवाशंसिनां॥१॥तद्यथा॥आरोप्यचापंनिशितैः

शूरौघैर्निकृत्य वैरिव्रजमुद्धताग्रं॥ दग्ध्वा पुरग्रामवराकराणि प्राप्स्येहमैश्वर्य्यमनन्यसाध्यं॥२॥ आछिद्य गृह्णे
धरां मदीयां कन्या निरत्नानि धनानि नारीः॥३॥ ये शत्रवः संप्रति लुप्तचिन्ता स्तेषां करिष्ये कुलकक्षदाहं॥४॥ सक
पूज्यं वीरवर्गोपसेव्यं स्वजनधनसमृद्धं रत्नरामाभिरामं॥ अमितविभवसारं विश्वभोगाधिपत्यं प्रबल
लातं हंतकृत्वा मया प्तं॥ जित्वा भुवं जंतुकुलानि हत्वा प्रविश्य दुर्गाण्युदधीन्विलंघ्य॥ कृत्वा पदं मूर्द्ध्नि मदोद्ध
तानां मयाधिपत्यं कृतमभ्युदारं॥६॥ जलानलव्यालविषप्रयोगैर्विश्वासभेदप्रणिधिः प्रपंचैः॥ उत्साद्य निःशे
षातिचक्रं स्फुरत्ययं मे प्रबलप्रतापः॥७॥ इत्यादि संरक्षणसंनिबद्धं यच्चिंतनं यत्क्रियते मनुष्यैः॥ संरक्षणानंद
भवं तदेतद्रौद्रं प्रणीतं जगदेकनाथैः॥८॥ इत्याचार्य्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे संरक्ष

॥नंदं रौद्रं चतुर्थं॥४॥ कृष्णलेश्याबलोपेतं श्वभ्रपातफलांकितं॥ रौद्रमेतद्धि जीवानां स्यात्पंचगुणभूमिकं॥१॥ क्रूर
तादंडपारुष्यं वंचकत्वं कठोरता॥ निस्त्रिंशत्वं च लिंगानि रौद्रस्योक्तानि सूरिभिः॥२॥ विस्फुलिंगनिभे नेत्रे भ्रूव
क्रा भीषणाकृतिः॥ कंपस्वेदादिलिंगानि रौद्रे बाह्यानि देहिनां॥३॥ क्षायोपशमिको भावः कालश्चांतर्मुहूर्त्तिकः
दुष्टाशयवशादेतदप्रशस्तावलंबनं॥४॥ दहत्येव क्षणार्द्धेन देहिनामिदमुत्थितं॥ असद्ध्यानं त्रिलोकश्रीप्रसवं
धर्म्मपादपं॥५॥ इत्यार्त्तरौद्रे गृहिणामजस्रं ध्याने सुनिंद्ये भवतः स्वतोपि॥ परिग्रहारंभकषायदोषैः कलंकितेंतः
करणे विशंकं॥६॥ क्वचित्क्वचिदमी भावाः प्रवर्त्तंते मुनेरपि॥ प्राक्कर्मगौरवाच्चित्रं प्रायः संसारकारणं॥७॥ स्वयमेव
प्रजायंते विना यत्नेन देहिनां॥ अनादिदृढसंस्कारादुर्ध्यानानि प्रतिक्षणं॥८॥ इति विगतकलंके श्चार्चितं चित्रसं॥

दुरितकुरुहकंदं निंद्यदुर्ध्यानयुग्मं॥कटुकतरफलाढ्यं सम्यगालोच्य धीरत्यज सपदि यदित्वं मोक्षमार्गे प्र
वृत्तः॥४१॥इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे आर्तरौद्रध्यानप्रकरणं॥छ॥अथप्र
ममालंब्य विधाय स्ववशं मनः॥विरज्य कामभोगेषु धर्मध्यानं निरूपय॥१॥तदेव प्रक्रमायातं सविकल्पं स
मासतः॥आरंभफलपर्यंतं प्रोच्यमानं विबुध्यतां॥२॥ज्ञानवैराग्यसंपन्नः संवृतात्मा स्थिराशयः॥मुमुक्षुरु
द्यतो ध्याता धीरः प्रशस्यते॥३॥चतस्रो भावना धन्याः पुराणपुरुषाश्रिताः॥मैत्र्यादयश्चिरं चित्ते विधेया
सिद्धये॥४॥अथ मैत्री॥क्षुद्रेतरविकल्पेषु चरस्थिरशरीरिषु॥सुखदुःखाद्यवस्थासु संस्थितेषु यथायथं॥५॥
नानायोनिगतेष्वेषु समत्वेनाविराधका॥साध्वी समत्वमापन्ना मतिर्मैत्रीति पठ्यते॥६॥जीवंतु जंतवः सर्वे क्लेशव्य

सनवर्जिताः॥प्राप्नुवंतुसुखंत्यक्त्वावैरंपापंपराभवं॥अथकरुणा॥दैन्यशोकसमुत्त्रासरोगपीडार्दितात्मसु
वधबंधनरुद्धेषुयाचमानेषुजीवितं॥७॥क्षुत्तृट्श्रमाभिभूतेषुशीताद्यैर्व्यथितेषुच॥अवरुद्धेषुनिस्त्रंपीड्यं
तमानेषुनिर्द्दयं॥९॥मारणार्त्तेषुभूतेषुयत्प्रतीकारवांछया॥अनुग्रहमतिःसेयंकरुणेतिप्रकीर्तिता॥१०॥
अथमुदिता॥तपःश्रुतयमोद्युक्तचेतसांज्ञानचक्षुषां॥विजिताक्षकषायाणांस्वतत्त्वाभ्यासशालिनां॥१॥ज
जगत्त्रयचमत्कारिचरणाधिष्ठितात्मनां॥योगुणेषुप्रमोदःस्यात्सद्भिःसामुदितामता॥२॥अथोपेक्षा॥क्रोधा
ष्टेषुसत्वेषुनिस्त्रंशक्रूरकर्मसु॥मधुमांससुरान्यस्त्रीलुब्धेष्वत्यंतपापिषु॥३॥देवागमयतिव्रातनिंदकेष्वा
त्मसंशिषु॥नास्तिकेषुचमाध्यस्थ्यंयत्सोपेक्षाप्रकीर्तिता॥४॥एताःमुनिजनानंदसुधास्यंदैकचंद्रिकाः॥ध्व

स्मरागाद्युरुक्लेशजालोकाग्रपददीपिका॥१५॥ एतान्निरन्तरनिशं योगी श्रीउन्नत्यंतनिर्भरं॥ सुखमात्मोत्थमत्यस्त
मिहैवास्कंदति ध्रुवं॥१६॥ भावनास्वासु संलीनः करोत्यध्यात्मनिश्चयं॥ अवगम्य जगद्वृत्तं विषयेषु न मुह्य
१७॥ योगनिद्रा स्थितिं धत्ते मोहनिद्रापसर्पति॥ आसु सम्यक्प्रणीतासु स्यान्मुनेस्तत्वनिश्चयं॥१८॥ आभिर्यदा
विश्वं भावयत्यखिलं वशी॥ तदौदासीन्यमापन्नश्चरत्यत्रैव मुक्तवत्॥१९॥ रागादिवागुराजालं निकृत्याचिं
त्यविक्रमः॥ स्थानमाश्रयते धन्यो विविक्तं ध्यानसिद्धये॥२०॥ कानिचित्तत्र प्रशस्यंते दुष्यंते कानिचित्पुनः
ध्ययनसिद्ध्यर्थं स्थानानि मुनिसत्तमैः॥२१॥ विकीर्यते मनः सद्यः स्थानदोषेण देहिनां॥ तदेव स्वस्थतां धत्ते
नमासाद्य बंधुरं॥२२॥ म्लेच्छाधमजनैर्जुष्टं दुष्टभूपालपालितं॥ पाषंडिमंडलाक्रांतं महामिथ्यात्ववासितं॥२३॥ कौ

लकापालिकावासं रुद्रक्षुद्रादिमंदिरं ॥ उद्भ्रांतभूतवेतालं चंडिकाभवनाजिरं ॥२४॥ पण्यस्त्रीकृतसंकेतं मंदचा
रित्रमंदिरं ॥ क्रूरकर्माभिचाराढ्यं कुशास्त्राभ्यासवंचितं ॥२५॥ क्षेत्रजातिकुलोत्पन्नशक्तिस्वीकारदर्पितं ॥ मिलित
नेकदुःशीलकल्पितानेकसाहसं ॥२६॥ द्यूतकारसुरापानविटबंदिव्रजान्वितं ॥ पापसत्वसमाक्रांतं नास्ति
कासारसेवितं ॥२७॥ क्रव्यादकामुकाकीर्णं व्याधविध्वस्तश्वापदं ॥ शिल्पिकारुकविक्षिप्तमग्निजीविजनां
चितं ॥२८॥ प्रतिपक्षशिरःशूलप्रत्यनीकावलंबितं ॥ आत्रेयीखंडितव्यंगसंश्रितं च परित्यजेत् ॥२९॥ विद्वंति
जनाः पापाः संचरंत्यभिसारिकाः ॥ क्षोभयंतीङ्गिताकारैर्यत्र नार्योप्यशंकिताः ॥३०॥ किं च क्षोभाय मोहाय य
द्विकाराय जायते ॥ स्थानं तदपि मोक्तव्यं ध्यानविध्वंसशंकितैः ॥३१॥ तृणकंटकवल्मीकविषमोपलकर्दमैः ॥ भ

स्मोछिष्टास्थिरत्ताद्येर्दूषितांसंत्यजेद्ध्रुवं॥३२॥काकःकौशिकमार्जारखरगोमायुमंडलैः॥अवघुष्टंहिविघ्नाय
ध्यातुंकामस्ययोगिनः॥३३॥ध्यानध्वंसनिमित्तानितथान्यान्यपिभूतले॥नहिस्वप्नेपिसेव्यानिस्थानानि
निसत्तमैः॥३४॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेविरुद्धस्थानप्रकरणं॥छ॥
त्रेमहातीर्थेपुराणपुरुषाश्रिते॥कल्याणकलितेपुण्येध्यानसिद्धिःप्रजायते॥१॥सागरांतेवनांतेवाशैलशृंगां
तरेथवा॥पुलिनेपद्मखंडांतेप्राकारेशालसंकटे॥२॥सरितांसंगमेद्वीपेप्रशस्तेतरुकोटरे॥जीर्णोद्यानेश्मसा
वागुहागर्भेविजंतुके॥३॥सिद्धकूटेजिनागारेकृत्रिमेऽकृत्रिमेऽपिवा॥महर्द्धिकमहावीरयोगसंसिद्धवांछि
ते॥४॥मनःप्रीतिप्रदेप्रशस्तेशंकाकोलाहलच्युते॥सर्वर्त्तुसुखदेरम्येसर्वोपद्रववर्जिते॥५॥शून्यवेश्मन्यथ

भूगर्भे कदलीगृहे॥ पुरोपवनवेद्यंते मंडपे चैत्यपादपे॥६॥ वर्षातपतुषारादिपवनासारवर्जिते॥ स्थाने जागर्त
विश्रांतं यमी जन्मार्तिशांतये॥७॥ यत्र रागादयो दोषा अजस्रं यांति लाघवं॥ तत्रैव वसतिः साध्वी ध्यानकाले वि
शेषतः॥८॥ दारुपट्टे शिलापट्टे भूमौ वा सिकतास्थले॥ समाधिसिद्धये धीरो विदध्यात्सुस्थिरासनं॥९॥ पर्यंक
मर्द्धपर्यंकं वज्रवीरासनं तथा॥ सुखारविंदपूर्वं च कायोत्सर्गश्च संमतः॥१०॥ येन येन सुखासीना विदध्युर्नि
श्चलं मनः॥ तत्तदेव विधेयं स्यान्मुनिभिर्बंधुरासनं॥११॥ कायोत्सर्गश्च पर्यंकः प्रशस्तः कैश्चिदीरितः॥ देहिनां
वीर्यवैकल्यात्कालदोषेण संप्रति॥१२॥ वज्रकाया महासत्वा निःकंपाः सुस्थिरासनाः॥ सर्वावस्थास्वलं ध्यात्वा
गताः प्राग्योगिनः शिवं॥१३॥ उपसर्गैरपि स्फीतैर्देवदैत्यादिकल्पितैः॥ स्वरूपालंबितं तेषां न चेतश्चाल्यते क्वचित्॥

१४॥श्रूयंते संवृतस्वांताः स्वतत्वकृतनिश्चयाः॥विपद्योग्रोपसर्गाग्निं ध्यानसिद्धं समाश्रिताः॥१५॥केचिज्ज्वालाव
ऌरिसरिन्नगजव्यालविध्वस्तदेहा॥के चिक्रूरारिदैत्यैरदयमभिहताश्चक्रशूलासिदंडैः॥भूकंपोत्पातवातप्र
बलपविघनव्रातरुद्धास्तथान्ये कृत्वास्थैर्यं समाधौ सपदि शिवपदं निःप्रपंचं प्रपन्ना॥१६॥तद्वीर्यं यमिनां मन्ये
संप्रति पुरातनं॥अतः स्वप्नेपि तामास्थां प्राचीनां कर्तुमक्षमाः॥१७॥निःशेषविषयोत्तीर्णो निर्विण्णो जन्मसं
आत्माधीनमनाः शश्वत्सर्वदा ध्यातुमर्हति॥१८॥अविक्षिप्तं यदा चेतः स्वतत्वाभिमुखं भवेत्॥नैकं मुक्त्वा मुनेः सा
द्विक्षेपरहितं मनः॥१९॥संविग्नः संवृतो धीरः स्थिरात्मा निर्मलाशयः॥सर्वावस्थासु सर्वत्र सदैव ध्यातुमर्हति॥२०
जने जनसंकीर्णे सुस्थिते दुःस्थितेपि वा॥यदि धत्ते स्थिरं चित्तं न तदास्ति निषेधनं॥२१॥पूर्वाशाभिमुखः साक्षा

रान्मुखोथवा॥प्रसन्नवदनोध्याताध्यानकालेप्रशस्यते॥२२॥अथवा॥चरणाज्ञानसंपन्नाजिताक्षावीतविभ्रमाः
प्रागनेकास्ववस्थासुसंप्राप्तायमिनःशिवं॥२३॥मुख्योपचारभेदेनद्वौमुनीस्वामिनौमतौ॥अप्रमत्तप्रमत्ताख्यौधर्मस्यै
तौयथायथं॥२४॥अप्रमत्तःसुस्थानोवज्रकायोवशीस्थिरः॥पूर्ववित्संवृतोधीरोध्यातासंपूर्णलक्षणः॥२५॥श्रुतेन
विकलेनापि॥स्वामीसूत्रेप्रकीर्तितः॥अधःश्रेण्याप्रवृत्तात्माधर्मध्यानस्यसुश्रुतः॥२६॥किंचकेचिच्चधर्मस्यचत्वा
रःस्वामिनःस्मृताः॥सदृष्ट्याद्यप्रमत्तांतायथायोग्येनहेतुना॥२७॥ध्यातारस्त्रिविधाज्ञेयास्तेषांध्यानान्यपित्रिधा॥लेश्या
विशुद्धियोगेनफलसिद्धिरुदाहृता॥२८॥अथासनजयंयोगीकरोतुविजितेंद्रियः॥मनागपिनखिद्यंतेसमाधौसुस्थि
रासनाः॥२९॥आसनाभ्यासवैकल्याद्वपुःस्थैर्यंनविद्यते॥खिद्यतेत्वंगवैकल्यात्समाधिसमयेध्रुवं॥३०॥वातातपतुषा

राद्यैर्जंतुजातैरनेकधा॥ कृतासनजयो योगी खेदितोपि न खिद्यते॥३१॥ आसाद्यानिमतं रम्यं स्थानं चित्तप्रस
उद्भिन्नपुलकः श्रीमान्पर्यंकमधितिष्ठति॥३२॥ पर्यंकदेशमध्यस्थे प्रोत्तानेकरकुड्मले॥ करोत्युद्भिन्नराजीव
निभे च्युतचापले॥३३॥ नासाग्रदेशविन्यस्ते धत्ते नेत्रे सुनिश्चले॥ प्रसन्ने सौम्यतापन्ने निस्पंदे मंदतारके॥३४॥
भ्रूविविक्रियाहीनं सुश्लिष्टाधरपल्लवं॥ सुप्तमत्स्यह्रदप्रायं विदध्यान्मुखपंकजं॥३५॥ अगाधकरुणांभोधौ मग्नः
विग्नमानसः॥ स्वच्छायतं वपुर्धत्ते प्रशस्तं पुस्तमूर्तिवत्॥३६॥ विवेकवार्द्धिकल्लोलैर्निर्मलीकृतमानसः॥ ज्ञानमंत्रो
द्धृताशेषरागादिविषमग्रहः॥३७॥ रत्नाकर इवागाधः सुराद्रिरिव निश्चलः॥ प्रशांतविश्वविस्पंदः प्रनष्टसकल
भ्रमः॥३८॥ किमयं लोष्टनिष्पन्नः किं वा पुस्तप्रकल्पितः॥ समीपस्थैरपि प्रायः प्राज्ञैर्ध्यानीति लक्ष्यते॥३९॥

जयः॥ मुनिर्नीतस्वसिद्धांतैः प्राणायामः प्रशस्यते॥ मुनिभिर्ध्यानसिद्ध्यर्थं स्थैर्यार्थं चांतरात्मनः॥४०॥ अतः साक्षात्
स विज्ञेयः पूर्वमेव मनीषिणा॥ मनागप्यन्यथाशक्यो न कर्तुं चित्तनिग्रहः॥४१॥ त्रिधा लक्षणभेदेन संस्मृतः पूर्व
सूरिभिः॥ पूरकः कुंभकश्चैव रेचकस्तदनंतरं॥४२॥ तद्यथा॥ द्वादशांतात्समाकृष्य यः समीरः प्रपूर्यते॥ स पूरक इ
ति ज्ञेयो वायुविज्ञानकोविदैः॥४३॥ निरुणद्धि स्थिरीकृत्य श्वसनं नाभिपंकजे॥ कुंभवन्निर्भरः सोयं कुंभकः परि
कीर्तितः॥४४॥ निःसार्यतेतियत्नेन यः कोष्ठात्श्वसनः शनैः॥ स रेचक इति प्राज्ञैः प्रणीतः पवनागमे॥४५॥ नाभिकं
दाद्विनिःक्रांतं हृत्पद्मोदरमध्यगं॥ द्वादशांते सुविश्रांतं तज्ज्ञेयं परमेश्वरं॥४६॥ तस्य चारं गतिं बुद्ध्वा संस्थां चैवात्मनः
सदा॥ चिंतयेत्कालमायुश्च शुभाशुभफलोदयं॥४७॥ अत्राभ्यासप्रयत्नेन प्राप्ततंद्रः प्रतिक्षणं॥ कुर्वन्योगी विजान

पूरी रिणां ध्रुवं वामा॥ स्पर्शयति तदेव पृच्छति मानादक्षिणा नाडी॥७४॥ संग्राम सुरत भोजन विरुद्ध दुर्गेषु
क्षेमेषु स्यात् अभ्युदय हृदय वांछित समस्त प्रश्नेषु वामेव॥७५॥ नेष्ट घटने समर्था राहु ग्रह काल चंद्र सू
र्याद्या॥ क्षिति वरुणो त्वमृत गतो समस्त कल्याणदो ज्ञेयो॥७६॥ पूर्णे पूर्वस्य जयो रिक्ते त्वितरस्य कथ्यते तज्ज्ञैः
भयोर्युद्ध निमित्ते दूतेनाशंसिते प्रश्ने॥७७॥ ज्ञातुर्नाम प्रथमं पश्चाद्य द्यातुरस्य गृह्णाति॥ दूतस्तदेष्ट सिद्धि
स्तस्याद्विपर्यासात्॥७८॥ जयति समाक्षर नामा वामा बाहु स्थितेन दूतेन॥ विषमाक्षरस्तु दक्षिण दिक्संस्थे
नात्र संपाते॥७९॥ भूतादि ग्रह गृहीतानां रोगार्तानां च सर्पदष्टानां॥ पूर्वोक्त एव च विधिर्बोधव्यो मंत्रिणां वश्यं॥८०॥
पूर्णा वरुणे प्रविशति यदि वामा जायते क्वचित्पुण्यैः॥ सिध्यंत्यचिंतान्यपि कार्याण्यारभ्यमाणानि॥८१॥ जय

वितलाभाद्याः येऽर्थाः पूर्वं तु सूचिताः शास्त्रे ॥ स्युस्ते सर्वेप्यफला मृत्युस्थे मरुति लोकानां ॥ ९२ ॥ अनिलमवबुध्य म
न्यकुपुष्पं हस्तात्प्रपातयेत् ज्ञानी ॥ मृतजीवितविज्ञाने ततः स्वयं निश्चयं कुरुते ॥ ९३ ॥ वरुणे त्वरितो लाभश्चिरेण
भौमे तदर्थिने वाच्यं ॥ तुच्छतरः पवनाख्ये सिद्धोपि विनश्यते वह्नौ ॥ ९४ ॥ आयाति गतो वरुणे भौमे तत्रैव तिष्ठति
सुखेन ॥ यात्यन्यत्र श्वसने मृत इति वह्नौ समादेश्यं ॥ ९५ ॥ घोरतरः संग्रामो हुताशनो मरुति भंग एव स्यात् ॥ गग
ने स्येन्यविनाशं मृत्युर्वा युद्धपृच्छायां ॥ ९६ ॥ ऐंद्रे विजयः समरे ततोधिको वांछितश्च वरुणे स्यात् ॥ संधिर्वा रिपु
भंगात् स्वसिद्धिसंसूचनोपेतः ॥ ९७ ॥ वर्षति भौमे मघवान् वरुणे तु मनोगतं तथाजस्रं ॥ दुर्दिनघनाश्च पवने वह्नौ
वृष्टिः कियन्मात्रा ॥ ९८ ॥ सस्यानां निःपत्तिः स्याद्वरुणे पार्थिवे च सुश्लाघ्या ॥ स्वल्पापि न चाग्नेये वाच्या काशे तु मध्य

॥ज्ञानार्णव॥
॥९५॥

९९नृपतिगुरुबंधुवृद्धाअपरेप्यभिलषितसिद्धयेलोकाः॥पूर्णांगेकर्तव्याविदुषावीतप्रपंचेन॥१०॥पा
नाशानेषुदक्षैःपूर्णांगनिवेशितासुयोषासुक्रियतेचेतस्त्वरितंनातोन्यद्वश्यविज्ञानं॥११॥अरिरिणिकचौरदु
ष्टाअपरेप्युपसर्गविग्रहाद्याश्च॥रिक्तांगेकर्तव्याजयलाभसुखार्थिभिःपुरुषैः॥१२॥रिपुशस्त्रसंप्रहारेरक्षतियः
पूर्णगात्रभूभागं॥बलिभिरपिवैरिवर्गैर्न्निभिद्यतेतस्यसामर्थ्यं॥१३॥वरुणमहेंद्रौप्राप्तौप्रश्नोगर्भस्यपुत्रदौ
इतरौस्त्रीजन्मकरौशून्यंगर्भस्यनाशाय॥१४॥नासाप्रवाहदिग्भागेगर्भार्थ्यस्तुपृच्छतिपुरुषःपुरुषादेशं
न्यभागेतथांगना॥१५॥विज्ञेयःसन्मुखेषंढःसुषुम्नायांमुनेप्रभूतागर्भहानिस्तुसंक्रांतौसमक्षेमंविनिर्द्दि
ष्टंध्यायेत्तयदिनसम्यगमरुत्तदोबिंदुभिःसनिश्चेय॥सितपीतारुणकृष्णैर्वरुणावनिदहनपवनोत्थैः॥अ

कर्णाक्षिनासिकापुटमंगुष्टप्रथममध्यमांगुलिभिः॥ह्वाभ्यांचपिधायमुखं करणेनहि दृश्यते बिंदुः॥८॥दक्षि
णामथवावामांयोनिषेद्धुंसमीप्सति॥तदंगं पीडयेदन्यां नासानाडीसमाश्रयेत्॥९॥अग्रेवामविभागेचंद्र
क्षेत्रंवदंतितत्वविदः॥पृष्टौचदक्षिणांगेरवेस्तदेवाङ्कुराचार्याः॥१०॥अवनिवनदहनमंडलविचलनशील
स्यतावदनिलस्य॥गतिस्त्रस्त्रेवमरुतपुरविहारिणः सातिरश्चीना॥११॥पवनः प्रवेशकालेजीवइतिप्रो
च्यतेमहामतिभिः॥निःक्रमणेनिर्जीवः फलमपिचतयोस्तथाभूतं॥१२॥जीवेजीवतिविश्वंमृतेमृतंसूरि
भिः समुद्दिष्टं॥सुखदुःखजयपराजयलाभालाभादि मार्गोयं॥१३॥संचरतियदावायुस्तत्वात्तत्वांतरंतदा॥
ज्ञेयं॥यत्त्याजतितद्रिक्तं तत्पूर्णंयत्रसंक्रमति॥१४॥ग्रामपुरयुद्धजनपदगृहराजकुलप्रवेशनिःकाशे॥पूर्ण

पादमग्रे कृत्वा व्रजतोस्य सिद्धिः स्यात्॥१५॥ अमृते प्रवहति नूनं केचित्प्रवदंति सूरयोत्यर्थं॥जीवंति विषाशक्ता जी
तितथान्यथाभूते॥१६॥यस्मिन्न सति म्रियते जीवति सति भवति चेतनाकलितः॥जी
तत्त्वविदः॥१७॥सुखदुःखजयपराजयजीवितमरणानि विघ्न इति केचित्॥वायुप्रपंचरचनामवे
मानः॥१९॥कुर्वीत पूरके सत्याकृष्टिं कुंभके स्तंभं॥उच्चाटनं च योगी रेचकविज्ञानसामर्थ्यात्॥१८॥इदम
त्वंश्वसनभवं सामर्थ्यं स्यान्मुनेर्ध्रुवं तस्य॥यो नाडिकाविशुद्धिं सम्यक्कर्तुं विजानाति॥२०॥यद्यपि समीरचारं
नतरं योगिभिः सुदुर्लक्ष्यं॥जानाति विगततंद्रस्तथापि नाड्यां कृताभ्यासः॥२१॥नाडिकाशुद्धिः॥तद्यथा॥
चिंतयति नाभिकमले सुवंधुरं कर्णिकारूढं॥२२॥रेचयति ततः शीघ्रं पतं

ग्गमार्गेण भासुराकारं॥ ज्वालाकलापकलितं स्फुलिंगमालाकराक्रांतं॥२३॥ तरलतडिदुग्रवेगं धूमशिखावर्तं
द्दिक्त्रं॥ गच्छंतं गगनतले दुर्द्धर्षं देवदैत्यानां॥२४॥ शारदिंदुधामधवलं गगनतलान्मंदमंदमवतीर्णं॥ क्षरदमृ
तमिव सुधांशोः पूरयति पथा पुनः पुरतः॥२५॥ आनीय नाभिकमलं निवेश्य तस्मिन् पुनः पुनश्चैव॥ अनलस
मनसा कार्यं प्रवेशानिःक्रमणमनवरतं॥२६॥ अथ नाभिपुंडरीकाच्छनैश्शनैर्हृदयकमलनालेन॥ निःसारयति
समीरं पुनः प्रवेशयति सोद्योगं॥२७॥ नाडीशुद्धिं कुरुते दहनपुरंदिनकरस्य मार्गेण॥ निःक्रामद्विशदिंदोः पुर
मितरेणेति केप्याहुः॥२८॥ इति नाडिकाविशुद्धौ परिकलिताभ्यासकौशलो योगी॥ आत्मेच्छयैव घटयति पुटयो
पवनं क्षणार्द्धेन॥२९॥ एकस्यामयमास्ते कालं नाडीयुगद्वयं सार्द्धं॥ तामुत्सृज्य ततोन्यामधितिष्ठति नाडिकामनिल॥

॥ज्ञानार्णव॥
॥९७॥

२४॥षोडशप्रमिते केश्चिन्निर्णीतो वायुसंक्रमः॥अहोरात्रमिते काले द्वयोर्नाड्योर्यथाक्रमं॥२५॥षट्शतान्यधिका
न्याहुः सहस्राण्येकविंशतिः॥अहोरात्रे नरि स्वस्थे प्राणवायोर्गमागमः॥२६॥संक्रांतिमपि नो वेत्ति यः समीरस्य सु
न्याहुः सहस्राण्येकविंशतिः॥अहोरात्रेन रिस्वस्थे प्राणवायोर्गमागमः॥२६॥संक्रांतिमपि नो वेत्तियः समीरस्य सु
ध्धीः॥स तत्वनिर्णयं कर्तुं प्रवृत्तः किं न लज्जते॥२७॥अथ कौतूहलहेतोः करोति वेधं समाधिसामर्थ्यात्॥सम्य
तपवनः शनैः शनैरर्कतूलेषु॥२९॥तत्र कृतनिश्चयो सौ जातीवकुलादिगंधद्रव्येषु॥वरुणपवनेन वेधं करोति लक्ष्यकृताभ्यास
धं वितंद्रात्मा॥३०॥कर्पूरकुंकुमागुरुमलयजकुष्टादिगंधद्रव्येषु॥वरुणपवनेन वेधं करोति लक्ष्यकृताभ्यास
च्छी॥एतेषु लब्धलक्ष्यस्ततोतिसूक्ष्मेषु पत्रिकायेषु॥वेधं करोति वायुः प्रपंचयोजनचतुरः॥३१॥मधुकरपतंगप
त्रिषु तथांडजेषु मृगशरीरेषु॥संचरति जातलक्ष्यस्त्वनन्यचित्तो वशी धीरः॥३२॥नरतुरगकरिशरीरे क्रम ॥९७॥

चरतिनिःसरत्येव॥मुक्तोपलक्षपेषुचयदृच्छयासंक्रमंकुर्यात॥३९॥इतिपरपुरप्रवेशाभ्यासोत्थसमाधिसामर्थ्या
त॥विचरतियदृच्छयासौमुक्तइवात्यंतनिर्लेप॥४०॥अथकौतुकमात्रफलोयंपरपुरप्रवेशोमहाप्रयासेन॥सि
ध्यतिनवाकथंचिन्महतामपिकालयोगेन॥४१॥स्मरगरलमनोविजयंसमस्तरोगक्षयंवपुःस्थैर्य्यं॥पवनप्रचारच
तुरःकरोतियोगीनसंदेहः॥४२॥जन्मशतजनितमुग्रंप्राणायामाद्विलीयतेपापं॥नाडीयुगलस्यांतेयतेर्जिताक्ष
स्यधीरस्य॥४३॥उत्कंचा॥जलबिंदुकुशाग्रेणमासेमासेतुयःपिबेत॥संवत्सरशतंसाग्रंप्राणायामश्चतत्समः॥४४॥
॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेप्राणायामप्रकरणं॥२९॥समाकृष्येंद्रियार्थेभ्यः
साक्षंचेतःप्रशांतधीः॥यत्रयत्रेच्छयाधत्तेप्रत्याहारःसउच्यते॥१॥निःसंगःसंवृतस्वांतःकूर्मवत्संवृतेंद्रियः॥यमीसम

त्वमापन्नो ध्यानतंत्रे स्थिरीभवेत्॥२॥ किंच॥ गोचरेभ्यो हृषीकाणि तेभ्यश्चित्तमनाकुलं॥ पृथक्कृत्य वशी धत्ते ललाटेऽत्यंतनिश्चलं॥३॥ सम्यक् समाधिसिद्ध्यर्थं प्रत्याहारः प्रशस्यते॥ प्राणायामेन विक्षिप्तं मनः स्वास्थ्यं न दति॥४॥ प्रत्याहृतं पुनः स्वस्थं सर्वोपाधिविवर्जितं॥ चेतः समत्वमापन्नं स्वस्मिन्नेव लयं व्रजेत्॥५॥ वायोः संतुर्यमणिमाद्यंगसाधनं॥ प्रायः प्रत्यूहबीजं स्यान्मुनेर्मुक्तिमभीप्सतः॥६॥ किमनेन प्रपंचेन स्वीतरागस्य योनः वशीकृताक्षवर्गस्य प्राणायामो न शस्यते॥७॥ प्राणस्यायमने पीडा तस्यां स्यादार्त्तसंभवः॥ तेन प्रच्यावते नं ज्ञाततत्वोपि लक्षतः॥८॥ पूरणे कुंभके चैव तथा श्वसननिर्गमे॥ व्यग्रीभवंति चेतांसि क्लिश्यमानानि वायुभिः॥१०॥ किंच॥ नातिरिक्तं फलं सूत्रे प्राणायामात्प्रकीर्तितं॥ अतस्तदर्थमस्माभिर्नातिरिक्तं कृतः श्रमः॥११॥ निरु



॥स्वसंदेहार्तजन्मना॥ सुविचार्यैव तद्ग्रेयं यन्मुक्तेबीजमग्रिमं॥१॥ संविग्नस्य प्रशांतस्य॥

ध्यकरणग्रामंसमत्वमवलंब्यच॥ललाटदेशसंलीनंविदध्यान्निश्चलंमनः॥१२॥अथवा॥नेत्रद्वंद्वेश्रवणयुगले
नासिकाग्रेललाटेवक्त्रेनाभौशिरसिहृदयेतालुनिभ्रूयुगांते॥ध्यानस्थानान्यमलमतिभिःकीर्तितान्यत्रदेहेते
ष्वेकस्मिन्विगतविषयंचित्तमालंबनीयं॥१३॥स्थानेष्वेतेषुविश्रांतंमुनेर्लक्ष्यंवितन्वतः॥उत्पद्यंतेस्वसंवित्तेर्बह
वोध्यानप्रत्ययाः॥१४॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेप्रत्याहारधारणाप्रकरणम्
॥छ॥अनंतगुणराजीवबंधुरप्यत्रवंचितः॥अहोभवमहाकक्षेप्रागहंकर्मवैरिभिः॥१॥स्वविभ्रमसमुद्भूतैरागाद्य
तुलबंधनैः॥बद्धोविडंबितःकालमनंतंजन्मदुर्गमे॥२॥अद्यरागज्वरोनष्टोमोहनिद्राविनिर्गता॥ततःकर्मरिपुंह
न्मिध्याननिस्त्रिंशधारया॥३॥आत्मानमेवपश्यामिनिर्धूयाज्ञानजंतमः॥क्षेपयामितथाप्युग्रंकर्मेंधनसमुत्क
॥४॥

बलध्यानवज्रेणदुरितद्रुमसंक्षयं॥तथाकुर्मोयथादत्तेनपुनर्भवसंभवं॥५॥जन्मज्वरसमुद्भूतमहामूर्छा
प्लुषा॥च्चविज्ञानोद्भवःसाक्षात्मोक्षमार्गोनवीक्षितः॥६॥मयात्मापिनविज्ञातोविश्वलोकैकलोचनः॥अवि
विषमग्राहदंतचर्वितचेतसा॥७॥परमात्मापरंज्योतिर्जगज्ज्येष्ठोपिवंचितः॥आपातमात्ररम्यैस्तैर्विषयैरंतनीर
सैः॥८॥अहंचपरमात्माचद्वावेतौज्ञानलोचनौ अतस्तंज्ञातुमिच्छामितत्स्वरूपोपलब्धये॥९॥ममप्रात्यागुण
ग्रामोव्यक्त्याचपरमेष्ठिनः॥एतावानावयोर्भेदःप्राक्तिव्यक्तिस्वभावतः॥१०॥उक्तंच॥नासत्पूर्वाश्चपूर्वानोनिर्वि
शेषविकारजाः॥स्वाभाविकविशेषाढ्याभूतपूर्वाश्चतद्गुणाः॥११॥तावन्मांपीडयत्येवमहादाहोद्भवोज्वरः॥
नसुधांभोधेर्नावगाहःप्रवर्तते॥१२॥अहंननारकोनाममनतिर्यग्वापिमानुषः॥नदेवःकिंतुसिद्धात्मासर्वोयं

जः क्रमः॥१३॥ अनंतवीर्यविज्ञानदृगानंदात्मकोप्यहं॥ किंन प्रोन्मूलयाम्यद्य प्रतिपक्षविषद्रुमं॥१४॥ अद्यासाद्य
स्वसामर्थ्यं प्रविश्यानंदमंदिरं॥ न स्वरूपाच्यविष्येहं बाह्यार्थेषु गतस्पृहः॥१५॥ मयाद्यैव विनिश्चेयं स्वस्वरूपं हि वस्तु
तः॥ छित्वाप्यनादिसंभूतामविद्यां वैरिवागुरां॥१६॥ इति प्रतिज्ञां प्रतिपद्य धीरः समस्तरागादिकलंकमुक्तः॥ आलंब
ते धर्ममचंचलात्मा शुक्लं च यद्यस्ति बलं विशालं॥१७॥ प्रतिज्ञा॥ ध्येयं वस्तु वदंति निर्मलधियः तच्चेतनाचेतनं
स्थित्युत्पत्तिविनाशलक्षणयुतं मूर्तेतरं च क्रमात्॥ शुद्धध्यानविशीर्णकर्मकवचो देवश्च मुक्तेर्वरः सर्वज्ञः सक
लः शिवः स भगवान् सिद्धः परो निःकलः॥१८॥ अमी जीवादयो भावाश्चिदचिल्लक्षलांछिताः॥ तत्स्वरूपाविरोधे
न ध्येया धर्ममनीषिभिः॥१९॥ ध्याने ह्युपरते धीमान् मनः कुर्यात्समाहितं॥ निर्वेदपदमापन्नं मग्नं वा करुणांबुधौ॥२०॥

थलोकत्रयीनाथममूर्तंपरमेश्वरं॥ध्यातुंप्रक्रमतेसाक्षात्परमात्मानमव्ययम्॥२१॥एकंच॥त्रिकालविषयं
साक्षाच्छक्तिव्यक्तिविवक्षया॥सामान्येननयेनैकंपरमात्मानमामनेत्॥२२॥साकारंनिर्गताकारंनिष्कलंप
क्षरं॥निर्विकल्पंचनिःकंपंनित्यमानंदमंदिरं॥२३॥विश्वरूपमविज्ञातस्वरूपंसर्वदोदितं कृतकृत्यंशिवंशांतं
निःकलंकरणच्युतं॥२४॥निःशेषभवसंभूतक्लेशद्रुमहुताशनं॥शुद्धमत्यंतनिर्लेपंज्ञानराज्येप्रतिष्ठितं॥२५॥
विशुद्धादर्शसंक्रांतंप्रतिबिंबसमप्रभं॥ज्योतिर्मयंमहावीर्यंपरिपूर्णंपुरातनं॥२६॥विशुद्धाष्टगुणोपेतंनि
र्गतामयं॥अप्रमेयंपरिछिन्नंविश्वतत्वव्यवस्थितं॥२७॥यदग्राह्यंबहिर्भावैर्ग्राह्यंचांतर्मुखैःक्षणं॥तत्स्वभा
त्मकंसाक्षात्स्वरूपंपरमात्मनः॥२८॥अणोरपिचयःसूक्ष्मोमहानाकाशतोपिच॥जगद्वंद्यःससिद्धात्मानिष्प

त्यंतनिर्वृतः॥२९॥यस्यानुध्यानमात्रेणक्षीयंतेजन्मजारुजाः॥नान्यथाजन्मिनांसोयंजगतांप्रभुरच्युतः॥३०॥वि
ज्ञातमपिनिःशेषंयदज्ञानादपार्थकं॥यस्मिंश्चविदितेविश्वंज्ञातमेवनसंशयः॥३१॥यत्स्वरूपापरिज्ञानान्नात्म
तत्वेस्थितिर्भवेत्॥यंज्ञात्वामुनिभिःसाक्षात्प्राप्तंतस्यैववैभवं॥३२॥सएवनियतंध्येयःसविज्ञेयोमुमुक्षुभिः॥
अनन्यशरणीभूयतद्गतेनांतरात्मना॥३३॥अवाग्गोचरमव्यक्तमनंतंशब्दवर्जितं॥अजंजन्मभ्रमातीतंनि
र्विकल्पंविचिंतयेत्॥३४॥यद्बोधानंतभागेपिद्रव्यपर्यायसंभृतं॥लोकालोकंस्थितिंधत्तेसस्याल्लोकत्रयी
गुरुः॥३५॥तत्स्वरूपाहितस्वांतस्तद्गुणग्रामरंजितः॥योजयत्यात्मनात्मानंतस्मिंस्तद्रूपसिद्धये॥३६॥इत्यजस्रं
स्मरन्योगीतत्स्वरूपावलंबितः॥तन्मयत्वमवाप्नोतिग्राह्यग्राहकवर्जितं॥३७॥अनन्यशरणीभूयसतस्मि

द्वीयतेतथा॥ध्यातृध्यानोभयाभावेध्येयेनैक्यंयथाव्रजेत्॥३७॥सोयंसमरसीभावस्तदेकीकरणंस्मृतं॥अ
त्वेनयत्रात्मालीयतेपरमात्मनि॥३८॥अनन्यशरणस्तद्धि तत्संलीनैकमानसः॥तद्गुणस्तत्स्वभावात्मात
त्म्यात्तत्स्वसएवमनः॥४०॥उक्तं च॥कटस्यकर्त्ताहमितिसंबंधःस्याद्द्वयोर्द्वयोः॥ध्यानंध्येयंयदात्मैवसंबंधःक
पस्तदा॥४१॥यदज्ञानाज्जन्मीभ्रमतिनियतंजन्मगहनंविदित्वायंसद्यस्त्रिदशगुरुतांयातिगुरुतां॥सविज्ञेय
साक्षात्सकलभुवनानंदनिलयःपरंज्योतिस्त्रातापरमपुरुषोचिंत्याचरितः॥४२॥इत्थंयत्रानवछिन्नभाव
निर्भवच्युतं॥भावयत्यनिशंध्यानीतत्सवीर्यंप्रकीर्तितं॥४२॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्ण
वेयोगप्रदीपाधिकारेसवीर्यध्यानप्रकरणम्॥३८॥अज्ञातस्वस्वरूपेणपरमात्मानबुध्यते॥आत्मैवप्राग्विनिश्चेयोवि ॥१०

न पुरुषैः परं॥१॥ किंच॥ आत्मतत्त्वानभिज्ञस्य न स्यादात्मन्यवस्थितिः॥ मुह्यत्यतः पृथक्कर्तुं स्वरूपं देहदेहिनोः॥२॥ तत
योर्भेदापरिज्ञानान्नात्मलाभः प्रजायते॥ तदभावात्स्वविज्ञानसूतिः स्वप्नेपि दुर्घटा॥३॥ अतः प्रागेव निश्चेयः सम्य
गात्मा मुमुक्षुभिः॥ अपोषपरपर्यायः कल्पनाजालवर्जितः॥४॥ तथाहि॥ त्रिःप्रकारः स भूतेषु सर्वेष्वात्मा व्यव
स्थितः॥ बहिरंतः परश्चेति विकल्पैर्वक्ष्यमाणकैः॥५॥ आत्मबुद्धिः शरीरादौ यस्यात्मन्यात्मनिश्चयः॥ सोंतरात्मा म
तस्तज्ज्ञैर्विभ्रमध्वांतभास्करैः॥६॥ निर्लेपो निःकलः शुद्धो निःपन्नोत्यंतनिर्वृतः॥ निर्विकल्पश्च शुद्धात्मा परमात्मे
ति वर्णितः॥७॥ कथं तर्हि पृथक्कृत्वा देहाद्यर्थकदंबकान्॥ आत्मानमभ्यसेद्योगी निर्विकल्पमतीद्रियं॥८॥ अपा
स्य बहिरात्मानं सुस्थिरेणांतरात्मना॥ ध्यायेद्विशुद्धमत्यंतं परमात्मानमव्ययं॥९॥ तद्यथा॥ संयोजयति देहेन
॥यस्य स्यादात्मविभ्रमात्। बहिरात्मा स विज्ञेयो मोहनिद्रास्तचेतनः॥१०॥ त्रुटि॥

॥ज्ञानार्णव॥ ॥१०२॥

चिदात्मानं विमूढधीः बहिरात्मा ततो ज्ञानी [शरीरात्] पृथक्पश्यति देहिनां [आत्मानं] ॥१॥ अक्षद्वारैरविश्रांतं स्वतत्वविमुखैर्भृशं

[वेष्टित] तो बहिरात्मायं वपुरात्मेति मन्यते ॥२॥ सुरं त्रिदशपर्यायैर्नृपर्यायैस्तथा नरं ॥ तिर्यंचं च तदंगे स्वं न

गे च नारकं ॥३॥ वेत्यविद्यापरिश्रांतो मूढस्तन्न पुनस्तथा ॥ किं त्वमूर्तं स्वसंवेद्यं तद्रूपं [आत्मस्वरूप] परिकीर्तितं ॥४॥ स्वशरीर

मिवान्विष्य परांगं च्युतचेतनं ॥ परमात्मानमज्ञानी परबुद्ध्याध्यवस्यति ॥५॥ स्वपरात्मेतरविकल्पैस्ततः शरीरेषु वल्ल

तं प्रवृत्तैर्वंचितं विश्वमनात्मन्यात्मदर्शिभिः ॥६॥ ततः सोऽत्यंतभिन्नेषु पशुपुत्रांगनादिषु ॥ आत्मत्वं

[व्यापित] दविद्याज्वरजिह्मितः ॥७॥ [आत्मत्व] साक्षात्स्वामेव निश्चित्य पदार्थांश्चेतनेतरान् ॥ स्वस्यैवं मन्यते मूढस्तन्नाशो

दिकं ॥८॥ अनादिप्रभवः सोऽयमविद्याविषमग्रहः [विषमग्रहेण] ॥ शरीरादीनि पश्यंति येन स्वमिति देहिनः ॥९॥ ध्व ॥१०२॥

विज्ञानं वपुषा घटयत्ययं (रचयति) मां (आत्मान) स्वस्मिन्नात्मेति बोधस्तु निनत्यंगाच्छरीरिणाम् ॥२०॥ वपुष्यात्ममतिः सूते बंधुवि-
त्तादिकल्पनां स्वस्य संकल्पमेतेन मन्वानं मुषितं जगत् ॥२१॥ तेन (पुद्गलेन) चात्मेति यो भावः स स्याद्बीजं भवस्थितेः ॥ बहिर्वि-
तांक्षविक्षेपस्तं त्यक्त्वांतर्विशेत्ततः ॥२२॥ अक्षद्वारैः स्वतश्च्युत्वा निमग्नो गोचरेष्वहं । तानासाद्याहमित्येतन्नादि
सम्यगवेदिषं ॥२३॥ बाह्यात्मानमपास्यैवमंतरात्मा ततस्त्यजेत् । प्रकाशयत्ययं योगः स्वरूपं परमेष्ठिनः ॥२४॥
यद्दृष्टपूर्वमिदं रूपं तत्तदन्यन्न चान्यथा । ज्ञानवच्चव्यतीताक्षमतः केनात्र वच्म्यहं ॥२५॥ यज्ज्ञनैरपि बोध्योहं य-
ज्जनान्बोधयाम्यहं । तद्विभ्रमपदं यस्मादहं विध्वस्तकल्पनः ॥२६॥ यः स्वमेव समादत्ते नादत्ते यः स्वतोपरां (आत्मन) । निर्विकल्पः
स विज्ञानी स्वसंवेद्योस्मि केवलः ॥२७॥ अज्ञातसर्पमतेर्यद्वच्छृंखलायां क्रियाभ्रमः ॥ तथैवमे क्रियापूर्वास्तत्वादौ स्वा-

नपुंसक

तिभ्रमात्॥२८॥शृंखलायां यथा वृत्तिर्विनष्टे भुजगभ्रमे। तन्वादौ मे तथा वृत्तिर्नष्टात्मविभ्रमस्य वै॥२९॥एतदे

मध्य पुरुष १ २

षैष एकं द्वे बहूनीति धियः पदं। नाहं यच्चात्मनात्मानं वेद्म्यात्मनि तदस्म्यहं॥३०॥यदबोधे मया सुप्तं यद्बोधे
रुत्थितं। तद्रूपमेयमत्यक्षं स्वसंवेद्यमहं किल॥३१॥ज्योतिर्मयं ममात्मानं पश्यतोत्रैव यान्त्यमी। क्षयं रागाद
यस्तेन नारिः कोपि प्रियो न मे॥३२॥अदृष्टमत्स्वरूपोयं जनो नारिर्न मे प्रियः। साक्षात्सुदृष्टरूपोपि जनो नारिः
सुहृन्न मे॥३३॥इतः प्रभृति निःशेषं पूर्वं पूर्वं विचेष्टितं। ममाद्यज्ञाततत्त्वस्य भाति स्वप्नेंद्रजालवत्॥३४॥यो
·प्रसिद्धात्मा परं ज्योतिः सनातनः। सोहं तस्मात्प्रपश्यामि स्वस्मिन्नात्मानमच्युतं॥३५॥बाह्यात्मानमपास्य
प्रसन्नेनांतरात्मना। विधूतकल्पनाजालं परमात्मानमामनेत्॥३६॥बंधमोक्षावुभावेतौ भ्रमेतरनिबंधनौ।

अभ्यसेत्

धंश्चपरसंबंधाद्भेदाभ्यासात्ततःशिवं॥३७॥अलौकिकमहोवृत्तंज्ञानिनःकेनवर्ण्यते॥अज्ञानीबध्यतेयत्रज्ञा
नीतत्रैवमुच्यते॥३८॥यज्जन्मगहनेखिन्नंप्राक्तयादुःखसंकुले॥तदात्मेतरयोर्नूनमभेदेनावधारणात्॥३९॥म आत्मनि
यिसत्यपिविज्ञानप्रदीपेविश्वदर्शिनि॥किंनिमज्जत्ययंलोकोवराकोजन्मकर्दमे॥४०॥आत्मन्येवात्मनात्माय
स्वयमेवानुभूयते॥अतोन्यत्रैवमांज्ञातुंप्रयासःकार्यनिष्फलः॥४१॥सएवाहंसएवाहमित्यभ्यस्यन्ननारतं॥ बहिरात्मा
भावनां
वासनांदृढयत्नेनप्राप्नोत्यात्मन्यवस्थितिं॥४२॥स्याद्यद्यत्प्रीतयेज्ञस्यतत्तदेवापदास्पदं॥बिभेत्ययंपुनर्य
स्मिंस्तदेवानंदमंदिरं॥४३॥सुसंवृत्तेंद्रियग्रामेप्रसन्नेचांतरात्मनि॥क्षणंस्फुरतियत्तत्त्वंतद्रूपंपरमेष्ठिनः॥४४॥य
सिद्धात्मापरःसोहंयोहंसपरमेश्वरः॥मदन्योनमयोपास्योमदन्येनतुनाप्यहं॥४५॥आकृष्यगोचरेव्याघ्रमुख

॥ज्ञानार्णव॥
॥१०८॥

दात्मानमात्मना॥स्वस्मिन्नहं स्थिरीभूतश्चिदानंदमये स्वयं॥४६॥पृथगिच्छंनमांवेत्ति यस्तनोर्वीतविभ्रमः॥
कुर्वन्नपितपस्तीव्रंनसमुच्यतेबंधनैः॥४७॥स्वपरांतरविज्ञानसुधास्यंदाभिनंदितः॥खिद्यतेनतपःकुर्वन्न
क्लेशैः शरीरजैः॥४८॥रागादिमलविश्लेषाद्यस्यचित्तंसुनिर्मलं॥सम्यक्स्वंसहिजानातिनान्यःकेनापिहेतु
ना॥४९॥निर्विकल्पंमनस्तत्वंनविकल्पैरभिद्रुतं॥निर्विकल्पमतःकार्यंसम्यक्तत्वप्रसिद्धये॥५०॥अज्ञानविद्धु
तःस्वतत्वादपवर्तते॥विज्ञानवासितस्तद्विपश्यत्यंतःपरप्रभुं॥५१॥मुनेर्यदिमनोमोहाद्रागाद्यैरभिभूयते॥
तन्नियोज्यात्मनस्तत्वे तानेवक्षिपतिक्षणात्॥५२॥यत्रांज्ञात्मारतःकायेतस्माद्व्यावर्तितोधिया॥चिदानं
देरूपेयोजितःप्रीतिमुत्सृजेत्॥५३॥स्वविभ्रमोद्भवंदुःखंस्वज्ञानेनैवहीयते॥तपसापिनतच्छेद्यमात्मवि ॥१०८॥

ज्ञानवर्जितैः ॥४१॥ रूपायुर्बलवित्तादिसंपत्तिं स्वस्य वांछति । बहिरात्माथ विज्ञानी मोक्षात्तेभ्योपि विच्युतिं ॥४
परत्राहंमतिर्मन्यत्र बध्नाति स्वं स्वतश्च्युतः ॥ आत्मन्यात्ममतिं कृत्वान्यस्माज्ज्ञानी विमुच्यते ॥४३॥ आत्मानं
वेत्त्यविज्ञानी त्रिलिंगीसंगतं वपुः ॥ सम्यग्वेदी पुनस्तत्त्वं लिंगसंगविवर्जितं ॥४४॥ समभ्यस्तं सुविज्ञानं निर्नि
तमपि तत्त्वतः ॥ अनादिविभ्रमात्तत्त्वं प्रस्खलत्येव योगिनः ॥४५॥ अचिद्रूप्यमिदं रूपं न चिद्रूप्यं ततो वृथा । म
मरागादयोर्थेषु स्वरूपं संश्रयाम्यतः ॥४६॥ करोत्यज्ञो ग्रहत्यागौ बहिस्तत्त्वविदात्मनि । प्रबुद्धात्मा न बहिर्नांत
स्तौ विदध्यात्कथंचन ॥४७॥ वाक्कायाभ्यां पृथक्कृत्वा मनसात्मानमभ्यसेत् । वाक्तनुभ्यां प्रकुर्वीत कार्यमन्य
न्न चेतसा ॥४८॥ विश्वासानंदयोः स्थानं स्याज्जगद्दत्तचेतसां । क्वानंदः क्व च विश्वासः स्वस्मिन्नेवात्मवेदिनां ॥४९॥

स्वबोधादपरं किंचित्स्वांते विभृयात्क्षणं॥ कुर्यात्कार्यवशात्किंचिद्वाक्कायाभ्यामनादृतः॥८३॥ यदक्षविषयं रूपं
मद्रूपात्तद्विलक्षणम्॥ आनंदनिर्भरं रूपमंतर्ज्योतिर्मयं मम॥८४॥ अंतर्दुःखं बहिः सौख्यं योगाभ्यासोद्यतात्म
सुप्रतिष्ठितयोगानां विपर्यस्तमिदं पुनः॥८५॥ तद्विज्ञेयं तदाख्येयं तच्छ्रव्यं चिंत्यमेव वा॥ येन भ्रांतिमपास्योच्चैः
स्यादात्मन्यात्मनः स्थितिः॥८६॥ विषयेषु न तत्किंचित्स्याद्धितं यच्छरीरिणां॥ तथाप्येष्वेव कुर्वंति प्रीतिमज्ञा
नयोगिनः॥८७॥ अनाख्यातमिवाख्यातमपि न प्रतिपद्यते॥ आत्मानं जडधीस्तेन वंध्यस्तत्र ममोद्यमः॥८८॥ त
(अकथित) (अतिकृत्य) (विफल)
हं यन्मया किंचित्प्रज्ञापयितुमिष्यते॥ सोऽहं न स परग्राह्यस्तन्मुधा बोधनोद्यमः॥८९॥ निरुद्धज्योतिरज्ञो
(वृथा)
स्ततोऽन्यत्रैव तुष्यति॥ तुष्यत्यात्मनि विज्ञानी बहिर्विगतविभ्रमः॥९०॥ यावदात्मेच्छया देहे वाक्चित्तवपुषां ॥१०५॥

जन्मतावदमीषांतुभेदज्ञानान्नवच्युतिः॥७१॥जीर्णेरक्तेघनेध्वस्तेनात्माजीर्णादिकःपटेएवंवपुषिजीर्णादौना
पर्वतसम आगतं
त्माजीर्णादिकस्तथा॥७२॥चलमप्यचलप्रख्यंजगद्यस्यावभासते॥ज्ञानयोगक्रियाहीनंसएवास्कंदतिशिवं
औदारिक मिश्र कार्मण आत्मा कुतः
आच्छादित ७३॥तनुत्रयावृत्तोदेहीज्योतिर्मयवपुःस्वयं॥नवेत्तियावदात्मानंकुतावद्बंधविच्युतिः॥७४॥गलन्मिलदणुव्र परमाणुसमूह
रचनाविशेषः
तसन्निवेशयात्मकंवपुः॥वेत्तिमूढस्तदात्मानमनाद्युत्पन्नविभ्रमात्॥७५॥मुक्तिरेवमुनेस्तस्ययस्यात्मन्य
चलास्थितिः॥नतस्यास्तिध्रुवंमुक्तिर्नयस्यात्मन्यवस्थितिः॥७६॥दृढःस्थूलःस्थिरोदीर्घोजीर्णःशीर्णोलघु
असंयोजयत्= र्गुरुः॥वपुषैवमसंबध्नन्स्वंविद्याद्वेदनात्मकं॥७७॥जनसंसर्गवाक्चित्तपरिस्पंदमनोभ्रमाः॥उत्तरोत्तरबीजा
जानीयात् निज्ञानीजनस्ततस्त्यजेत्॥७८॥नगग्रामादिषुस्वस्यनिवासंवेत्त्यनात्मवित्॥सर्वावस्थासुविज्ञानीस्वस्मि

वृत्तावृते संयमात्

निबंधनं ॥ तदभावात्पुनर्मोक्षो मुमुक्षुस्तत्ततस्त्यजेत् ॥८७॥ प्रागसंयममुत्सृज्य संयमैकतरो भवेत् ॥ ततोऽपि विरमेत्प्राप्य सम्यगात्मव्यवस्थितिम् ॥८८॥ जातिलिंगमिति द्वंद्वमंगमाश्रित्य वर्तते ॥ अंगात्मकश्च संसारस्तस्मात्तद्द्वितयं त्यजेत् ॥८९॥ अभेदविद्यथा पंगोर्वेत्ति चक्षुरचक्षुषि ॥ अंगेऽपि च तथा वेत्ति संयोगाद् दृश्यमात्मनः ॥९०॥ भेदविन्न यथा वेत्ति पंगोश्चक्षुरचक्षुषि ॥ ज्ञाता त्मानं तथा वेत्ति तं काये दृश्यमात्मनः ॥९१॥ मत्तोन्मत्तादिचेष्टासु यथाऽज्ञस्य स्वविभ्रमः ॥ तथा सर्वास्ववस्थासु नैकचित्तत्वदर्शिनः ॥९२॥ देहात्मदृष्टिर्मुच्येत चेज्जागर्ति पठत्यपि ॥ स्वप्नोन्मत्तोऽपि मुच्येत स्वस्मिन्नुत्पन्ननिश्चयः ॥९३॥ आत्मानं सिद्धमाराध्य प्राप्नोत्यात्मापि सिद्धतां ॥ वर्तिः प्रदीपमासाद्य यथाभ्येति प्रदीपतां ॥९४॥ आराध्यात्मानमेवात्मा परमात्मत्वमश्नुते ॥ यथा भवति वृक्षः स्वं स्वेनो

(interlinear glosses: जातिलिंग, अज्ञानी, ज्ञानी, अज्ञानी, प्राप्यते)

वंजानिहि

रिकल्पयविशुद्धं स्वात्मनात्मानमेव ॥४॥ इति साधारणं ध्येयं ध्यानयोर्धर्मशुक्लयोः ॥ विशुद्धिस्वामिभेदेन भेदः
सूत्रे निरूपितः ॥१०५॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे शुद्धोपचारयोगप्रकर
णम् ॥ ॥छ॥ अनादिविभ्रमान्मोहादनभ्यासादसद्ग्रहात् ॥ ज्ञातमप्यात्मनस्तत्वं प्रचलत्येव योगिनः ॥१॥ अवि
द्यावासनावेशविशेषविवशात्मना ॥ योज्यमानमपि स्वस्मिन्न चेतः कुरुते रतिं ॥२॥ साक्षात्कर्तुमतः क्षिप्रं वि
श्वतत्वं यथास्थितं ॥ विशुद्धिं चात्मनः शश्वद्वस्तुधर्मे स्थिरीभवेत् ॥३॥ अलक्ष्यं लक्ष्यसंबंधात्स्थूलात्सू
क्ष्मं विचिंतयेत् ॥ सालंबाच्च निरालंबं तत्ववित्तत्वमंजसा ॥४॥ आज्ञापायविपाकानां क्रमशः संस्थितेस्तथा
विचयो यः पृथक् तद्धि धर्मध्यानं चतुर्विधं ॥५॥ वस्तुतत्वं स्वसिद्धांतप्रसिद्धं यत्र चिंतयेत् ॥ सर्वज्ञाज्ञाभियोगेन त

१वस्तुतत्वं उत्पादव्ययध्रौव्यस्वभावं
दाज्ञाविचयोमतः॥६॥ अनंतगुणपर्यायसंयुतंतत्त्रयात्मकं॥ त्रिकालविषयंसाक्षाज्जिनाज्ञासिद्धमामनेत्॥७॥
अवलोकयेत्
चार्स्त्सूक्ष्मंजिनेंद्रवचनंहेतुभिर्यन्नहन्यते॥ आज्ञासिद्धंचतद्ग्राह्यंनान्यथावादिनोजिनाः॥८॥ इति॥ प्रमाणनयनि
क्षेपैनिर्णीतंतत्वमंजसा॥ स्थित्युत्पत्तिव्ययोपेतंचिदचिल्लक्षणंस्मरेत्॥९॥ श्रीमत्सर्वज्ञदेवोक्तंश्रुतज्ञानंचनिर्म
अविनश्वरं
लंपाब्दार्थनिचितंतत्वमत्रचिंत्यमविप्लुतं॥१०॥ श्रुतज्ञानंतद्यथा॥ परिस्फुरतियत्रैतद्विश्वविद्याकदंबकं॥ द्रव्यभा
वनिदानंद्विपाब्दार्थज्योतिरग्रिमं॥११॥ अपारमतिगंभीरंपुण्यतीर्थंपुरातनं॥ पूर्वापरविरोधादिकलंकपरिवर्जितं
१२॥ नयोपनयसंपातगहनंगणिभिःस्तुतं॥ विचित्रमतिचित्रार्थसंकीर्णंविश्वलोचनं॥१३॥ अनेकपदविन्यासै
विस्तरितं रचितैः
ःप्रकीर्णकैः॥ प्रस्तुतंतद्विभात्युच्चैःरत्नाकरइवापरः॥१४॥ मदमत्तोद्धतक्षुद्रशासनाप्रीविषांतकं॥ दुरंतेघन

सूर्यमंडलं १श्रुतज्ञानं १श्रुतज्ञानेन

मिथ्यात्वध्वांतघर्मांशुमंडलं ॥१५॥ यत्पवित्रं जगत्यस्मिन्विभुध्वतिजगत्त्रयी ॥ येनतद्धिमतां सेव्यं श्रुतज्ञानं चतु
र्विधं ॥१६॥ स्थित्युत्पत्तिव्ययोपेतं तृतीयं योगिलोचनं ॥ नयद्वयसमावेशान्सार्द्यनादिव्यवस्थितं ॥१७॥ निःशेषनय
वज्र पर्वत
निक्षेपनिकषग्रावसन्निभं ॥ स्याद्वादपविनिर्घातभग्नान्यमतभूधरं ॥१८॥ इत्यादिगुणसंदर्भनिर्भरं भव्यशुद्धिदं ॥ ध्ये
यं तु धीमतां श्रेष्ठाः श्रुतज्ञानमहार्णवं ॥१९॥ यज्जन्मज्वरघातकं त्रिभुवनाधीशैर्यदभ्यर्चितं यत्स्याद्वादमहाध्वजं न
यपूताकीर्णं च यत्पमतो ॥ उत्पादस्थितिभंगलांछनयुता यस्मिन्पदार्थाः स्थितास्तच्छ्रीवीरमुखारविंदगदितं देया
युष्माकं च्छ्रुतं वः श्रियं ॥२०॥ वाग्देव्याः कुलमंदिरं बुधजनानंदैकचंद्रोदयं मुक्तेर्मंगलमग्रिमं शिवपथप्रस्थानदिव्यानकं
ऽऽ तत्वश्रन्यस्वेतपरमृगा सिंह
तत्वाभासकुरंगपंचवदनं भव्यान्विनेतुं क्षमं तच्छ्रोत्रांजलिभिः पिवंतु गुणिनः सिद्धांतवार्द्धेः पयः ॥२१॥ येनैते निपत

सर्वज्ञाज्ञां पुरस्कृत्य सम्यगर्थान् विचिन्तयेत्॥ यत्र तद्ध्यानमाम्नातमाज्ञाख्यं योगिपुंगवैः॥२३॥



वादि गिरयस्तुष्यंति योगीश्वरा भव्या येन विदंति निर्वृत्तिपदं मुंचंति मोहं बुधाः॥ यद्वंधुर्यमिनां यदक्षयसुखस्या
धारभूतं नृणां तल्लोकद्वयशुद्धिदं जिनवचः पुष्याद्विवेकश्रियं॥२२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे यो
गप्रदीपाधिकारे आज्ञाविचयप्रकरणं॥छ॥ अपायविचयं ध्यानं तद्वदंति मनीषिणः॥ अपायः कर्मणां यत्र सोपा
यः स्मर्यते बुधैः॥१॥ तद्यथा॥ श्रीमत्सर्वज्ञनिर्दिष्टं मार्गं रत्नत्रयात्मकं॥ अनासाद्य भवारण्ये चिरं नष्टाः शरीरिणः॥२॥
मज्जनोन्मज्जनं प्राप्ता व्रजंति भवसागरे॥ वराकाः प्राणिनोऽप्राप्य यानपात्रं जिनेश्वरं॥३॥ महाव्यसनसप्तार्चिः प्रदीप्ते
न्मकानने॥ भ्रमताद्यं मया प्राप्तं सम्यग्ज्ञानांबुधेस्तटं॥४॥ अद्यापि यदि निर्वेदविवेकाग्रेंद्रमस्तकात्॥ स्खले
वं जन्मांधः कूपपातो निवारितः॥५॥ अनादिभ्रमसंभूतं कथं निर्वार्यते मया॥ मिथ्यात्वाविरतिप्रायं कर्मबंधनिबं

घनंदिसोहंसुद्धःप्रसिद्धात्मादृग्बोधविमलेक्षणः॥जन्मपंकेचिरंखिन्नःखंडमानःस्वकर्मणा॥९॥एकतःकार्मणं
सैन्यमहमेकस्ततोन्यतः॥स्थातव्यमप्रमत्तेनमयास्मिन्नरिसंकटे॥निर्द्धूयकर्मसंघातंप्रबलध्यानवह्निना॥
आत्मानं कदास्वंशोधयिष्यामिधातुस्थमिवकांचनं॥किमुपेयोममात्मायंकिंवाविज्ञानदर्शने॥चरणंचापवर्गायत्रि
आत्मा भिःसार्द्धंसएववा॥१०॥कोहंममाश्रवःकस्मात्कथंबंधःक्वनिर्जरा॥कामुक्तिःकिंविमुक्तस्यस्वरूपंचनिगद्यते॥११॥
जन्मनःप्रतिपक्षस्यमोक्षस्यात्यंतिकंसुखं॥अव्याबाधंस्वभावोत्थंकेनोपायेनलभ्यते॥१२॥मय्येवविदितेसाक्षा
आत्मा पदार्था.
द्विज्ञातंभुवनत्रयं॥यतोहमेवसर्वज्ञःसर्वदर्शीनिरंजनः॥१३॥उक्तंच॥एकोभावःसर्वभावःस्वभावःसर्वेभावाए
कभावस्वभावाः॥एकोभावस्तत्वतोयेनबुद्धःसर्वेभावास्तत्वतस्तेनबुद्धाः॥१४॥यावद्यावच्चसंबंधोममस्याद्बाह्यवस्तु

एकस्मिन्नात्मनिप्रतिबिंबिता.

मि॥ तावत्तावत्सदा स्वस्मिन्स्थितिः स्वप्नेपि दुर्घटा ॥१५॥ तथैवैते नुभूयंते पदार्थाः सूत्रसूचिताः ॥ अतो मार्गे त्रल
ग्नोहं प्राप्तो एव शिवास्पदं ॥१६॥ इत्युपायो विनिश्चेयो मार्गच्यवनलक्षणः ॥ कर्मणां च यथापायं उपायश्चात्मसि
॥१७॥ इति नयशतलीलालंबि निर्धूतदोषं च्युतसकलकलंकैः कीर्तितं ध्यानमेतत् ॥ अविरतमनुपूर्वं ध्या
प्रमादं स्फुरति हृदि विशुद्धज्ञानभास्वत्प्रकाशं ॥१८॥ इत्याचार्यश्री शुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपा
अपायविचयप्रकरणम् ॥ छ ॥ स विपाक इति ज्ञेयो यः स्वकर्मफलोदयः ॥ प्रतिक्षणसमुद्भूतश्चित्ररूपः शरीरिणां ॥
१॥ कर्मजातं फलं दत्ते विचित्रमिह देहिनां ॥ आसाद्य नियतं नाम द्रव्यादिकचतुष्टयं ॥२॥ तद्यथा ॥ स्रक्शय्यासन
यानवस्त्रवनितावादित्रमित्रांगजात्कर्पूरागुरुचंद्रचंदनवनक्रीडाद्रिसौधध्वजान् ॥ मातंगाश्व

पदार्थमया
रत्नत्रये
सूर्य
अनवरत
चतुर्थगुणस्थादि
द्रव्यक्षेत्रकालभाव

प्राप्य

भक्ष्यान्नपानानि वांछत्रादीन्युपगम्यवस्तुनिचयान्सौख्यं श्रयंते गिनः॥७॥क्षेत्राणि रमणीयानि सर्वर्तुसुखदानि च

भाला खड्ग छुरा गज

कामभोगास्पदान्युच्चैः प्राप्य सौख्यं निषेव्यते॥८॥ग्रामासिस्सुरयंत्रपन्नगगरव्यालानलोग्रग्रहानृणीर्णगंडकमि

कीच पाषाण बंदिग्रहान् बेडी किलक

कीटकंटकरजःक्षारास्थिपंकोपलान्॥काराग्रंष्टंखलपूंकुकांडनिगडक्रूरारिवैरांस्तथाऽव्याणयाप्यं भजंति दुः

खमखिलंजीवा भवाब्धिस्थिताः॥९॥निसर्गणांतिरोद्याणि भयत्के प्रास्पदानि च॥दुःखमेवाश्नुवंत्युच्चैः क्षेत्राण्यासा

द्य जंतवः॥१०॥अरिष्टोत्पातनिर्मुक्तो वातवर्षातिवर्जितः॥शीतोष्मरहितः कालः स्यात्सुखाय शरीरिणां॥११॥वर्षातप

कारण

तुषाराद्यैरुत्पातादिसंकुलः॥कालः सदैव सत्वानां दुःखानलनिबंधनं॥१२॥प्रशमादिसमुक्तो भावः सौख्याय दे

हिनां॥कर्मगौरवजः सोयं महाव्यसनमंदिरं॥१३॥मूलप्रकृतयस्तत्र कर्मणामष्टकीर्तिताः॥ज्ञानावरणपूर्वास्ताज

न्मिनांबंधहेतवः॥१०॥ज्ञानंवृत्तिकरंकर्मपंचभेदंप्रपंचितं॥निरुद्धंयेनजीवानांमतिज्ञानादिपंचकं॥११॥
कर्मदृग्गावरणासंज्ञकं॥रुध्यतेयेनजंतूनांशश्वद्दिष्टार्थदर्शनं॥१२॥वेदनीयंविदुःप्राज्ञाद्विधाकर्मशरीरिणाम्॥य
न्मधूल्लिप्तखड्गधारासमप्रभं॥१३॥सुरोरगनराधीशसेवितंश्रूयतेसुखं॥सातोदयवशात्प्राणीसंक
रोद्भवं॥१४॥असद्वेद्योदयाज्जीवंशरीरंमानसंद्विधा॥जीवैर्विषह्यतेदुःखंश्वभ्रादिभूमिषु॥१५॥दृष्टिमोहप्रकोपे
नदृष्टिःसाध्वीविलुप्यते॥तद्विलोपान्निमज्जंतिप्राणिनःश्वभ्रसागरे॥१६॥चारित्रमोहपाकेननांगिभिःप्राप्यतेक्षणं॥
भावशुद्ध्यात्मसात्कर्तुंचरणंस्वांतशुद्धिदं॥लब्ध्वापियत्प्रमाद्यंतियत्सवलंत्यथसंयमात्॥सोऽपिचारित्रमोहस्य
कःपरिकीर्तितः॥१७॥सुरायुरादिकंकर्मपाकात्संभूयनाकेप्रथितप्रभावैः॥समर्प्यतेदेहिनिरायुरग्र्यंसुखामृतं

दनलोलचित्तैः॥१९॥ नरायुषः कर्मविपाकयोगान्नरत्वमासाद्य शरीरभाजः॥ सुखासुखाक्रांतधियो नितांतं नयंति कालं

बहुभिः प्रपंचैः॥२०॥ चरस्थिरविकल्पासु तिर्यग्गतिषु जंतुभिः॥ तिर्यगायुः प्रकोपेन दुःखमेवानुभूयते॥२१॥ नरका

युः प्रकोपेन नरके चिंत्यवेदने॥ निपतत्य शीघ्र गिनस्तूर्णं कृतार्तकरुणस्वराः॥२२॥ नामकर्मोदयः साक्षाद्धत्ते चित्राण्य

नेकधा॥ नामानि गतिजात्यादि विकल्पानीह देहिनाम्॥२३॥ गोत्राख्यं जंतुजातस्य कर्म दत्ते स्वकं फलं॥ शस्ता श

स्तेषु गोत्रेषु जन्म निःपाद्य सर्वथा॥२४॥ निरुणद्धि स्वसामर्थ्याद्दानलाभादिपंचकं॥ विघ्नसंतति विन्यासैर्विघ्नकृ अंतरायके

त्कर्म देहिनाम्॥२५॥ मंदवीर्याणि जायंते कर्माण्यतिबलीन्यपि॥ अपक्वपाचनायोगात्फलानीव वनस्पतेः॥२६॥ अ

पक्वपाकः क्रियते ऽस्ततंद्रैस्तपोभिरुग्रैर्वरशुद्धियुक्तैः॥ क्रमाद्गुणश्रेणिसमाश्रयेण सुसंवृतांतःकरणैर्मुनींद्रैः॥२७॥

शुक्लध्यानेन

ढ्यां प्रकृष्टसामग्रीं समासाद्योग्रतपोबलात्॥ कर्माणि घातयंत्युच्चैस्तुर्यध्यानेन योगिनः॥२८॥ विलीनाशेषक

आत्मान

र्माणं स्फुरंतमतिनिर्मलं॥ स्वं ततः पुरुषाकारं स्वांगगर्भगतं स्मरेत्॥२९॥ इति विविधविकल्पं कर्मचित्रस्वरूपं प्रति

पापवन

समयमुदीर्णं जन्मवृक्षांगभाजां स्थिरचरविषयाणां भावयन्नस्ततंद्रो दहति दुरितकक्षं संयमी शांतमोहः॥

३०॥ इत्थं कर्मकटुप्रपाककलितासंसारघोरार्णवे जीवा दुर्गतिदुःखवाडवशिखासंतानसंतापिताः॥ मृ

पवने प्रेरिता

महोर्मिजालनिचिता मिथ्यात्ववातेरिताः॥ क्लिश्यंते तदिदं स्मरंतु नियतं धन्याः स्वसिद्ध्यर्थिनः॥३१॥ इ

र्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे विपाकविचयप्रकरणं॥ छ॥ अनंतानंतमाकाशं सर्व

स्वभावे स्थितं

सुप्रतिष्ठितं॥ तन्मध्येयं स्थितो लोकः श्रीमत्सर्वज्ञवर्णितः॥१॥ स्थित्युत्पत्तिव्ययोपेतैः पदार्थैश्चेतनेतरैः॥ सं

आकाश आकाशं पतितै

नादिमं सिद्धं कर्तृव्यापारवर्जितं ॥४॥ ऊर्द्ध्वाधोमध्यभागैर्यो बिभर्त्ति भुवनत्रयं ॥ अतः स एव सूत्रज्ञैस्त्रैलोक्याधार
घनोदधि
इष्यते ॥५॥ पर्युपरिसंक्रांतैः सर्वतोपि निरंतरैः ॥ त्रिभिर्वायुभिराकीर्णो महावेगैर्महाबलैः ॥६॥ घनाब्धिः प्रथ
पवनानां घनवात धृत्वा
मस्तेषां ततोन्यो घनमारुतः ॥ तनुवातस्तृतीयोंते विज्ञेया वायवः क्रमात् ॥७॥ उद्धृत्य सकलं लोकं स्वशक्त्यै
अंतरहिते पवन स्थूलवादीर्घशरीरा
व व्यवस्थिताः ॥ पर्यंतरहिते व्योम्नि मरुतः प्रांशुविग्रहाः ॥ घनाब्धिवलये लोकस्य घनांते व्यवस्थितः ॥ तनुवात घनोदधि घनवात
तरेसोपि संचाकाशे स्वयं स्थितिः ॥७॥ अधो वेत्रासनाकारो मध्ये स्यात् झल्लरीनिभः ॥ मृदंगसदृशश्चाग्रे सत्रि
धेति व्यवस्थितः ॥१०॥ अस्य प्रमाणमुन्नत्या सप्त सप्त च रज्जवः ॥ सप्तैकापंचैकाः च मूलमध्यांतविस्तरे ॥११॥ तत्राधो
भागमासाद्य संस्थिताः सप्तभूमयः ॥ यासु नारकषंढानां निवासः संति भीषणाः ॥१२॥ काश्चिद्दुज्वानलप्रख्याः कां

श्चिच्छीतोष्णसंकुलाः॥तुषारबहुलाःकाश्चिद्भूमयोऽत्यंतभीतिदाः॥११॥उदीर्णानलदीप्तासुनिमग्नोष्णासु
मिषु॥मेरुमात्रोऽप्ययः(लोह पिंड)पिंडःक्षिप्तःसद्योविलीयते॥१२॥शीतभूमिषुविप्राप्तोमेरुमात्रोऽपिशीर्यते॥शतधामो
ऽयःपिंडःप्राप्यभूमिंक्षणांतरे॥१३॥हिंसास्तेयानृताब्रह्मबह्वारंभादिपातकैः॥विशंतिनरकंघोरंप्राणिनो
निर्दयाः॥१४॥मिथ्यात्वाविरतिक्रोधरौद्रध्यानपरायणाः॥पतंतिजंतवःश्वभ्रेकृष्णलेश्यावशंगताः॥१५॥
सिपत्रवनाकीर्णेपूतिशूलादिसंकुले॥नरकेऽत्यंतदुर्गंधेवसासृक्कृमिकर्दमे॥१६॥शिवा(स्यालणी)श्वभ्या
मांसाशि(मांसभक्षी)विहगा(सेवुके)चिते॥वज्रकंटकसंकीर्णेशूलशाल्मलिदुर्गमे॥१७॥स्वभूय(उत्पद्य)कुष्टिका(सरावसंपुटमध्ये)मध्येऽर्ध्वपादाव
धोमुखाः॥ततःपतंतिसाक्रंदंवज्रज्वलनभूतले॥१८॥अयःकंटककीर्णासुद्रुतलोहाग्निवीथिषु(भूमिषु)॥छिन्नानि

सामस्त्येन

विशीर्णांगा उत्पतंति पतंति च ॥१९॥ दुःसहानिः प्रतीकारा ये रोगाः संति केचन ॥ साकल्येनैव गात्रेषु नारक
णां भवंति ते ॥२०॥ अदृष्टपूर्वमालोक्य तत्स्य रौद्रं भयास्पदं ॥ दिशः सर्वाः समीक्षंते वराका शरणार्थिनः ॥२१॥
शरीरा.
न तत्र सुजनः कोपि न मित्रं न च बांधवाः ॥ सर्वे ते निर्दयाः पापाः क्रूरा भीमोग्रविग्रहाः ॥२२॥ सर्वे च कुंडसंस्थान
शब्दैः
स्फुलिंगसदृशेक्षणाः ॥ विवर्द्धिताशुभध्यानाः प्रचंडाश्चंडशासनाः ॥२३॥ तत्राक्रंदरवैः सार्द्धं श्रूयते कर्कशः
स्वनाः ॥ दृश्यंते गृध्रगोमायुसर्प्पशार्दूलमंडलाः ॥२४॥ घ्रायंते पूतयो गंधाः स्पृश्यंते वज्रकंटकाः ॥ जलानि
पूतिगंधीनि नद्यो स्त्रग्मांसकर्द्दमाः ॥२५॥ चिंतयंति तदालोक्य रौद्रमत्यंतशंकिताः ॥ केयं भूमिः क्व चानीताः वे
वयं केन कर्मणा ॥२६॥ ततो विदुर्विभंगात्ते पतितं श्वभ्रसागरे ॥ कर्मणात्यंतरौद्रेण हिंसाद्यारंभजन्मना ॥२७॥

ततः प्रादुर्भवत्युच्चैः पश्चात्तापोऽतिदुःसहः॥ दहन्नविरतं चेतो वज्राग्निरिव निर्दयः॥२०॥ मनुष्यत्वं समासाद्य
केश्चिन्महात्मभिः॥ अपवर्गाय संविग्नैः कर्म पूज्यमनुष्ठितं॥२१॥ विषयाशामपाकृत्य विध्याप्य दहनानलं
सावधाने आचरित
प्रमत्तैस्तपश्चीर्णं धन्यैर्जन्मार्तिशांतये॥२२॥ उपसर्गाग्निपातेपि धैर्यमालंब्य चोन्नतैः॥ तैः कृतं तदनुष्ठानं ये
सिद्धं समीहितं॥२३॥ प्रमादमदमुत्सृज्य भावशुद्ध्या मनीषिभिः॥ केनाप्यचिंत्यवृत्तेन स्वर्गमोक्षश्च साधितः
पु अवगणिताः = शिवाभ्युदयदं मार्गं दिशंतोप्यतिवत्सलाः॥ मयावधीरिताः संतो निर्भर्त्स्य कटुकाक्षरैः॥२४॥ अतस्मिन्नपि
प्रव्यक्ते परलोके कशुद्धिदो मया तत्संचितं कर्म यज्जातं श्वभ्रसंबलं॥२५॥ अविद्याक्रांतचित्तेन विषयांधीकृता
ना चरस्थिरजंगिसंघातो निर्दोषोऽपि हतो मया॥२६॥ परवित्तामिषासक्तः परस्त्रीसंगलालसः॥ बहुव्यसनवि

२ नरकसामग्री

कारणाय = प्राय
प्रेतस्य = शोधनंदंडं

स्तोरौद्रध्याननपरायणः ॥३८॥ यत्स्थितः प्राक्चिरं कालं तस्यैतत्फलमागतं ॥ अनंतयातनासारे दुरंते श्वभ्रसाग
रे ॥३९॥ यन्मयार्वचितो लोको वराको मूढमानसः ॥ उपायैर्बहुभिर्निंद्यैः स्वाक्षसंतर्पणार्थिना ॥ ३८॥ कृतः परा
भवो येषां धनभूस्त्रीकृते मया ॥ घाताश्चते त्र संप्राप्ताः कर्तुं तस्याद्य निःक्रयं ॥ ३९॥ येतदा शशक प्रायां मया बल
आत्माधीनेन हितं
वता हता ॥ ते त्र जाता मृगेंद्राभा हंतुं मां विविधैर्वधैः ॥ ४०॥ मनुष्ये पि स्वतंत्रेण यत्कृतं नात्मनो हितं ॥ तदद्य किं क
निर्दयेन
रिष्यामि दैवपौरुषवर्जितः ॥ ४१॥ मदांधेनातिपापेन निस्त्रिंशेनास्तबुद्धिना ॥ विराध्याराध्यसंतानं कृतं कर्म
ति निंदितं ॥ ४२॥ यत्पुरग्रामविंध्येषु मयाक्षिप्तो कृतापुनः ॥ जलस्थलबिलाकाशचारिणो जंतवो हताः ॥ ४३॥ अद्य
तं ति मम मर्माणि स्मर्यमाणान्यनारतं ॥ प्राचीनान्यद्य कर्माणि क्रकचानीव निर्दयं ॥ ४४॥ किं करोमि क्व गच्छामि
१ पूर्वोपार्जितानी =     करवतानीव

२ मनुष्यभवे

२ सागरोपमे

कर्मजातेपुरास्थिते॥शरणंकिंप्रपद्यामिवराकोदैववंचित:॥४५॥यन्निमेषमपिद्रष्टुंस्मर्त्तुंश्रोतुंनशक्यते॥तद्दु
खमत्रसोढव्यंवार्द्धिमानै:कथंमया॥४६॥एतान्यदृष्टपूर्वाणिबिलानिचकुलानिच॥यातनाश्चमहाघोरानारका
अवलोकिता: कर्मणा
णांमयेक्षिता॥४७॥विषज्वलनसंकीर्णंवर्द्धमानंप्रतिक्षणं॥ममभूर्द्धिविनिक्षिप्तंदु:खंदैवेननिर्दयं॥४८॥नह्य
निमित्ते
प्युपतैत्रतेभृत्यानपुत्रा:नचबांधवा:॥येषांकृतेमयाकर्मकृतंस्वस्यैवघातकं॥४९॥नकलत्राणिमित्राणिनप
निर्दुय्य = निर्दय
पेप्रेरकोजन:॥पदमप्येकमायातोमयासार्द्धंगतत्रप:॥५०॥आश्रयंतियथावृक्षंफलितंपत्रिण:पुरा॥फलापा
येपुनर्यांतितथातेस्वजनागता:॥५१॥शुभाशुभानिकर्माणियांत्येवंसहदेहिनि॥स्वार्जितानीतियत्प्रोचु:संत ६ कथयन्तिस्म
धर्म
स्तत्सत्यतांगतं॥५२॥धर्मएवसमुद्धर्त्तुंप्रक्तोस्माच्छ्वभ्रसागरात्॥नसस्वप्नेपिपापेनमयासम्यगुपार्जित:॥५३॥स

हा यः कोऽपि कस्यापि नाभून्न च भविष्यति । सुखैकं प्राकृतं कर्म सर्वसत्वाभिनंदकं ॥५४॥ तत्कुर्वंत्यधमाः कर्म जिह्वो
पस्थादिदंडिताः । येन श्वभ्रेषु पच्यंते कृतार्तकरुणस्वनाः ॥५५॥ चक्षुरुन्मेषमात्रस्य सुखस्यार्थे कृतं मया । तत्पा
पं येन संपन्ना अनंता दुःखराशयः ॥५६॥ ध्यायाति सार्द्धं ततः पाति करोति नियतं हितं । हंति दुःखं सुखं दत्ते यः सबंधुर्न
पोषितः ॥५७॥ परिग्रहमहाग्राहसंग्रस्तेनार्तचेतसा । न दृष्टा यमशार्दूलचपेटा जीवनाशिनी ॥५८॥ पातयित्वा म
हाघोरे मां श्वभ्रेऽचिंत्यवेदने । क्व गतास्तेऽधुना पापा मद्वित्तफलभोजिनः ॥५९॥ इत्यजस्रं सुदुःखार्त्ता विलापमुखरा
ननाः । शोचंतः पापकर्माणि वसंति नरकालये ॥६०॥ यावंति संति लोमानि शरीरे देहधारिणः । तावंतो नरके कल
वसंति पिशिताशनाः ॥६१॥ इति चिंतानलेनोच्चैर्दह्यमानस्य तेन तदा । धावंति शरशूलासिकराः क्रोधाग्निदीपिताः ॥६२॥

७ नारकाः

१ उदीरयित्वा = पूर्ववैरं

ज्ञानार्णव॥ ॥१८॥

२ मुशिषु = गात यति

वैरं पराभवं पापं स्मारयित्वा पुरातनं॥ निर्भर्त्स्य कटुकालापैः पीडयंत्यतिनिर्दयं॥८३॥ उत्पाटयंति ने
त्रं अस्थिसंचयं दारयंत्युदरं क्रुद्धाः स्फोटयंत्यंत्रमालिकां॥८४॥ निःपीडयंति यंत्रेषु दलंति विषमोपले॥ प्राल्म
निघर्षंति कुंभीषु क्वाथयंति च॥८५॥ असह्यदुःखसंतानदानदक्षाः कलिप्रियाः॥ तीक्ष्णदंष्ट्राकरालास्याभि
न्नमसप्रभाः॥८६॥ क्षुद्रा भल्लेप्ययोद्धताः पापारौद्रध्यानैकभाविताः॥ भवंति क्षेत्रदोषेण सर्वे ते नारकाः खलाः॥८७॥
क्रियिकशरीरत्वाद्विक्रियंते यदृच्छया॥ यंत्राग्निश्वापदाकारैस्ते हंतुं चित्रैर्वधैः परान्॥८८॥ न तत्र बांधवः स्वामी
मृत्यो गना गजाः॥ अनंतयातनासारे नरकेत्यंतभीषणे॥८९॥ तत्र ताम्रमयाग्रध्रा लोहतुंडाश्च वायसाः॥
वं मर्माणि चंचुभिर्नखरैः खरैः॥९०॥ क्रमयः पूतिकुंडेषु वज्रसूचीसमाननाः॥ नित्वा चर्मास्थिमांसानि पिबंत्यासृ ॥१८॥

जतुविकारैः

लोहितं॥११॥बलाद्विदार्य संदंशैर्वदनं क्षिप्यते क्षणात्॥विलीनं प्रज्वलं ताम्रं यैः पीतं मद्यमुद्धतैः॥१२॥परमांसा
नि यैः पापैर्भक्षितान्यत्र निर्दयैः॥मूलपक्वानि मांसानि तेषां खादंति नारकाः॥१३॥यैः प्राक्परकलत्राणि सेवि
तान्यात्मवंचकैः॥योज्यंते प्रज्वलंतीभिः स्त्रीभिस्ते ताम्रजन्मभिः॥१४॥न सौख्यं चक्षुरुन्मेषमात्रमप्युपलभ्यते
नरके नारकैर्दीनैर्हन्यमानैः परस्परं॥१५॥किमत्र बहुनोक्तेन जन्मकोटिशतैरपि॥केनापि शक्यते वक्तुं न दुःखं न
रकोद्भवं॥१६॥विस्मृतं यदि केनापि कारणेन क्षणांतरं॥स्मारयंति तदाभ्येत्य पूर्ववैरं सुराधमाः॥१७॥बुभुक्षा जाय ५आग
ते त्यर्थं नरके तत्र देहिनां॥यां न शामयितुं शक्तः पुद्गलप्रचयोऽखिलः॥१८॥तृष्णा भवति या तेषु वाडवाग्निरिवोल्व ६उत्कट
णा॥न सा प्रशाम्यति निःशेषैः पीतैरप्यंबुराशिभिः॥१९॥बिंदुमात्रं न तैर्वारि प्राप्यते पातुमातुरैः॥तिलमात्रोऽपि नाहा

तृप्तयितु

अस्मितुं लभ्यते हि तैः॥६०॥ तिलादप्यतिसूक्ष्माणि कृतखंडानि निर्दयैः। वपुर्मिलति वेगेन न पुनस्तेषां वि
शातं॥६१॥ यातनारुक्कुपारीणां युर्लेपूयादुःखभयादिकं। वर्द्धमानं विनिश्चेयमघोघः श्वभ्रभूमिषु॥६२॥ मध्यभाग
स्ततो मध्ये आस्ते सौ झल्लरीनिभः। यत्र द्वीपसमुद्राणां व्यवस्था वलयाकृतिः॥६३॥ जंबूद्वीपादयो द्वीपा लवणोदा
दयोर्णवाः। स्वयंभुरमणांतास्ते प्रत्येकं द्वीपसागराः॥६४॥ द्विगुणद्विगुणाभोगाः प्रावृत्यान्योन्यमास्थिताः।
भनामानो वलयाकारधारिणः॥६५॥ मानुषोत्तरशैलेन्द्रमध्यस्थमतिसुंदरं। नरक्षेत्रं सरिच्छैलसुराचलवि
तं॥६६॥ तत्रार्यम्लेच्छखंडानि भूरिभेदानि तेषु भूमी। आर्यम्लेच्छा नराः संति तत्क्षेत्रजनितैर्गुणैः॥६७॥
नुष्ठोपेतं क्वचिद्व्यंतरसंभृतं। क्वचिद्भोगधराकीर्णं नरक्षेत्रं निरंतरं॥६८॥ ततो नभसि तिष्ठंति विमानानि दिवौ

नरक्षेत्रेषु
हिमवतादि
देवानां

१भेदानी                                                                 स्वर्गा

कर्मा॥ चरस्थिरविकल्पानि ज्योतिष्काणां यथाक्रमं॥८९॥ तदूर्ध्वं संति देवेशकल्पाः सौधर्मपूर्वकाः॥ ते षोडश
च्युतास्वर्गपर्यंतान भसि स्थिताः॥९०॥ तत्पर्युपरि देवेशनिवासयुगलं क्रमात्॥ अच्युतांते ततोप्यूर्ध्वमेकैकं

रात्रदिन भेद                                                  प्रकाश

त्रिदशास्पदं॥९१॥ निशादिनविभागोयं न यत्र त्रिदशास्पदे॥ रत्नालोकः स्फुरत्युच्चैः सततं नेत्रसौख्यदः॥९२॥

कालैः

वर्षातपतुषारादिसमयैः परिवर्जितः॥ सुखदः सर्वदा सौम्यस्तत्र कालः प्रवर्तते॥९३॥ उत्पातभयसंतापभंगवै

भयदा                                                                                       बहु

रादिविदूराः॥ न हि स्वप्नेपि दृश्यंते क्रुद्धसत्वाश्च दुर्जनाः॥९४॥ तद्भूम्या॥ चंद्रकांतशिलानद्धाः प्रवालदलदंतु स्वचि

दीप्ताना

राः॥ वज्रेंद्रनीलनिर्माणा विचित्रास्तत्र भूमयः॥९५॥ माणिक्यरोचिषां चक्रैः कर्बुरीकृतदिङ्मुखाः॥ वाप्यः स
र्णांबुजछन्ना रत्नसोपानराजिताः॥९६॥ सरांस्यमलवारीणि हंसकारंडमंडलैः॥ वाचालैरुद्धतीर्थानि दिव्य

७समूहे                                    ७तटानि

चिंतामणिरत्न

नारीजनेन च ॥८९॥ ॥ वः कामदुघाः सर्वाः कल्पवृक्षाश्च पादपाः ॥ चिंतारत्नानि रत्नानि स्वर्गलोके स्वभावतः

इंद्राः

॥९०॥ ध्वजचामरछत्राढ्यैर्विमानैर्वनितासखाः ॥ संचरंति सुरासारैः सेव्यमानाः सुरेश्वराः ॥९१॥ यक्षकिन्न

आलिंगिताभिः पुष्पलतापिहितोद्देशेषु

रीभिर्मंदारवनवीथिषु ॥ कांताश्लिष्टाभिः सानंदं गीयंते त्रिदशेश्वराः ॥९२॥ क्रीडागिरिनिकुंजेषु पुष्पश

येषु च ॥ रमंते त्रिदशा यत्र वरस्त्रीवृंदवेष्टिताः ॥९३॥ मंदारचंपकाशोकमालतीरेणुरंजिताः ॥ भ्रमंति यत्र

सुगंधपवन मंदे मंदे

मंदगंधवाहाः शनैः शनैः ॥९४॥ लीलावनविहारैश्च पुष्पावचयकौतुकैः ॥ जलक्रीडादिविज्ञानैर्विलासा

मृदंगा ताडिता

स्तत्र योषितां ॥९५॥ वीणामादाय रत्यंते कलं गायंति योषितः ॥ ध्वनंति मुरजा धारं दिविदेवांगनाहताः ॥९६॥

किलाः कल्पवृक्षेषु चैत्यागारेषु योषितः ॥ विबोधयंति देवेशान् ललितैर्गीतनिस्वनैः ॥९७॥ नित्योत्सवयुतं ॥११८॥

संबोधयंति इंद्रान्

२वाप्य. २वनमध्ये

सर्वाभ्युदयमंदिरं सुखसंपत्गुणाधारकैः स्वर्गमुपमीयते ॥६॥ पंचवर्णमहारत्ननिर्माणाः सप्तभूमिकाः ॥ प्रासा
कोट खाई शिखर
दाः पुष्करिण्यश्च जशाला वनांतरे ॥७॥ प्राकारपरिखावप्रगोपुरोत्तुंगतोरणैः ॥ चैत्यद्रुमसुरागारैर्नगर्यो रत्नरा
शोभा
जिताः ॥८॥ इंद्रायुधश्रियं धत्ते यत्र नित्यं नभस्तलं ॥ हर्म्याग्रलग्नमाणिक्यमयूखैः कर्बुरीकृतं ॥९॥ सप्तभिस्त्रि
इंद्राः हस्ती घोडे रथ पायदल, नैलध, गधर्व
दशानीकैर्विमानैरंगनान्वितैः ॥ कल्पद्रुमगिरींद्रेषु रमंते विबुधेश्वराः ॥१०॥ हस्त्यश्वरथपादातवृषान् गंधर्वन
नृत्यगना इंद्रस्य गणिकाप्रमुखान् जलवापिकाः
र्तकीम् ॥ सप्तानीकानि संत्यस्य प्रत्येकं च महत्तरान् ॥११॥ शृंगारसारसंपूर्णा लावण्यवनदीर्घिकाः ॥ पीनस्तन
चतुरः
भराक्रांताः पूर्णचंद्रनिभानना ॥१२॥ विनीताः कामरूपिण्यो महर्द्धिमहिमान्विताः ॥ हावभावविलासाढ्यानि
स्त्रिया
तंबभरमंथराः ॥१३॥ अनन्यशृंगारसर्वस्वमेकीकृत्य विनिर्मिताः ॥ स्वर्गवासिविलासिन्यः संति मूर्ता इव श्रियः ॥१४॥

आलिंगनादि

तत्रादित्रिविद्यासु शृंगाररसभूमिषु ॥ परिरंभादिसंभोगेषु स्त्रीणां दाक्ष्यं स्वभावतः ॥१५॥ सर्वावयवसं

काम देवसमानो · उच्चशरीरा

दिव्यलक्षणलक्षिताः ॥ अनंगप्रतिमा धीराः प्रसन्नाः प्रांशुविग्रहाः ॥१६॥ हारकुंडलकेयूरकिरीटांगदभू

प्रभूत्वउत्साहमंत्र ३

ताः मंदारमालतीगंधा अणिमादिगुणान्विताः ॥१७॥ प्रसन्नामलपूर्णेंदुकांताः कांतजनप्रियाः ॥ प्राक्तित्र

क्रीडा

णोपेताः पुष्पक्रीलावलंबिनः ॥१८॥ विज्ञानविनयोद्दामप्रीतिप्रसरसंभृताः ॥ निसर्गसुभगाः स्वर्गे भवंति

देवा.

दिवौकसः ॥१९॥ न तत्र दुःखितो दीनो वृद्धो रोगी गुणच्युतः ॥ विकलांगो गतश्रीकः स्वर्गलोके विलोक्यते ॥२०॥

सभापति — · देवाना निकटवर्ती परिवार · अतिचतुरस्त्री

भ्यसामानिकामात्यलोकपालप्रकीर्णकाः ॥ मित्राद्यं निमतस्तेषां पार्श्ववर्ती परिग्रहः ॥२१॥ बंदिगायकपौ

अतिमनोज्ञता

धीस्वांगरक्षापदातयः ॥ नटवेत्रिविलासिन्यः सुराणां सेवको जनः ॥२२॥ तत्रातिभव्यताधारे विमाने

॥११९॥

मले उपपादशिलागर्भे संभवंति स्वयं सुराः ॥२३॥ सर्वांगसुखदे रम्ये नित्योत्सवविराजिते ॥ गीतवादित्रली

लाढ्ये जयजीवस्वनाकुले ॥२४॥ दिव्याकृतिसुसंस्थानाः सप्तधातुविवर्जिताः ॥ कायकांतिपयःपूरैः प्रसा

२ व्यापितदिगंतराः

धितदिगंतराः ॥२५॥ नीरोगसुकुमारांगाः पुण्यलक्षणलक्षिताः ॥ अणिमादिगुणोपेताः ज्ञानविज्ञानपारगाः

१ चंद्रविंबाभा — वातपित्तश्लेष्मरहिताः

२६ मृगांकमूर्तिसंकाशाः क्षांतदोषाः शुभाशयाः ॥ अचिंत्यमहिमोपेता भयक्लेशार्तिवर्जिताः ॥२७॥ वर्द्धमा

नमहोत्साहा वज्रकाया महाबलाः ॥ अचिंत्यपुण्ययोगेन गृह्णंति वपुरूर्जितं ॥२८॥ सुखामृतमहांभोधेर्म ५ मध्ये इव

ध्यादिव विनिर्गताः ॥ भवंति त्रिदशाः सद्यः क्षणेन नवयौवनाः ॥२९॥ किं च पुष्पफलाक्रांतैः प्रवालदलदंतुरैः ॥ ६ खचि

७ देवानां

तेषां कोकिलवाचालैर्द्रुमैर्जन्म निगद्यते ॥३०॥ गीतवादित्रनिर्घोषैर्जयमंगलपाठकैः ॥ विबोध्यंते शुभैः शब्दैः

१ देव १ दिशाः १ तदा इति चिंतयति

सुखसुप्ता इव स्वयं॥३१॥ किं चिन्मम मपाकृत्य वीक्षते संज्ञानैः ज्ञानै॥ यावदाशा मुकुः स्निग्धैस्तदा कर्णितलोच
नैः॥३२॥ इंद्रजालमथ स्वप्नः किंतु माया भ्रमो नु किं॥ दृश्यमानमिदं चित्रं नायाति मम निश्चयं॥३३॥ इदं रम्या
सेव्यमिदं श्लाघ्यमिदं हितं॥ इदं प्रियमिदं भव्यमिदं चित्तप्रशांतिदं॥३४॥ एतत्कंदलितानंदमेतत्कल्याणमं
एतान्नित्योत्सवाकीर्णमेतदत्यंतसुंदरं॥३५॥ सर्वर्द्धिमहिमोपेतं महर्द्धिकसुरार्चितं॥ सप्तानीकान्वितं भातित्रि
प्रोंद्रसभाजिरं॥३६॥ किंच॥ मामेवोद्दिश्य सानंदः प्रवृत्तः किमयं जनः॥ पुण्यमूर्तिः प्रियः श्लाघ्यो विनीतो
तवत्सलः॥३७॥ अत्रैलोक्यनाथसंसेव्यः कोयं देशः सुखाकरः॥ अनंतमहिमाधारो विश्वलोकाभिनंदितः॥३८॥
पुरमतिस्फीतं वनोपवनराजितं॥ अभिभूय जगत्कृत्यावलातीव ध्वजांशुकैः॥३९॥ प्राकलय्यं तदाकूतंस

मनोज्ञ स्थान विकशितं अंगणं अभिक्रम्य विस्तीर्ण अतिक्रम्य नृत्यतीव ज्ञात्वा

४ सप्तसेनाम ६ वर्द्धितः ७ तस्य इंद्रस्याभिप्रायं सभापतय.

नम्रिभूतं अवसरयोग्य नम्रिभूतानां दृष्ट्या

वादिव्यचक्षुषः॥नतिपूर्वंप्रवर्त्ततेवक्तुंकालोचितंतदा॥४०॥प्रमादःक्रियतांदेवनतानांस्वेच्छयादृशा॥श्रूय
तांचवचोस्माकंपौर्वापर्यप्रकाशकं॥४१॥तद्यथा॥अद्यनाथवयंधन्याःसफलंचाद्यजीवितं॥अस्माकंयत्व

उत्पन्नेन त्वं

यास्वर्गःसंभवेनपवित्रितः॥४२॥प्रसीदजयजीवत्वंदेवपुण्यस्तवोद्भवः॥भवःप्रभुःसमग्रस्यस्वर्गलोकस्य
संप्रति॥४३॥सौधर्मोयंमहाकल्पःसर्वामरशतार्च्चितः॥नित्यानंदकल्याणवार्द्धिवर्द्धनचंद्रमाः॥४४॥कल्प
सौधर्म्मनामायमीशानप्रमुखाःसुराः॥इहोत्पन्नस्यशक्रस्यकुर्वंतिपरमोत्सवं॥४५॥पाठांतरं॥अत्रसंकल्पि
ताःकामानवंनित्यंचयौवनं॥अत्राविनश्वरीलक्ष्मीःसुखंचात्रनिरंतरं॥४६॥त्वद्विमानमिदंरम्यंकामगंकांत
दर्पनं॥पादांबुजनताचेयंतवत्रिदशमंडली॥४७॥एतेदिव्यांगनाकीर्णाश्चंद्रकांतमनोहराः॥प्रासादारत्न

इच्छित, वांछित
मनोज्ञ

प्रकाशं

पं श्चक्रीडानद्यश्चभूधराः॥४०॥सभाभवनमेतत्तेनताम्रराशार्चितं॥रत्नदीपकृतालोकंपुष्पप्रकरशोभितं॥
४१॥विनीतवेषधारिण्यःकामरूपावरस्त्रियः॥तवादेष्टुंप्रतीक्ष्यंतेलास्यलीलारसोत्सुकाः॥४२॥
मिदंचहरिविष्टरं॥एतच्चचामरव्रातमेतेविजयकेतवः॥४३॥एताअग्रमहादेव्योवरस्त्रीवृंदवंदिताः॥त्रणी
राधीशलावण्यैश्वर्यसंपदः॥४४॥शृंगारजलधेर्वेलाविलासोद्भासितभ्रुवः॥लीलालंकारसंपूर्णास्तवना
॥४५॥सर्वविषयवनिर्माणश्रीरसानोपमास्पदं॥यासांश्लाघ्यमलंस्निग्धपुष्पपाणुप्रजवंवपुः॥४६॥अयमै
णोनामदेवदंतीमहामना॥४७॥धत्तेगुणाष्टकैश्वर्याद्भूयंविश्वातिशायिनी॥४८॥इदंमत्तगजानीकमितोश्वी
वं॥एतेस्वर्णरथास्तुंगावल्गंत्येतेपदातयः॥४९॥एतानिसप्तसैन्यानिपालितान्यमरेश्वरैः॥नमंतितेपदद्वंद्वेवेत्ति

स्तिपूर्वकं॥५७॥अतस्तमग्रंस्वर्गसाम्राज्यंदिव्यभूत्योपलक्षितंपुण्यैस्तेसंमुखीभूतंगृहाणप्रणतामरं॥५८॥इतिवादिनिसु
स्निग्धेसचिवेत्यंतवत्सले॥अवधिज्ञानमासाद्यपौर्वापर्यंसबुध्यते॥५९॥अहोतपःपुराचीर्णंमयान्यजनदुश्चरं
दर्शनज्ञानचारित्रतप
वितीर्णंचाभयंदानंप्राणिनांजीवितार्थिनां॥६०॥आराधितंमनःशुद्ध्यादृग्बोधादिचतुष्टयंदेवश्चजगतांनाथः
सर्वज्ञःपरमेश्वरः॥६१॥निर्दग्धंविषयारण्यंस्मरवैरीनिपातितः॥कषायतरवश्छिन्नारागशत्रुर्नियंत्रितः॥६२॥आस
वो
र्वीस्तस्यप्रभावोयमहंयेनाद्यदुर्गतेःसमुद्धृत्यस्थापितःस्वर्गराज्येत्रिदशवंदिते॥६३॥अरागादिदहनज्वालानांप्रशाम्यंति
चारित्र
देहिनां॥सद्वृत्तवार्यसंसिक्ताःक्वचिज्जन्मशतैरपि॥६४॥तन्नात्रसुलभंमन्येतत्किंकुर्मोधुनावयं॥सुराणांस्वर्गलो
केस्मिन्दर्शनस्यैवयोग्यता॥६५॥अतस्तत्वार्थश्रद्धांमेश्रेयसीस्वार्थसिद्धये॥अर्हद्देवपदद्वंद्वेभक्तिश्चात्यंतनिश्च

१ जिनबिंबाना

ला:॥ दृष्ट्वा यान्यत्र प्रतिबिंबानि स्वर्गलोके जिनेशिनां॥ विमानचैत्यवृक्षेषु मेर्वाद्युपवनेषु च॥ ६७॥ तेषां पूर्वं
कृत्वा सद्द्रव्यैः स्वर्गसंभवैः॥ पुष्पचंदननैवेद्यैर्गंधदीपाक्षतोत्करैः॥ ६८॥ गीतवादित्रनिर्घोषैः स्तुतिस्तोत्रैर्मनो
हरैः॥ स्वर्गैश्वर्यं ग्रहीष्यामि ततस्त्रिदशवंदितं॥ ६९॥ इति सर्वज्ञदेवस्य कृत्वा पूजामहोत्सवं॥ स्वीकुर्वंति तदा
स्वर्गे
पट्टबंधादिलक्षणं॥ ७०॥ तस्मिन्मनोजवैर्यानैर्विचरंतो यदृच्छया॥ वनाद्रिसागरांतेषु दीव्यंति त्रिदिवौकसः ४ क्रिडयंति
मिश्रयानीत इंद्रादिदेवाः
७१॥ संकल्पानंतरोत्पन्नैर्दिव्यभोगैः समर्थितं॥ सेव्यमानाः सुरानीकैः श्रयंति स्वर्गिणः सुखं॥ ७२॥ महाप्र
पन्ने महाभूत्योपलक्षिते॥ कालं गतं न जानंति निमग्नाः सौख्यसागरे॥ ७३॥ क्वचिद्गीतैः क्वचिन्नृत्यैः क्वचिद्वाद्यै
समूह
र्मनोहरैः॥ क्वचिद्विलासिनीव्रातक्रीडाशृंगारदर्शनैः॥ ७४॥ मद्यतूर्यग्रहज्योतिर्भूषाभोजनविग्रहाः॥ स्रग्दी

माद्यक वस्तु वाद्य उद्योत आभूषण पुष्पमाला

१ देवांगना    १ कल्पवृक्षाः    १ स्वर्गवासिनः

स्त्रपात्रांगादशधाःकल्पपादपाः॥७५॥दशांगभोगजैःसौख्यैर्लोल्यमानाःक्वचित्क्वचित्॥वसंतिस्वर्गिणःस्वर्गे
कल्पनातीतवैभवाः॥७६॥यत्सुखं(देवानां)नाकिनांस्वर्गेतद्वक्तुंकेनपार्यते॥स्वभावजमनातंकं(निरोगं)सर्वाक्षप्रीणनक्षमं॥७७॥
अशेषविषयोद्भूतंदिव्यस्त्रीसंगसंभवं॥विनीतजनविज्ञानैर्ज्ञानाद्यैश्वर्यलांछितं॥७८॥सौधर्माद्यच्युतांतास्ते
कल्पाःषोडशवर्णिताः॥कल्पातीता(स्वर्गरहिताः)स्ततोज्ञेयादेवावैमानिकाःपरे॥७९॥अहमिंद्राभिधानास्तेप्रवीचारविवर्जि (स्थिरसुख)
ताः॥विवर्द्धितशुभध्यानाःशुक्ललेश्यावलंबिनः॥८०॥अनुत्तरविमानेषुश्रीजयंतादिपंचसु॥संभूय(उत्पद्य)स्वर्गिणश्च्यु(देवा)
त्वाव्रजंतिपदमव्ययं॥८१॥कल्पेषुचविमानेषुपरतःपरतोधिकाः॥सुखलेश्यायुर्विज्ञानप्रभावैःस्वर्गिणःस्वयं॥
८२॥ततोग्रेशाश्वतंधामजन्मजातंकविच्युतं॥ज्ञानिनांयदधिष्ठानंक्षीणनिःशेषकर्मणां॥८३॥चिदानंदगुणो

समस्तोयं महालोकः केव
तानिष्ठितार्था विबंधना॥ यत्र संति स्वयंबुध्यः सिद्धाः सिद्धेः स्वयंवराः॥८४॥ विलीनाशेषकर्माणं
नगोचरः केवलज्ञानगोचरः॥ तं व्यस्तं वा समस्तं वा स्वप्राप्त्या चिंतयेद्यतिः॥८५॥ इति निगदितमुच्चैर्लोकसंस्थानमित्थं नियत
मतिनिर्मलं॥ खंततः पुरुषाकारं स्वांगगर्भगतं स्मरेत्॥८६॥ समीपे दूरे केवलज्ञा
मनियतं वा ध्यायतः शुद्धबुद्धेः॥ भवति सततयोगाद्योगिनो निःप्रमादं नियतमनतिदूरे केवलज्ञा
८७॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे संस्थानविचयप्रकरणं॥ ॥ पिंडस्थं च प
स्थं रूपवर्जितं॥ चतुर्द्धा ध्यानमाम्नातं भव्यराजीवभास्करैः॥१॥ पिंडस्थे पंच विज्ञेया
र्णिता॥ संयमी यास्वसंमूढो जन्मपाशान्निकृंतति॥२॥ पार्थिवी स्यात्तथाग्नेयी श्वसना ख्याथ वारुणी॥ तत्व

१ सिद्धत्वे
१ ज्ञानपिंडात्मका
समदीदं
समीपे
२ आमोन =
अमर्याद
कथित
पवनाख्या
७ अथधारणा
७ छेदयति
७ धारणासु = दक्ष

१ धारणाः

पवतीचेति विज्ञेयास्तायथाक्रमं ॥३॥ तद्यथा ॥ तिर्यग्लोकसमं योगी स्मरति क्षीरसागरं ॥ निःशब्दं शांतकल्लोलं

क्षिरसागरस्य = निपान्नं अमर्यादभूत कमल

मोक्तिकहार = हारनीहारसंनिभं ॥४॥ तस्य मध्ये सुनिर्माणं सहस्रदलमंबुजं ॥ स्मरत्यमितभादीप्तं द्रुतहेमसमप्रभं ॥५॥ अब्ज

रागसमुद्भूतकेसरालीविराजितं ॥ जंबूद्वीपप्रमाणं च चित्तभ्रमररंजकं ॥६॥ स्वर्णाचलमयीं दिव्यं तत्र स्मरति क २ कमले

पीतकृत कर्णिकायां

र्णिकां ॥ स्फुरत्पिंगप्रभाजालपिंगितदिगंतरां ॥७॥ शरच्चंद्रनिभं तस्यामुन्नतं हरिविष्टरं ॥ तत्रात्मानं सुखा

सीनं प्रशांतमिति चिंतयेत् ॥८॥ रागद्वेषादिनिःशेषकलंकक्षपणक्षमं ॥ उद्युक्तं च भवोद्भूतकर्मसंतानसात ५ छेदने:

६ योगी = ने ॥९॥ पार्थिवी ॥ ततोसौ निश्चलाभ्यासात्कमलं नाभिमंडले ॥ स्मरत्यतिमनोहारि षोडशोन्नतपत्रकं ॥१०॥ प्रति

७ स्थित पत्रं समासीनं स्वरमालाविराजितं ॥ कर्णिकायां महामंत्रं विस्फुरंतं विचिंतयेत् ॥११॥ रेफरुद्धं कलाबिंदुलांछि

८ चतुर्दशस्वरसंयुक्तं =

१ निर्गच्छंति

१ दिशा

तंस्मून्यमक्षरं॥लसद्विंदुच्छटाकोटिकांतिव्याप्तहरिन्मुखं॥१२॥अर्हं॥तस्यरेफाद्विनिर्यांतीं शनैर्धूमशिखां
त॥स्फुलिंगसंततिंपश्चाज्ज्वालालींतदनंतरं॥१३॥ततोज्वालाकलापेनवर्द्धमानेनसंततं॥दहत्यविरतंधीर
कमल
पुंडरीकंहृदिस्थितं॥१४॥तदष्टकर्मनिर्माणमष्टपत्रमधोमुखं॥दहत्येवमहामंत्रध्यानोत्थप्रबलानलः॥
१५॥ततोबहिःशरीरस्यत्रिकोणंवह्निमंडलं॥स्मरेज्ज्वालाकलापेनज्वलंतमिववाडवं॥१६॥वह्निबीजसमा ५ मंडल
मंडल
पर्यंतेस्वस्तिकांकितं॥ऊर्द्ध्ववायुपुरोद्भूतंनिर्द्धूमंकांचनप्रभं॥१७॥अंतर्दहतिमंत्रार्चिर्बहिर्वह्निपुरंपरं॥ध
द्धगितिविस्फुर्यत्ज्वालाप्रचयभासुरं॥१८॥भस्मभावमसौनीत्वाशरीरंतच्चपंकजं॥दाह्याभावात्स्वयं ॥१२
तिवह्निःशनैःशनैः॥१९॥आग्नेयी॥विमानपथमापूर्यसंचरंतंसमीरणं॥स्मरत्यविरतंयोगीमहावेगंमहाब

७ आकाशं

२ योग

२ जगत्गृहे  १ मेरु  १ मेघसमूहं

चालयंतं सुरानीकं धुन्वंतं त्रिदशाचलं ॥ दारयंतं घनव्रातं क्षोभयंतं महार्णवं ॥२१॥ व्रजंतं भुवनाभोगे संचरंतं
(दिशा) (स्फेटयित्वा)
हरिन्मुखे ॥ विसर्पंतं जगन्नीडे निर्विशंतं धरातले ॥२२॥ उद्धूयेत्तद्रजः शीघ्रं तेन प्रबलवायुना ॥ ततः स्थिरीकृ
(मेघसमूह)
ताभ्यासः समीरं शांतिमानयेत् ॥२३॥ मारुती ॥ वारुण्यां स हि पुण्यात्मा घनव्रातचितं नभः ॥ इंद्रायुधतडि
(घनैः) (मेघ)
द्गर्जिच्चमत्काराकुलं स्मरेत् ॥२४॥ सुधांबुप्रभवैः सांद्रैर्बिंदुभिर्मौक्तिकोज्ज्वलैः ॥ वर्षंतं तं स्मरेद्धीरः स्थूलस्थूलै
५ अर्धमंडलं = ५ बीजाक्षरं = र्निरंतरैः ॥२५॥ ततोऽर्धेंदुसमं कांतं पुरं वरुणलांछनं ॥ ध्यायेत्सुधापयःपूरैः प्लावयंतं नभस्तलं ॥२६॥ तेनाचिं ५ अंबुना
त्यप्रभावेन दिव्यध्यानोत्थितांबुना ॥ प्रक्षालयति निःशेषं तद्रजः कायसंभवं ॥२७॥ वारुणी ॥ सप्तधातुवि
(दीप्ति)
निर्मुक्तं पूर्णचंद्रामलत्विषं ॥ सर्वज्ञकल्पमात्मानं ततः स्मरति शुद्धधीः ॥२८॥ मृगेंद्रविष्टरारूढं दिव्यातिश

७ सर्वज्ञसदृशं

॥ज्ञानार्णव॥ ॥१२५॥

यसंयुतं॥ कल्याणमहिमोपेतं देवदैत्योरगार्चितं॥२९॥ विलीनाशेषकर्म्माणं स्फुरंतमतिनिर्म्मलं॥ स्वं
:पुरुषाकारं स्वांगगर्भगतं स्मरेत्॥३०॥ रूपवती॥ इत्यविरतं स योगी पिंडस्थे जातनिश्चलाभ्यासः
वसुखमनन्यसाध्यं प्राप्नोत्यचिरेण कालेन॥३१॥ इत्थं यत्रानवद्यं स्मरति नवसुधासांद्रचंद्रांशुगौरं श्री
ज्ञकल्पं कनकगिरितटे वीतविश्वप्रपंचं॥ आत्मानं निर्विकल्पं त्रिदशगुरुगणैरप्यचिंत्यप्रभावं तत्विं
ष्ट्यं प्रणीतं जिनसमयमहांभोधिपारं प्रयाते॥३२॥ विद्यामंडलयंत्रमंत्रकुहकक्रूराभिचारक्रियाः सिं
शीविषदैत्यदंतिसरभा यांत्येव निःसारतां॥ शाकिन्यो ग्रहराक्षसप्रभृतयो मुंचंत्यसद्वासनामेतं ध्यानध
संनिधिवशाज्ज्ञानोर्यस्याकौशिका॥३३॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे

॥१२

पवित्राणि क्रियते द्रव्यार्थिकपर्यायार्थिक

पिंडस्थध्यानप्रकरणं ॥ छ ॥ पदान्यालंब्य पुण्यानि योगिभिर्यद्विधीयते ॥ तत्पदस्थं मतं ध्यानं विचित्रनयपा
रगैः ॥ १ ॥ तद्यथा ॥ ध्यायेदनादिसिद्धांतप्रसिद्धां वर्णमातृकां ॥ निःशेषशब्दविन्यासजन्मभूमिं जगन्नुतां ॥ २ ॥ द्वि
गुणाष्टदलांभोजे नाभिमंडलवर्तिनि ॥ भ्रमंती चिंतयेद्ध्यानी प्रतिपत्रं स्वरावली ॥ ३ ॥ चतुर्विंशतिपत्राढ्यं हृदि
कंजं सकर्णिकं ॥ तत्र वर्णानिमान् ध्यायेत्संयमी पंचविंशतिं ॥ ४ ॥ ततो वदनराजीवे पत्राष्टकविभूषिते ॥ परं व
र्णाष्टकं ध्यायेत्संचरंतं प्रदक्षिणं ॥ ५ ॥ इत्यजस्रं स्मरन् योगी प्रसिद्धां वर्णमातृकां ॥ श्रुतज्ञानांबुधेः पारं प्रयाति
विगतभ्रमः ॥ ६ ॥ उक्तं च ॥ कमलदलोदरमध्ये ध्यायन्वर्णाननादिसंसिद्धान् ॥ नष्टादिविषये बोधं ध्यातासंपद्य
ते कालात् ॥ ७ ॥ उक्तं च ॥ जाप्याज्जयेत्क्षयमरोचकमग्निमांद्यं कुष्टोदरामकसनश्वसनादिरोगान् ॥ प्राप्नोति चा

(२ कमलं — रचना — कमले — अष्टांगनिमित्तज्ञान — ६)

अट्टशवाच्यागरिष्टां = महत्पुरुषेभ्य·



तिमेवाम्महतीं महद्भ्यः पूजां परत्र च गतिं पुरुषोत्तमां प्रां॥९॥ अथ मंत्रपदाधीशं सर्वतत्वैकनायकं॥ आदि
मध्यांतभेदेन स्वरव्यंजनसंभवं॥१०॥ अर्हः॥ अर्हां ऊर्द्धाधोरेफसंरुद्धं सकलं बिंदुलांछितं॥ अनाहतयुतं तत्
त्वं मंत्रराजं प्रचक्षते (कथ्यते)॥११॥ ॐ॥१२॥ देवासुरनतं भीमं दुर्बोधध्वांतभास्करं॥ ध्यायेन्मूर्द्धस्थ (मस्तक) चंद्रांशुकलापाक्रां
तदिङ्मुखं॥१३॥ अपिच॥ कनककमलगर्भे कर्णिकायां निषिणं (उपविष्ट) विगतमलकलंकं सांद्रचंद्रांशुगौरं॥ गगन
मनुसरंतं संचरंतं हरित्सु (दिक्षु) स्मर जिनपतिकल्पं मंत्रराजं यतीन्द्र॥१४॥ अत्र मतानि॥ बुद्धः केश्चिदजः केश्चिद्धरिः
श्चिन्महेश्वरः॥ शिवः सर्वस्तथेशानः सोयं वर्णः प्रकीर्तितः॥१५॥ मंत्रमूर्तिं समादाय देवदेवः स्वयं जिनः
सर्वज्ञः सर्वगः शांतः सोयं साक्षाद्व्यवस्थितः॥१६॥ ज्ञानबीजं जगद्वंद्यं जन्मज्वलन (मेघ) चांमु चां पवित्रं मतिमान्

एकबार २अंकुर=नुद्यते मोच्चाय सज्जीकृत

ध्यायेदिदं मंत्रं महेश्वरं ॥१६॥ सकृदुच्चरितं येन हृदये न स्थिरीकृतं ॥ तत्त्वं तेनापवर्गाय पाथेयं प्रगुणीकृतं ॥१७
यदैवेदं महातत्त्वं मुनेर्हृदि स्थितिं ॥ तदैव जन्मसंतानप्ररोहः प्रविशीर्यते ॥१८॥ स्फुरंतं भ्रूलतामध्ये वि
शंतं वदनांबुजे ॥ तालुरंध्रेण गच्छंतं स्रवंतममृतांबुभिः ॥१९॥ स्फुरंतं नेत्रपत्रेषु कुर्वंतमलिके स्थितिं ॥ ३ ललाटके
भ्रमंतं ज्योतिषां चक्रे स्पर्द्धमानं शितांशुना ॥२०॥ संचरंतं दिशामास्ये ४ चंद्रेण
ष्वलंतं नभस्तले ॥ छेदयंतं कलंकौघं स्फेटयंतं भवभ्रमं ॥२१॥ नयंतं परमं स्थानं योजयंतं शिवश्रियं ॥ इति
मंत्राधिपं धीरः कुंभकेन विचिंतयेत् ॥२२॥ अर्हं ॥ अनन्यशरणः साक्षात्तत्संलीनैकमानसः ॥ तथा स्मरत्य
सौ ध्यानी यथा स्वप्नेपि न स्खलेत् ॥२३॥ इति मत्वा स्थिरीभूतं सर्वावस्थासु सर्वथा ॥ नासाग्रे निश्चलं धत्ते यदि

वाग्भूलतांतरे॥२४॥ तत्र केश्चिच्चवर्णादिभेदैस्तत्वं प्रकल्पितं॥ मंत्रमंडलमुद्रादिसाधनैरिष्टसिद्धिदं॥२५॥ उक्तं च॥
कारादिहकारांतं रेफमध्यं सबिंदुकं॥ तदेव परमं तत्वं योजनानि मं तत्ववित्॥२६॥ सर्वावयवसंपूर्णं
विच्युतं॥ क्रमेण चिंतयेद्ध्यानी वर्णमात्रं शशिप्रभं॥२७॥ ह्रां॥ बिंदुहीनं कलाहीनं रेफद्वितयवर्जितं॥ अन
मापन्नमनुच्चार्यं च चिंतयेत्॥२८॥ अ॥ चंद्ररेखासमं सूक्ष्मं स्फुरंतं भानुभास्वरं॥ अनाहताभिधं देवं दिव्यरूपं
विचिंतयेत्॥२९॥ अस्मिन् स्थिरीकृताभ्यासाः संतः शांतिं समाश्रिताः॥ अनेन दिव्यपोतेन तीर्त्वा जन्मोग्र
३०॥ तदेव च पुनः सूक्ष्मं क्रमाद्बालाग्रसन्निभं॥ ध्यायेदेकाग्रतां प्राप्य कर्तुं चेतः सुनिश्चलं॥३१॥ ततो पिंगलितां
घविषयीकृतमानसः॥ अध्यक्षमीक्षते साक्षाज्जगज्ज्योतिर्मयं क्षणे॥३२॥ सिध्यंति सिद्धयः सर्वा अणिमा

रेफ कलाबिंदुरहितं

मंत्रं

प्रलक्षं

॥१२७॥

परित्यज्य=

श्रयः॥३३॥सेवां कुर्वंति दैत्याद्या आज्ञैश्वर्यं च जायते॥ क्रमात्प्रच्याव्य लक्ष्येभ्यस्ततोऽलक्ष्ये स्थिरं मनः॥ दधतोऽस्य स्फु
रत्यंतर्ज्योतिरत्यक्षमक्षयं॥३४॥इति लक्षानुसारेणालक्ष्यभावः प्रकीर्तितः॥ तस्मिन्स्थितस्य मन्येऽहं मुनेः सिद्धं
समीहितं॥३५॥एतत्तत्त्वं शिवाख्यं वा समालंब्य मनीषिणः॥ उत्तीर्णा जन्मकांतारमनंतक्लेशसंकुलं॥३६॥मंत्रराजं

मेघं ॐकार

अनाहतं च॥ क्ष्वीं॥ स्मरदुःखानलज्वालाप्रशांतेर्नवनीरदं॥ प्रणवं वाङ्मयं ज्ञानप्रदीपं पुण्यशासनं॥३७॥यस्माच्छ

ॐकारः

…र्थशब्द=पंचपरमेष्ठी= ब्दात्मकं ज्योतिः प्रसृतमतिनिर्मलं॥ वाच्यवाचकसंबंधस्तेनैव परमेष्ठिनः॥३८॥हृत्कंजकर्णिकासीनं स्वरव्यंजन १ हृदयक

विस्तीर्णं दुराधर्षं गलत् संक्रमित संश्लिष्ट

वेष्टितं॥ स्फीतमत्यंतदुर्द्धर्षं देवदैत्येंद्रपूजितं॥३९॥प्रक्षरन्मूर्द्धसंक्रांतचंद्रलेखामृतप्लुतं॥ महाप्रभावसंपन्नं क

वन

र्मकक्षहुताशनं॥४०॥महातत्त्वं महाबीजं महामंत्रं महत्पदं॥ शरच्चंद्रनिभं ध्यानी कुंभकेन विचिंतयेत्॥४१॥सांद्र

१ सुवर्णसमं =

सिंदूरवर्णाभं यदि वा विद्रुमप्रभं॥ चिंत्यमानं जगत्सर्वं क्षोभयत्यतिसंगतं॥४२॥ जांबूनदनिभं स्तंभे विद्वेषे कज्ज
लत्विषं॥ ध्येयं वश्यादिके रक्तं चंद्राभं कर्मशातने॥४३॥ अर्थ॥ पंचगुरुनमस्कारलक्षणं मंत्रमूर्जितं॥ चिंतयेच्चज
गज्जंतुपवित्रीकरणक्षमं॥४४॥ स्फुरद्विमलचंद्राभे दलाष्टकविभूषिते॥ कंजे तत्कर्णिकासीनं मंत्रं सप्ताक्षरं
४५॥ दिग्दलेषु ततोन्येषु विदिक्पत्रेष्वनुक्रमात्॥ सिद्धादिकं चतुष्कं च दृष्टिबोधादिकं तथा॥४६॥ ॐ णमो अ
पांणमो सिद्धाणं णमो आयरियाणं॥ णमो उवज्झायाणं णमो लोए सव्वसाहूणं॥ अपराजितमंत्रोयं॥ दर्शनज्ञा
चारित्रतपांसि॥ श्रियमात्यंतिकीं प्राप्ता योगिनो ये त्र केचन॥ अमुमेव महामंत्रं ते समाराध्य केवलं॥४७॥ प्रभा
अज्ञानी
स्यं निःशेषं योगिनामप्यगोचरं॥ अनभिज्ञो जनो ब्रूते यः स मन्ये निलार्दित॥४८॥ अनेनैव विशुध्यंति जंतवः

७ वातपीडितः =

चतुर्थउपवासस्य फलं=

मंत्रः

पंकिताः॥अनेनैवं विमुच्यंते भवक्लेशान्मनीषिणः॥४०॥अमावेवं जगत्यस्मिन् भवव्यसनबांधवः॥अमुं विहा
यं सत्वानां नान्यः कश्चित्कृपाकरः॥४१॥पतद्व्यसनपाताले भ्रमत्संसारसागरे॥अनेनैवं जगत्सर्वमुद्धृत्य विधृतं शि
वे॥४२॥कृत्वा पापसहस्राणि हत्वा जंतुशतानि च॥अमुं मंत्रं समाराध्य तिर्यंचोपि दिवंगताः॥४३॥शतमष्टोत्तरं चास्य
विशुध्या चिंतयेन्मुनिः॥भुंजानोपि चतुर्थस्य प्राप्नोत्यविकलं फलं॥४४॥स्मर मंत्रपदोद्भूतां महाविद्यां जगन्नुतां॥गु
रुपंचकनामोत्थां षोडशाक्षरराजितां॥४५॥अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यो नमः॥षोडशाक्षरां विद्यां॥अ
स्याः शतद्वयं ध्यानी जपन्नेकाग्रमानसः॥अनिच्छन्नप्यवाप्नोति चतुर्थतपसः फलं॥४६॥विद्यां षड्वर्णसंभूतामं
जय्यां पुण्यशालिनीं॥जपन् प्रागुक्तमभ्येति फलं ध्यानी शतत्रयं॥४७॥अरहंतसिद्धा॥चतुर्वर्णमयं मंत्रं चतुर्वर्गफ

एकाक्षर — कमले — चतुर्दशस्वरां —

पिंक्रमात्॥ एकपत्रैःप्रतिपत्रंतुतस्मिन्नेवनिवेशयेत्॥७२॥स्वर्णगौरींस्वरोद्भूतांकेशरालींततःस्मरेत्॥कर्णिकांच
सुधास्यंदबिंदुव्रजविभूषितां॥७३॥प्रोद्यत्संपूर्णचंद्राभंचंद्रबिंबाच्छनैःशनैः॥समागच्छत्सुधाबीजंमायावर्णं
चिंतयेत्॥७४॥विस्फुरंतमतिस्फीतंप्रभामंडलमध्यगं॥संचरंतंमुखांभोजेतिष्ठंतंकर्णिकोपरि॥७५॥क्ष्वीं॥भ्रमंतंप्र
तिपत्रेषुचरंतंवियतिक्षणे॥छेदयंतंमनोध्वांतंस्रवंतममृतांबुभिः॥७६॥व्रजंतंतालुरंध्रेणस्फुरंतंभ्रूलतांतरे
तिर्मयमिवाचिंत्यप्रभावंभावयेन्मुनिः॥७७॥वाक्पथातीतमाहात्म्यंदेवदैत्योरगार्चितं॥विद्यार्णवमहापोतंवि
तत्वप्रदीपकं॥७८॥अमुमेवमहामंत्रंभावयन्नत्रसंप्रायः॥अविद्याव्यालसंभूतंविषवेगंनिरस्यति॥७९॥इतिध्या
यन्नसौध्यानीतत्संलीनैकमानसः॥वाङ्मनोमलमुत्सृज्यश्रुतांभोधिंविगाहते॥८०॥ततोनिरंतराभ्यासान्मासैः

२धर्मानुरागः = वैराग्य

वर्षपर्यंतं =

षड्भिः स्थिराशयः॥ मुखरंध्राद्विनिर्यांतीं धूमवर्त्तिं प्रपश्यति॥ ६१॥ ततः संवत्सरं यावत्तथैवाभ्यासतो यदि॥ प्रपश्य
ति महाज्वालां निःसरंतीं मुखोदरात्॥ ६२॥ ततोतिजातसंवेगो निर्वेदालंबितो वशी॥ ध्यायन्पश्यत्यविश्रांतं स
र्वज्ञमुखपंकजं॥ ६३॥ अथाप्रतिहतानंदप्रीणितात्मा जितश्रमः॥ श्रीमत्सर्वज्ञदेवं स प्रत्यक्षमिव वीक्षते॥ ६४॥ स
र्वातिशयसंपूर्णदिव्यरूपोपलक्षितं॥ कल्याणमहिमोपेतं सर्वसत्वाभयप्रदं॥ ६५॥ प्रभावलयमध्यस्थं भव्यरा
जीवरंजकं॥ ज्ञानलीलाधरं धीरं देवदेवं स्वयंभुवं॥ ६६॥ ततो विधूततंद्रोसौ तस्मिन् (सर्वज्ञे) संजातनिश्चयः॥ भवभ्रममप
कृत्य लोकाग्रमधिरोहति॥ ६७॥ स्मर सकलसिद्धविद्यां प्रधानभूतां प्रसन्नगंभीरां॥ विधु (चंद्रः) बिंबनिर्गतामिव क्षर
त्सुधार्द्रां महाविद्यां॥ ६८॥ अविचलमनसा ध्यायन् ललाटदेशस्थितामिमां देवीं॥ प्राप्नोति मुनिरजस्रं समस्त

समूहं= ललाट=

ल्याणनिकुरंबं ॥८९॥ अमृतजलधिगर्भान्निःसरंतीं सुदीप्तां मैलिकतलनिषण्णां चंद्रलेखां स्मरत्वं ॥ अमृत
पविकीर्णं प्लावयंतीं सुधाभिः परमपदधरित्र्यां धारयंतीं प्रभावं ॥९०॥ एतां विचिंतयन्नेवं स्तिमितेनांतरात्म
निर्विग्नो
ना ॥ जन्मज्वरजयं कृत्वा याति योगी शिवास्पदं ॥९१॥ यदि साक्षात्समुद्विग्नो जन्मदावोग्रसंक्रमात् ॥ तदाम्म
दिमंत्रस्य प्राचीनं वर्णसप्तकं ॥९२॥ णमो अरहंताणं ॥ यदत्र प्रणवं शून्यमनाहतमिति त्रयं ॥ एतदेव विदुः प्रा
ज्ञास्त्रैलोक्यतिलकोपमं ॥९३॥ नासाग्रदेशसंलीनं कुर्वन्नत्यंतनिश्चलं ॥ ध्याता ज्ञानमवाप्नोति प्राप्य पूर्वं गुणा
ज्ञान
कं ॥९४॥ ॐ ह्रीं ॥ उक्तं च ॥ पोषे ंडुः कुंदधवलां ध्याता देवत्रयो विधानेन ॥ जनयंति सर्वविषयं बोधं कालेनतं ६ सर्वपदार्थगोचर
ह्रीं
नातं ॥९५॥ प्रणवयुगलस्य युग्मं पार्श्वे मायायुगं विचिंतयति ॥ मूर्द्धस्थं हंसपदं कृत्वा व्यस्तं चितं ज्ञात्मा ॥९६॥

ॐ ह्रीं ॐ सह ७ निरालस्य=

ॐॐ क्रौं ॥ ततो ध्यायेन्महाबीजं स्त्रीकारं छिन्नमस्तकं ॥ अनाहतयुतं दिव्यं विस्फुरंतं मुखोदरे ॥ ६ ॥ स्त्री ॥ श्रीवीर
वदनोद्भूतां विद्यां चाचिंत्यविक्रमां ॥ कल्पवल्लीमिवाचिंत्यफलसंपादनक्षमां ॥ ८ ॥ विद्या चा ॐ जो ग्गो मग्गो तच्चे
भूये भव्वे भविस्से अरके परके जिण पार्श्वे स्वाहा ॥ ९ ॥ ॐ क्रौं स्व ऽर्हन्नमो ऽर्हतां क्रौं नमः ॥ १० ॥ विद्यां जपति य
दैमां निरंतरं शांत विस्पंदः ॥ अणिमादिगुणान् लब्ध्वा ध्यानी शास्त्रार्णवं तरति ॥ ११ ॥ त्रिकालविषयं साक्षाज्ज्ञानमं
स्योपजायते ॥ विश्वतत्त्वप्रबोधश्च संततोभ्यासयोगतः ॥ १२ ॥ शाम्यंति जंतवः क्रूरास्तथान्ये व्यंतरादयः ॥ ध्यान
विध्वंसकर्त्तारो येनंतद्वंद्वप्रपंच्यते ॥ १३ ॥ दिग्दलाष्टकसंपूर्णराजीवे सुप्रतिष्ठितं ॥ स्मरत्यात्मानमत्यंतस्फुरच्छ्रीष्म
र्कभास्वरं ॥ १४ ॥ प्रणवाद्यस्य मंत्रस्य पूर्वादिषु प्रदक्षिणं ॥ विचिंतयति पत्रेषु वर्णैकैकमनुक्रमात् ॥ १५ ॥ ॐ णमो अ

संकल्प विकल्प

नमो

५ मुने

वेस्तार्थं मया किं

स्वीकृत्य = दले =

रहंताणं।।अधिकृत्य छदं पूर्वं सर्वशास्त्रं मुखः परं।।स्मरत्यष्टाक्षरं मंत्रं सहस्रैकं शताधिकं।।६९।।प्रत्यहं प्रतिप
पुमेहेंद्र शाद्यं नुक्रमात्।।अष्टरात्रं जपेद्योगी प्रसन्नामलमानसः।।तस्याचिंत्यप्रभावेन क्रूराशाय कलंकि
तां।।त्यजंति जंतवो दर्प्पं सिंहत्रस्तां इव द्विपाः।।७०।।अष्टरात्रे व्यतिक्रांते कमलस्यास्य वर्तिनः।।निरूपयति प ३स्थापयति =
त्रेषु वर्णानेतानंनुक्रमात्।।७१।।आलंब्य प्रक्रियामेतां पूर्वं विघ्नौघशांतये।।पश्चात्सप्ताक्षरं मंत्रं ध्यायेत्प्र ४पूर्वोक्तान् =
णववर्जितं।।७२।।मंत्रः प्रणवपूर्वोयं निःशेषाभीष्टसिद्धिदः।।ऐहिकानेक धर्म्मार्थं मुत्पर्थं प्रणवच्युतः।।७३ पूर्वोक्तं =
इहलोकार्थं
णमोअरहंताणं।।स्मर मंत्र पदं चान्य ज्जन्म संघात घातकं।।रागाद्युग्रतमस्तोम प्रध्वंसरविमंडलं।।७४।।श्री
वृषभादि वर्द्धमानांतेभ्यो नमः।।मनः कृत्वा सुनिःकंपं तां विद्यां पापभक्षिणीं।।स्मर सत्वोपकाराय या ।।३७।।

४पूर्वोक्तान् =

२ निर्मलता =

ड्रैः प्रकीर्तिता ॥१४॥ ॐ अर्हन्मुखकमलवासिनि पापात्मक्षयंकरि श्रुतज्ञानज्वालासहस्रप्रज्वलिते सरस्वति
मत्पापं हन हन दह दह क्षां क्षीं क्षूं क्षौं क्षः क्षीरवरधवले अमृतसंभवे वं वं हूं हूं स्वाहा ॥१५॥ पापभक्षिणी ॥
चेतः प्रसत्तिमाधत्ते पापपंकः प्रलीयते ॥ आविर्भवति (प्रकटीभवति) विज्ञानं मुनेरस्याः प्रभावतः ॥१६॥ मुनिभिः संजयंत
द्यैर्विद्यावादात् (अगात्) समुद्धृतं ॥ मुक्तिमुक्तेः परं धाम सिद्धचक्राभिधं स्मर ॥१७॥ तस्य (सिद्धचक्रस्य) प्रयोजकं शास्त्रं तदाम्नायोप
देशतः ॥ ध्येयं मुनीश्वरैर्जन्ममहाव्यसनशांतये ॥१८॥ सिद्धचक्रं ॥ स्मर मंत्रपदाधीशं मुक्तिमार्गप्रदीपकं ॥
नाभिपंकजसंलीनमवर्णं विश्वतोमुखं (सर्वव्यापि) ॥१९॥ अ ॥ सिवर्णं मस्तकांभोजे साकारं मुखपंकजे ॥ आकारं कंठ
कंजस्थं स्मरोकारं (उ) हृदि स्थितं ॥२०॥ असिआउसा ॥ सर्वकल्याणबीजानि बीजान्यन्यान्यपि स्मरेत् ॥ यान्यार

ध्यं शिवं प्राप्ता योगिनः शीलसागराः॥२१॥ नमः सर्वसिद्धेभ्यः॥ श्रुतसिंधुसमुद्भूतमन्यद्वा पदमक्षरं॥ त
न्निध्येयं स्यात्पदस्थप्रसिद्धये॥२२॥ एवं समस्तवर्णेषु मंत्रविद्यापदेषु च॥ कार्यः क्रमेण विश्लेषो लक्ष्य ^२भिन्नलव=
सिद्धये॥२३॥ अन्यं द्वं द्वं श्रुतस्कंधबीजं निर्वेदकारणं॥ तत्तद्ध्यायन्नसौ ध्यानी नापवर्गपथि स्खलेत्॥२४॥ उक्तं
कथितजीवादिपदार्थविपर्ययाऽभावात्
^४जीवापदार्थसमूहं= च॥ ध्येयं स्याद्वीतरागस्य विश्ववर्त्यर्थसंचयं॥ तद्धर्मव्यत्ययाभावान्माध्यस्थ्यमधितिष्ठति॥२५॥ उक्तं च॥ वीत
गो भवेद्योगी यत्किंचिदपि चिंतयेत्॥ तदेव ध्यानमाम्नातमतोन्ये ग्रंथविस्तराः॥२६॥ वीतरागस्य विज्ञेया ध्यान
^६स्वभावविपरीतत सिद्धिर्ध्रुवं मुनेः॥ क्लेश एव तदर्थः स्याद्रागार्तस्येह देहिनः॥२७॥ निर्मथ्य श्रुतसिंधुमुन्नतधियः श्रीवीरचं
येतत्त्वान्येव समुद्धरंति मुनयो यत्नेन रत्नान्यतः॥ तान्येतानि हृदि स्फुरंति सुभगन्यासानि भव्यात्मनां ये वा

^५समुद्रात्= तत्वानि=

॥१३३॥

१आत्मानं=

समवशरणादिक=

त्यं निश्चं विमुक्तिललनासंभोगसंभावनं ॥२७॥ विलीनाशेषकर्माणं स्फुरंतमतिनिर्म्मलं । स्वं ततः पुरुषाकारं स्व

गगर्भगतं स्मरेत् ॥२८॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे पदस्थध्यानप्रकरणं ॥

॥छ॥ आर्हंत्यमहिमोपेतं सर्वज्ञं परमेश्वरं । ध्यायेद्देवेंद्रचंद्रार्कसभांतस्थं स्वयंभुवं ॥१॥ सर्व्वातिशयसंपूर्णं सर्व्वल

क्षणलक्षितं । सर्व्वभूतहितं देवं शीलशैलेंद्रशेखरं ॥२॥ सप्तधातुविनिर्मुक्तं मोक्षलक्ष्मीकटाक्षितं । अनंतम

मुनिभि सेवितं त्रैलोक्य

हिमाधारं सयोगीपरमेश्वरं ॥३॥ अचिंत्यचरितं चारुचारित्रैः समुपासितं । विचित्रनयनिर्न्नीतविश्वं विश्वैकबांधवं

मेघ

॥४॥ निरुद्धकरणग्रामं निषिद्धविषयद्विषं । ध्वस्तरागादिसंतानं भवज्वलनवार्मुचं ॥५॥ दिव्यरूपधरं धीरं विशुद्धज्ञा

वज्र पर्वतं

नलोचनं । अपि त्रिदशयोगींद्रैः कल्पनातीतवैभवं ॥६॥ स्याद्वादपविनिर्घातभिन्नान्यमतभूधरं । ज्ञानामृतपयः

पूरैः पवित्रितजगत्त्रयम् ॥७॥ अथवा सर्वा ॥ इत्यादिगणनातीतगुणरत्नमहार्णवं देवदेवं स्वयंबुद्धं स्मराद्यं जिन
रोगः ॥ अथवा ॥ जन्ममृत्युजराक्रांतं रागादि विषमूर्छितं सर्वसाधारणैर्दोषैरष्टादशभिरावृतं ॥९॥ अनेकव्य
संयमज्ञानविच्युतं संज्ञामात्रेण केचिच्च सर्वज्ञं प्रतिपेदिरे ॥१०॥ अन्यच्च ॥ इतरोऽपि नरः षड्भिः प्रमाणैर्वस्तुसंचयं ॥ प्र
दन्मतः कैश्चित् सर्वज्ञः सोऽपि नेष्यते ॥११॥ अतः सम्यक्त्वविज्ञेयः परित्यज्यान्यशासनं ॥ युक्त्यागमविभागेन ध्या
र्मनीषिभिः ॥१२॥ युक्त्या वृषभसेनाद्यैर्निर्धूय (निराकृत्य) साधुवल्गितं (चेष्टितं) यस्य (सर्वज्ञस्य) सिद्धिः स तां मध्ये लिखितां चंद्रमंडले ॥१३॥ तद्य
था ॥ अनेकवस्तुसंपूर्णं जगद्यस्य चराचरं स्फुरत्यविकलं बोधविशुद्धादर्शमंडले ॥१४॥ स्वभावजमसंदिग्धं निर्दोषं
सर्वदोदितं यस्य विज्ञानमत्यक्षं लोकालोकं विसर्पति ॥१५॥ यस्य विज्ञानघर्मांशुप्रभाप्रसरपीडिताः क्षणादेव

२जानन्=
६जिनस्य=

३प्रत्यक्ष ।अनुमान।
आगम।उपमान।अर्था
पत्ति।अभाव॥६
णसहित=
बांछके:

यांति खद्योतवद्दुर्णया ॥१८॥ पादपीठीकृताशेषत्रिदशेंद्रसभाजिरं ॥ योगिगम्यं जगन्नाथं गुणरत्नमहार्णवं ॥१९॥
पवित्रितधरापृष्ठं समुद्धृतजगत्त्रयं ॥ मोक्षमार्गप्रणेतारमनंतं पुण्यशासनं ॥२०॥ प्रभामंडलनिरुद्धार्कचंद्रकोटिसम
प्रभं ॥ शरण्यं सर्वगं शांतं दिव्यवाणीविशारदं ॥२१॥ अक्षोरगशकुंतेशं सर्वाभ्युदयमंदिरं ॥ दुःखार्णवपतत्सत्वादत्त
हस्तावलंबनं ॥२२॥ मृगेंद्रविष्टरारूढं मारमातंगघातकं ॥ इंदुत्रयसमोद्दामछत्रत्रयविराजितं ॥२३॥ हंसालीपातलील
रूपचामरव्रजवीजितं ॥ वीततृष्णं जगन्नाथं वरदं विश्वरूपिणं ॥२४॥ दिव्यपुष्पानकाशोकराजितं रागवर्जितं ॥ प्राति
हार्यमहालक्ष्मीलक्षितं परमेश्वरं ॥२५॥ नवकेवललब्धिश्रीसंभवं स्वात्मसंभवं ॥ तुर्यध्यानमहावह्नौ कृतकर्मेंधनो
त्करं ॥२६॥ रत्नत्रयसुधास्यंदमंदीकृतभवभ्रमं ॥ वीतरागं जितद्वैतं शिवं शांतं सनातनं ॥२७॥ अर्हंतमजमव्यक्तं कामदं

दत्तं — इंद्रियसर्प — गरुड — उत्कट — हंसपंक्ति — अविनश्वरं

कामघातकं॥ पुराणपुरुषं देवं देवदेवं जिनेश्वरं॥२६॥ विश्वचक्षुर्जगद्वंद्यं योगिनाथं महेश्वरं॥ ज्योतिर्मयमना
त्रातारं भुवनेश्वरं॥२७॥ योगीश्वरं तमीशानमादिदेवं चतुर्मुखं॥ अनंतमच्युतं शांतं भास्वंतं भूतनायकं॥२८॥ सन्म
तिं सुगतं सिद्धं जगज्ज्येष्टं पितामहं॥ महाधीरं मुनिश्रेष्टं पवित्रं परमाक्षरं॥२९॥ नित्यमव्ययमव्यक्तं परिपूर्णं
नं॥ इत्यादिसान्वयानेकपुण्यनामोपलक्षितं॥३०॥ सान्वयानीकयोगींद्रवंद्यनामोपलक्षितं॥ स्मरं सर्वगतं
वीरममरनायकं॥३१॥ अनन्यशरणः साक्षात्तत्संलीनैकमानसः॥ तत्स्वरूपमवाप्नोति ध्यानी तन्मयतां गतः॥
आत्मानं
३२॥ यमाराध्य शिवं प्राप्ता योगिनो जन्मनिःस्पृहाः॥ यं स्मरंत्यनिशं भव्याः शिवश्रीसंगमोत्सुकाः॥३३॥ य
गमृतस्यैकामासाद्य कणिकामपि॥ शाश्वते पथि तिष्टंति प्राणिनः प्रास्तकल्मषाः॥३४॥ देवदेवः स ईशानो भव्यां

जैकभास्करः ॥ ध्येयः सर्वात्मना धीरैर्निश्चलीकृतमानसैः ॥ तस्मिन्निरंतराभ्यासवशात्संजातनिश्चयाः ॥ सर्वाव
स्थासु पश्यंति तमेव परमेष्टिनं ॥ उद्धांतदोर्लंब्यपरं ज्योतिस्तद्गुणग्रामरंजितः ॥ अविक्षिप्तमना योगी तत्स्वरूपमु

प्राप्यते

पाश्नुते ॥ ३७ ॥ इत्थं तद्भावनानंदसुधास्यंदाभिनंदितः ॥ न हि स्वप्नाद्यवस्थासु ध्यायन्प्रच्यवते मुनिः ॥ ३८ ॥ अथ

स्खलते

सहितानां

वा तस्य लोकत्रयैश्वर्यं ज्ञानराज्यं स्वभावजं ॥ ज्ञानत्रययुषामन्येयोगिनामप्यगोचरः ॥ ३९ ॥ किंच ॥ साक्षान्नि
र्विषयं कृत्वा साक्षं चेतः स संयमी ॥ नियोजयत्यविश्रांतं तस्मिन्नेव जगद्गुरौ ॥ ४० ॥ तद्गुणग्रामसंलीनमानसस्त
द्गताप्रायः ॥ तद्भावभावितो योगी तन्मयत्वं प्रपद्यते ॥ ४१ ॥ तथा हि ॥ यदाभ्यासवशात्तस्य तन्मयत्वं प्रजायते ॥ त

६ परमात्मस्य—

दात्मानमसौ ध्यानी सर्वज्ञीभूतमीक्षते ॥ ४२ ॥ एष देवः स सर्वज्ञः सोऽहं तद्रूपतां गतः ॥ तस्मात्स एव नान्योऽहं विश्व

१संबंधंकरोति = आत्मा = १स्फटिकमणिः =



४ परिज्ञानोत्कृष्टेज्ञातिसति=

दर्शीतिमन्यते॥४३॥उक्तंच॥येनयेनहिभावेनयुज्यतेयंत्रवाहकः॥तेनतन्मयतांयातिविश्वरूपोमणिर्यथा॥
४४॥अथवा॥भव्यस्यैवहिभूतानांसाक्षान्मुक्तेर्निबंधनं॥अतःसर्वज्ञताभव्येभवंतीनात्रप्रोक्यते॥४५॥अयमा
त्मस्वसामर्थ्याद्विप्रभुः प्रातिनकेवलं॥चालयत्यपिसंक्रुद्धोभुवनानिचतुर्दश॥४६॥त्रैलोक्यानंदबीजंजननजल
धेर्यानपात्रंपवित्रंलोकालोकप्रदीपंस्फुरदमलशरच्चंद्रकोटिप्रभाढ्यं॥कस्यामप्यग्रकोटौजगदखिलमति
त्यलब्धप्रतिष्ठंदेवंविश्वैकनाथंशिवमजमनघंवीतरागंभजस्व॥४७॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञाना
र्णवेयोगप्रदीपाधिकारेरूपस्थध्यानप्रकरणं॥ ॥वीतरागंस्मरन्योगीवीतरागोविमुच्यते॥रागीसरागमालं
क्रूरकर्माश्रितोभवेत्॥मंत्रमंडलमुद्रादिप्रयोगैर्ध्यातुमुद्यतः॥सुरासुरनरव्रातंक्षोभयत्यखिलंक्षणात्॥२॥क्रु

३ नरक भवनवासी नरकल्पवासी ज्योतिष्क ग्रीवेयक नवोत्तर पंचोत्तर =

१जीवस्य = २आत्मा =

स्याप्यस्य सामर्थ्यमचिंत्यं त्रिदशैरपि। अनेकविक्रियासारध्यानमार्गावलंबिनः।३। बहूनि कर्माणि मुनिप्रवीरै
र्विद्यानुवादात्प्रकटीकृतानि। असंख्यभेदानि कुतूहलार्थं कुमार्गकुध्यानगतानि संति।४। असावनंतप्रथित २ विख्यात =
प्रभावः स्वभावतो यद्यपि यंत्रनाथः (आत्मा)। नियुज्यमानः स पुनः समाधौ करोति विश्वं चरणाग्रलीनं।५। अथवा स्व
प्नेपि कौतुकेनापि नासध्यानानि योगिनिः। सेव्यानि यांति बीजत्वं यतः सन्मार्गहानये (रत्नत्रयात्)।६। सन्मार्गात्प्रच्युतं चेतः
पुनः वर्षशतैरपि। प्राकृतेन हि केनापि न व्यवस्थापयितुं पथि।७। असध्यानानि जायंते स्वनाशायैव केवलं। रा
गाद्यसद्ग्रहावेशात्कौतुकेन कृतान्यपि।८। निर्भर (परिपूर्ण) आनंदसंदोह (समूह) पदसंपादनक्षमं। मुक्तिमार्गमतिक्रम्य कः (पुरुषः) कुमार्गे
प्रवर्तते।९। क्षुद्रध्यानपरप्रपंचचतुरा रागानलोद्दीपिता मुद्रामंडलमंत्रयंत्रकरणैराराधयंत्यादृताः। कामक्रोध ७आदरपराः =

वशीकृतानि हृषुरान्न संसारमोख्यार्थिनो दुष्टाप्राप्नि हता पतंति नरके भोगार्थिनिर्विचिताः ॥१०॥ तन्नेयं तदनु
यंतद्धि चिंत्यं मनीषिभिः ॥ यज्जीवकर्मसंबंधविध्वंसायैव जायते ॥११॥ स्वयमेव हि सिध्यंति सिद्धयः शांतचेत
अनेकफलसंपूर्णा मुक्तिमार्गावलंबिनां ॥१२॥ संभवंति न चाभीष्टसिद्धयः क्षुद्रयोगिनां ॥ भवत्यैव पुनस्तेषां
[निर्वीछको] [मुनयः]
प्रत्यंशो निवारितः ॥१३॥ भवप्रभवसंबंधे निरपेक्षा मुमुक्षवः ॥ नहि स्वप्नेपि विक्षिप्तं मनः कुर्वंति योगिनः ॥१४॥ अ
[उद्यमं कुरुते]
५ स्वस्वरूपे — रूपे स्थिरीभूतचित्तः प्रक्षीणविभ्रमः ॥ अमूर्तमजमव्यक्तं ध्यातुं प्रक्रमते ततः ॥१५॥ चिदानंदमयं शुद्धममू
[अथ]
र्तं क्षरं स्मरेद्यत्रात्मनात्मानं तद्रूपातीतमीक्ष्यते ॥१६॥ वदंति योगिनो ध्यानं चित्तमेवमनाकुलं ॥ कथंशिव
[तद्यथा]
पन्नमात्मानं संस्मरेन्मुनिः ॥१७॥ विविच्य तद्गुणग्रामं तत्स्वरूपं निरूप्य च ॥ अनन्यशरणो ज्ञानी तस्मिन्नेवल ॥१३१॥

८ विचार्य —

व्रजेत्॥१८॥ तद्गुणग्रामसंपूर्णं तत्स्वभावैकभावितं। कृत्वात्मानं ततो ध्यानी योजयेत्परमात्मनि॥१९॥ द्वयोर्गुणैर्म
तं साम्यं व्यक्तिशक्तिव्यपेक्षया। विशुद्धेतरयोः स्वात्मतत्वयोः परमागमे॥२०॥ किंच॥ यः प्रमाणनयैर्नूनं स्वतत्व
मवबुध्यते। बुध्यते परमात्मानं स योगी वीतविभ्रमः॥२१॥ व्योमाकारमनाकारं निष्पन्नं शांतमच्युतं। चरमांगा
त्कियदूनं स्वप्रदेशैर्घनैः स्थितं॥२२॥ लोकाग्रशिखरासीनं शिवीभूतमनामयं (नीरोगं)। पुरुषाकारमापन्नमप्यमूर्तं वि
(निःशरीरस्य)
चिंतयेत्॥२३॥ तथा हि॥ निःकलस्य विशुद्धस्य निष्पन्नस्य जगद्गुरोः। चिदानंदमयस्योच्चैः कथं स्यात्पुरुषाकृ
तिः॥२४॥ तथा॥ विनिर्गतमधूच्छिष्टप्रतिमे मूषिकोदरे। यादृग्गगनसंस्थानं तदाकारं स्मरेद्विभुं॥२५॥ सर्वावय
वसंपूर्णं सर्वलक्षणलक्षितं। विशुद्धादर्शसंक्रांतप्रतिबिंबसमप्रभं॥२६॥ इत्यसौ सतताभ्याससवशात्संजातनिश्चलः॥

योगी=

अपिस्वप्नाद्यवस्थासु तमेवाध्यक्षमीक्षते ॥२७॥ सोऽहं सकलवित्सार्वः सिद्धः साध्यो भवच्युतः ॥ परमात्मा परं
ति विश्वदर्शी निरंजनः ॥२८॥ तदासौ निश्चलोऽमूर्तो निष्कलंको जगद्गुरुः ॥ चिन्मात्रो विस्फुरत्युच्चैर्ध्यान
विवर्जितः ॥२९॥ पृथग्भावमतिक्रम्य तथैक्यं परमात्मनि ॥ प्राप्नोति स मुनिः साक्षाद्यथान्यत्वं न विद्यते ॥३०॥
॥उक्तंच॥ निष्कलः परमात्माहं लोकालोकावभासकः ॥ विश्वव्यापी स्वभावस्थो विकारपरिवर्जितः ॥३१॥ इ
विगतविकल्पं क्षीणरागादिदोषं विदितसकलवेद्यं त्यक्तविश्वप्रपंचं ॥ शिवमजमनवद्यं विश्वलोके
पं परमपुरुषमुच्चैर्भावशुद्ध्या भजस्व ॥३२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे
रूपातीतप्रकरणं ॥ छ ॥ प्रसीद शांतिं व्रज संनिरुध्यतां दुरंतजन्मज्वरविप्लुतं मनः ॥ अगाधजन्मार्णव

व्यापित —

प्रसन्ना =

पारवर्तिनां यदि श्रियं वांछसि विश्वदर्शिनां ॥१॥ यदि रोद्धुं न शक्नोति तुच्छवीर्यो मुनिर्मनः ॥ तद्वा रागैतरध्वं
संहृत्वा कुर्यात्सुनिश्चलं ॥२॥ अनुप्रेक्षाश्च धर्मस्य स्युः सदैव निबंधनं ॥ चित्तभूमौ स्थिरीकृत्य ताः स्वरूपं
निरूपय ॥३॥ स्फेटयत्याशु निःकंपो यथा दीपो घनं तमः ॥ तथा कर्मकलंकौघं मुनेर्ध्यानं सुनिश्चलं ॥४॥ अ
थवा ॥ चलत्येवाल्पसत्वानां क्रियमाणमपि स्थिरं ॥ चेतः शरीरिणां शश्वद्विषयैर्व्याकुलीकृतं ॥५॥ न स्वा
[परमशुक्ले]
स्थ्यं मतः सुले विद्यतेत्यल्पचेतसां ॥ आद्यसंहननस्यैव तत्प्रणीतं पुरातनैः ॥६॥ उक्तं च ॥ छिन्ने भिन्ने हते दग्धे
[विभिन्नं] [घ्राणेति]
देहे स्वमिव दूरगं ॥ प्रपश्यन्वर्षवातादिदुःखैरपि न कंपते ॥१॥ न पश्यति तदा किंचिन्न शृणोति न जिघ्रति ॥ स्पृ
ष्टं किंचिन्न जानाति साक्षान्निर्वृत्तलेपवत् ॥२॥ अद्यसंहननोपेता निर्वेदपदवीं श्रिताः ॥ कुर्वंति निश्चलं चेतः शु

[निष्पन्नः]

२ परित्यज्य— १ भातापुरुषस्य मुने: २ संयोगं न करोति १ आद्यसंहनन चतुर्दश पूर्वयो

ध्यानक्षमं नराः॥९॥ सामग्र्योरुभयोर्ध्यातुर्ध्यानं बाह्यांतरंगयोः॥ पूर्वयोरेव शुक्लं स्यान्नान्यथा जन्मकोटिषु॥१०॥ अतिक्रम्य शरीरादिसंगानात्मन्यवस्थितः॥ नैवाक्षमनसोर्योगं करोत्येकाग्रतां श्रितः॥११॥ असंख्येयमसंख्येयं द्विगुणे ष्विहा क्षीयते क्षपकस्यैव कर्मजातमनुक्रमात्॥१२॥ शमकस्य क्रमात्कर्म शांतिमायाति पूर्ववत्॥ प्राप्नोति निर्मलं तातंकं समं सोऽयं समलक्षणं॥१३॥ अधर्मध्यानस्य विज्ञेया स्थितिरांतर्मुहूर्तिकी॥ क्षायोपशमिको भावो लेश्या शुक्लैव शाश्वती॥१४॥ इदमत्यंतनिर्वेदविवेकप्रशमोद्भवं॥ स्वात्मानुभवमत्यक्षं योजयत्यं गिनां सुखं॥१५॥ तथा चोक्तं॥ अलौल्यमारोग्यमनिष्ठुरत्वं गंधः शुभो मूत्रपुरीषमल्पं॥ कांतिः प्रसादः स्वरसौम्यता च योगप्रवृत्तेः प्रथमं हि चिह्नं॥१६॥ घ्यवसाने स्वतनुं विहाय ध्यानेन संन्यस्तसमस्तसंगाः॥ ग्रैवेयकानुत्तरपुण्यवासं सर्वार्थसिद्धौ प्रभवंति भव्याः॥१७॥

समूहं उपशमकस्य प्रसन्न- शब्द मुने

परित्यक्तसंगाः परिग्रहाः

२कामज्वरपीडारहित =

माला भूषण आभरण २देव

त्र्यचिंत्यमहाप्रभावकलितं लावण्यलीलान्वितं स्रग्भूषांबरदिव्यलांछनयुतं चंद्रावदातं वपुः संप्राप्योन्नतवीर्य

अखंड

बोधप्रभुभगं कामज्वरार्तिच्युतं सेवंते विगतांतरायमतुलं सौख्यं चिरं स्वर्गिणः ॥१८॥ ग्रैवेयकानुत्तरवासभाजां वीचा

उत्कट

रहीनं सुखमत्युदारं । निरंतरं पुण्यपरंपराभिर्विवर्द्धितं वार्द्धिरिवेंदुपादैः ॥१९॥ देवराज्यं समासाद्य यत्सुखं स्वर्गवासि

भुंजंति

नः । निर्विशंति ततोनंतं सौख्यं कल्पातिवर्तिनां ॥२०॥ संभवंत्यथ कल्पेषु तेष्वचिंत्यविभूतिजां । प्राप्नुवंति परं सौख्यं सु

संयुक्तं कल्पवृक्षः अणिमादि

राः स्त्रीभोगलांछितं ॥२१॥ दशांगभोगसंभूतं महाष्टगुणवर्द्धितं । यत्कल्पवासिनां सौख्यं तद्वक्तुं केन पार्यते ॥२२॥ सर्वद्वं

स्वर्ग देवानां

द्वविनिर्मुक्तं सर्वाभ्युदयभूषितं । नित्योत्सवयुतं दिव्यं दिवि सौख्यं दिवौकसां ॥२३॥ प्रतिसमयमुदीर्णं स्वर्गसाम्राज्य

रूढं सकलविषयबीजं ध्वांतदत्ताभिनंदं । ललितयुवतिलीलालिंगनादिप्रसूतं सुखमतुलमुदारं स्वर्गिणो निर्विशंति ॥२४॥

४ग्रैवेयकादीनां =

२क्लिसौख्यहीनं =

३चंद्रकिरणैः =

५समर्थयते = कः

हरहितं =

७भुंजंति =

उसन्न



सर्वाभिमतभावोत्थं निर्विघ्नं स्वःसुखामृतं ॥ सेव्यमानानं बुध्यंते गतं जन्म दिवौकसः ॥२५॥ तस्माच्च्युत्वा त्रिदिव
टलाद्दिव्यभोगावसाने कुर्वंत्यस्यां भुवि नरनुते पुण्यवंशेवतारं ॥ तत्रैश्वर्यं च रमवपुषां प्राप्य देवोपनीतैर्भोगै
र्त्योत्सवपरिणतैर्लाल्यमाना वसंति ॥२६॥ ततो विवेकमालंब्य विरज्य जननभ्रमात् ॥ त्रिरत्नशुद्धिमासाद्य तपः
कृत्वान्यदुःकरं ॥२७॥ धर्मध्यानं च शुक्लं च स्वीकृत्यानंतवीर्यतः ॥ घातिकर्मक्षयं कृत्वा व्रजंति पदमव्ययं ॥२८॥ इत्या
चार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे धर्मध्यानफलप्रतिपादनप्रकरणं ॥ छ ॥ रागाद्युग्ररुजा
लापकलितं संदेहदोलायितं विक्षिप्तं सकलेंद्रियार्थगहने कृत्वा मनो निश्चलं ॥ संसारव्यसनप्रबंधविलयं मुक्ते
र्विनोदास्पदं धर्मध्यानमिदं विदंतु निपुणाः अत्यक्षसौख्यार्थिनः ॥१॥ आत्मार्थं श्रय मुंच मोहगहनं मित्रं विवेकं

२ धर्मध्यानं=परित्यक्तः

मध्ये= २ शुक्लं आरभ्यते

कुरु वैराग्यं भज भावय स्वं नियतं भेदं शरीरात्मना॥ धर्मध्यानसुधासमुद्रकुहरे कृत्वावगाहं परं पश्यानंतसुख

कमलं

स्वभावकलितं मुक्तेर्मुखांभोरुहं॥१॥ अथ धर्ममतिक्रांतः शुद्धिं चात्यंतिकीं श्रितः॥ ध्यातुमारभते धीरः शुक्लमत्यंत

निर्मलं॥३॥ निःक्रियं करणातीतं ध्यानधारणवर्जितं॥ अंतर्मुखं च यच्चित्तं तच्छुक्लमिति पठ्यते॥४॥ आदिसंहननो ३ वज्रवृषभनाराच संहनन =

पेतः पूर्वज्ञः पुण्यचेष्टितः॥ चतुर्विधमपि ध्यानं स शुक्लं ध्यातुमर्हति॥५॥ उक्तं च॥ शुचिगुणयोगाच्छुक्लं कषायरज ५ चतुर्दशपूर्वज्ञा

सः क्षयादुपशमाद्वा॥ वैडूर्यमणिशिखामिव सुनिर्मलं निःप्रकंपं च॥६॥ कषायमलविश्लेषात्प्रशमाद्वा प्रसूयते॥ य

यथार्थक

शुक्लध्यानज्ञाते= तः पुंसामतस्तज्ज्ञैः शुक्लमुक्तं निरुक्तिकं॥७॥ छद्मस्थयोगिनामाद्ये द्वे शुक्ले परिकीर्तिते॥ द्वे चांते क्षीणदोषाणां के

वलज्ञानचक्षुषां॥८॥ श्रुतज्ञानार्थसंबंधाच्छ्रुतालंबनपूर्वके॥ पूर्वे परे जिनेंद्रस्य निःशेषालंबनच्युते॥९॥ सवितर्कं

२ अपतनशीलं =

सवीचारं सपृथक्त्वं च कीर्तितं॥ शुक्लमाद्यं द्वितीयं तु विपर्यस्तमतः परं॥१०॥ सवितर्कमवीचारमेकत्वपदलां
छितं॥ कीर्तितं मुनिभिः शुक्लं द्वितीयमतिनिर्म्मलं॥११॥ सूक्ष्मक्रियाप्रतिपाति तृतीयं सार्थनामिकं॥ समुछिन्ना
यं ध्यानं तुर्यमार्यैर्निवेदितं॥ तत्र त्रियोगिनामाद्यं द्वितीयं त्वेकयोगिनां॥ तृतीयं तनुयोगानां स्यात्तुरीयमयो
॥१२॥ तद्यथा॥ पृथक्त्वेन (भिन्नत्वेन) वितर्कस्य वीचारो यत्र विद्यते॥ सवितर्कं सवीचारं सपृथक्त्वं तदिष्यते॥१४॥ अवीचारो
वितर्कस्य यत्रैकत्वेन संस्थितः॥ सवितर्कमवीचारं तदेकत्वं विदुर्बुधाः॥१५॥ पृथक्त्वं तत्र नानात्वं (नानाभेद) वितर्कः श्रुत
मुच्यते॥ अर्थव्यंजनयोगानां वीचारः संक्रमः स्मृतः॥१६॥ अर्थादर्थांतरापत्तिरर्थसंक्रांतिरिष्यते॥ ज्ञेयाद्यं
क्रातिर्व्यंजनाद्व्यंजने स्थितिः॥१७॥ स्यादेवं योगसंक्रांतिर्योगाद्योगांतरे गतिः॥ विशुद्धध्यानसामर्थ्यात्क्षीण

१ सूक्ष्मयोगकाययोगानां =

जराक्रांतं

सोपानराज योऽत्यंतबंधुरः ॥ ८ ॥ तच्छ्रुत्वा ॥ हृषीकार्थसमुत्पन्नं प्रतिक्षणविनश्वरं सुखं कृ
त्वा रतिं मूढ विनष्टं भुवनत्रये ॥ ९ ॥ नवा क्षिप्रभवा ये ते देहसंबंधा विपदास्पदं संभवंति मनुष्याणां
यांति ते सुष्टु नीरसाः ॥ १० ॥ गावपुर्विद्धि हि रुजाक्रांतं वयो वनं ॥ ऐश्वर्यं च विनाशांतं मरणांतं
तां ॥ ११ ॥ येऽत्र दृष्टिपथं माया ताः प दार्थाः पुण्यमूर्तयः ॥ पूर्वाह्णे न च मध्याह्ने ते प्रयांतीह देहिनां ॥
१२ ॥ यत्कृत्यं मनिं सुखं मूढ यच्च क र्तव्यं पुरः स्थितं ॥ तयोर्दुःखं मनं तं स्यात्तुलायां कल्प्यमानयोः ॥ १३
॥ भुजंगभोगाभाः सद्यः प्राणापहारिणः ॥ सेव्यमाना प्रजायंते समारे त्रिदशैरपि ॥ १४ ॥ धावस्त
तमिदं मूढ प्रतिक्षणविनश्वरं ॥ जानन्नपि न जानासि ग्रहः कोऽयमनौषधः ॥ १५ ॥ रूपं तरुणिक

णाकः वदंत्यार्य॥ घटीघातेन भूभृतां॥ क्रियतामात्मनः श्रेयो गतेयं नागमिष्यति॥ २६॥ यद्यत्पूर्वकृतारी

द्विवात्यं तत्रास्वते॥ युज्यते हि तदा कर्तुमस्मार्थे कर्माणि दिते॥ २७॥ अत्र वत्सपंय दियास्वेति

धनबांधवाः स्वारीराणि तदैतेषां कृते किं विद्यसे वृथा॥ २८॥ नायाता नैव यास्यंति केनापि सह यो

षित॥ तथाप्यज्ञाः कृते तासां प्रविक्रोशंति मातलाः॥ २९॥ ये जाता रिपवः पूर्वं जन्मन्यस्मिन्वि

ते एव तत्र वर्त्तंते बांधवा बहुसौहृदाः॥ ३०॥ ये भारिपुत्रे नं समापन्नाः प्राप्ता नास्तेत्र जन्मनि॥ बांधवा

धर्महान्याहृस्यंते हंतुमुद्यताः॥ ३१॥ स्त्रीं गनादि महापापैर्वर्त्ति गाढं नियंत्रिताः॥ पतंत्यंधम

न्धारव्ये भविनो ध्रुवा॥ ३२॥ यान्नयंति भवाब्धौ ये ते एव बांधवाः॥ ध्रुवं ते तारयिष्यंति हि तमु ॥५॥

ध्रु

द्विरूपयोगिनः ॥२३॥ शरीरं शीर्यते नाशा गलत्यायुर्न पापधीः ॥ मोहं स्फुरति नात्मार्थेः पश्यवृ
त्तं शरीरिणां ॥२४॥ यास्यंति निर्दया नूनं यद्दत्वा दाहमुन्नतं ॥ हृदि पुंसां कथं ते स्युस्तव बुद्ध्यै प
रिग्रहाः ॥२५॥ अविद्यारागदुर्वारव्यामोधीकृतात्मनां ॥ श्वभ्रादौ देहिनां नूनं सोढव्याः सुचिरं
व्यथाः ॥२६॥ वह्निं विशंति शीतार्थं जीवितार्थं पिबेद्विषं ॥ विषयेष्वपि यः सौख्यमन्वेषयति मु
ग्धधीः ॥२७॥ कृते येषां त्वया कर्म कृतं श्वभ्रादिसाधकं ॥ त्वामेव यांति ते पापा वंचयित्वा यथायथं
॥२८॥ अनेन नृशरीरेण यल्लोकद्वयशुद्धिदं ॥ विवेच्य तदनुष्ठेयं हेयं कर्म ततोन्यथा ॥२९॥ चर्व
यंति स्वघातायते नूनं विषपादपं ॥ नरत्वेपि न कुर्वंति ये विवेच्यात्मनो हितं ॥३०॥ यच्छरीरां तरादेस्य

वसंतिविहगानैगे॥तथाजन्मांतरेमूढाःप्राणिनःकुलपादपे॥३॥प्रातस्तंपरित्यज्ययथैते
यांतिपत्रिणः॥स्वकर्म्मवशगाःशश्वत्तथैतेक्वापिदेहिनः॥४॥गीयतेयत्रसानंदंपूर्व्वाह्णेललि
तंगृहे॥तस्मिन्नेवहिमध्याह्नेसदुःखमपिरुद्यते॥५॥यस्यराज्याभिषेकश्रीःप्रत्यूषेत्रविलो
क्यते॥तस्मिन्नहनितस्यैवचिताधूमश्चदृश्यते॥६॥अत्रजन्मनिनिर्वृत्तैर्यैःशरीरंतवाणुभि[illegible]ना
कृतान्यत्रतैरेवखंडितानिसहस्रशः॥७॥शरीरत्वंनयेप्राप्ताआहारत्वेनयेणवः॥भ्रमतस्ते
रंभ्रातनैतेसंतिजगद्गृहे॥८॥युगारंगानैश्वर्यशक्रकार्मुकसन्निभोसद्यःप्रध्वंसमायाति
मानमपिस्थयं॥९॥आयांत्येवननिवर्त्ततेसरितांयद्वदूर्म्मयः॥तथाशरीरिणांपूर्व्वागतानां ॥६॥

तपः॥ऋष्यशृङ्गचिक्षिप्तिस्त्रीणां लीलागतापि विनिवर्तते॥ न रूपबललावण्यं॥ सौदर्यं तु गतं न्नृणां॥ऋषि
गलत्येव वायुरव्यग्रहस्तन्यस्ताम्बुवत्क्षणे॥ नलिनीदलसंक्रान्तं प्रालेयमिव यौवनं॥ अथ मनोज्ञ
विषयैः सार्द्धं संयोगाः स्वप्नसंनिभाः॥ क्षणादेव हि यान्ति वञ्चनोद्यतबुद्धयः॥ अथ स्वजनमालान्तुका
रीणि कुलानि च बलानि च॥ राज्यालंकारवित्तानि॥ कीर्तितानि महर्षिभिः॥ अथ फेनपुञ्जे ध्यवा
नास्थेये सारः प्रतीयते॥ न शरीरे मनुष्याणां दृष्टे छिद्रेव स्कन्ते॥ अथ बाध्याता यातानि कृतं तिः
ग्रहवंशे कृतारकाः॥ कृतवंशशरीराणि न हि स्वप्नेपि देहिनो॥ अथ धाद्येजा तांसां तद्रूपेण पुनला
भाः ज्ञानः प्रियाः॥ अप्रपं पुंसां समापन्नाः कुःस्वरूपेण तेषु नाः॥ अथ पुनः मोहा जनमिवान्द्राणा मिडजा

शान्ताविः ॥७॥

लोपमेजग तंमुद्य स्मिन्नयेलोकेनविघ्नःकेनहेतुना॥धर्मार्थयेविजानीमध्ये॥पदार्थाश्चल
नेतराः॥तेतेमुनिभिरुद्दिष्टाः॥प्रतिक्षणविनश्वराः॥यस्मादागननगरकल्पंसंगमंवल्लभानां॥ज
लदपटलतुल्यंयौवनंवाधनंवा॥स्वजनसुतशरीरादीनिविद्युच्चलानि॥क्षणिकमितिसम
स्तंसंसारवृत्तं॥यस्मान्नित्यता॥नसकोप्यस्तिदुर्बुद्धिशरीरीभुवनत्रयेयस्यकंठेकृतांतस्यनपा
शाः॥प्रसारिष्यति॥यस्माप॥ततितुङ्गोरिपुमकंठीरवक्रमेत्रायतेपन्नहिंसाणीसौंद्योमौक्तिकैरौ
पिः॥सुरासुरनराधीशैःपनायकैरपिदुर्धरा॥जीवलोकेक्षणार्द्धनंवस्त्रांतियमवागुरा॥अजगात्र
यजयीवीरएकएवांतकःस्फुटं॥इच्छामात्रेणयस्यैतेपतंतित्रिदशेश्वराः॥च्योत्वेतिस्वजनम् ॥७॥

स्वकर्म्मफलभोगिनो ॥ नात्मानं बुद्धिविध्वंसाद्यमहं ष्ठां तत्र स्थितो ॥ अस्मिन्संसारकान्तारे यम
भोगींद्रसेविते ॥ पुराणपुरुषैः पूर्वैः अनंताः प्रलयं गताः ॥ न श्रीवत्सीकारश्चान्तेनापि त्रिदशैर्न निवार्य
ते ॥ यत्रायमंतकः पापी नृकीटैस्तत्र का कथा ॥ आगर्भादारभ्य नीयन्ते प्रतिक्षणं खंडितैर्गात्रयाणैः
प्राणिनो मूढकर्म्माणो यममंदिरं ॥ यदि दृष्टः श्रुतो वास्ति यमाज्ञाछेदको बली ॥ तस्माद्रामभज
स्वास्थ्यं नैवं चेत्किं वृथा श्रमाणे ॥ परस्यैवं न जानाति विपत्तिं स्वस्य मूढधीः ॥ वने सत्त्वसमाकीर्णे
दह्यमाने तरुस्थवत् ॥ यथा बालेन तथा वृद्धो ॥ यथाण्डजैस्तथा ॥ यथा स्वैस्तथा नीयं साम्प्र
नं प्रसेतेन्तकं ॥ राजानं यमेन यानि ॥ मंत्रौषधबलानि चं स्थी भवंति सर्व्वाणि विपदो देहिनां य

जेनभीतासतीत्रातुंनेच्छ ममेयद्विक्रमपदभ्रा म्रोवराकीमिमांनत्वंनि घृणाल्लज्जसेत्रैजननेमे
गेषुरंतुंसदा॥२३॥पातालेब्रह्मलोकेसुरपतिभवनेसागरांतेवनांतेदिक्चक्रेशैलशृंगेदहनवन
हिमध्वांतवज्रासिदुर्गेभूरार्त्तेर्भसन्निविष्टेसमदकरिघटासंकटेवाबलीयान्कालोघ्नोक्रूरकर्माक
वलयतिबलाज्जीवितंदेहभाजां॥२४॥स्मिन्नंतकभोगिवक्त्रविवरेसंहारदंष्ट्रांकितेमग्नंमुग्ध
वनत्रयंस्मरणगरव्यापारमुग्धीकृतंप्रत्येकंगिलतोस्यनिर्दययधियःकेनाप्युपायेनवैनाम्नातिःसर
णंतवार्यैकथमप्यत्यद्भुतंबोधंविना॥२५॥शरणं॥ चतुर्गतिमहावर्तेदुःखवाडवदीपितेभ्रमे
तिभविनोऽजस्त्रंवराकाजन्मसागरे॥२६॥उत्पद्यंतेविपद्यंतेस्वकर्मनिगडैर्धृताः॥स्थिरेतरशरीरेषु॥

नाणे.व० संचरंतः शरीरिणः ॥ ३ ॥ कदाचित्स्वर्गत्यायुर्नामकर्मोदयादिह । अभवंस्तेऽगिनः स्वर्गे पुण्यप्राग्भार

॥श्री॥ भ्राजः ॥ ४ ॥ कल्पेष्वपि विमानेषु निकायेषु स्थितेषु वा । निर्वृतीशाति सुखं दिव्यमासाद्य त्रिदिव

च्युताः ॥ ५ ॥ च्यवंते ततः सद्यः प्रविशंति रसातलं । भ्रमंत्यनिलवद्विश्वं पतंति नरकोदरे ॥ ६ ॥ पिंडवद्यत्

मोहांतसंसारः समयांते ऽत्रधर्मात्मपर्यायैर्नियोज्यप्राणिनां गणं ॥ ७ ॥ स्वर्गे पतंति साक्रंदं ॥

श्वा स्वर्गमधिरोहति श्रोत्रियः सारमेयः स्यात्कृमिर्वा श्वपचोपि वा ॥ ८ ॥ रूपाण्येकानि गृह्णाति

त्यजत्यन्यानि संततं यथा रंगेऽत्र शैलूषस्तथायं यंत्रवाहकः ॥ ९ ॥ सुतीभवंति मातः संतः स्वामिमिथ्यात्वा

कृष्टाः किंताः ॥ पंचधा परिवर्तंते प्राणिनो जन्मसंकटे ॥ १० ॥ द्रव्यक्षेत्रं तथा कालभवभावविः ॥श्री॥

त॥ संसारो दुःखसंकीर्णः पंचधेति प्रपंचितः ॥१२॥ सर्वैर्भावैरपि संबद्धः संप्राप्तो देहधारिभिः॥ अना
दिकालसंभ्रांतैः त्रसस्थावरयोनिषु ॥१३॥ देवलोके नृलोके च तिरश्चि नरकेपि च न सा योनिर्न
तद्रूपं न स देशो न तत्कुलं ॥१४॥ न तद्दुःखं सुखं किंचिन्न पर्यायः स विद्यते ॥ यत्रैते प्राणिनः श्व
द्यातायातैर्न खंडिताः ॥१५॥ नके बंधुत्वमायातास्ते जातास्तव विद्विषः ॥१६॥ रंतां गाथ संसारपंकमग्न
स्य निर्दयः ॥१७॥ भूपः कृमिर्भवत्यत्र कृमिश्चामरनायकः॥ शरीरी परिवर्त्तेत कर्मणा वंचितो बला
त्॥१८॥ माता पुत्री स्वसा भार्या सैव संपद्यतेऽगजा॥ पिता पुत्रः पुनः सोऽपि लभते पौत्रकं पदं ॥१९॥ श्व
भ्रे शूलकुठारयंत्रदहनक्षारक्षुरव्याहतैः तिर्यक्षु श्रम दुःखपावकशिखासंभारभस्मीकृतैः॥ मा

नाणिव मुख्यं पुंस्त्वं तुल्यप्रयासवत्सर्गो द्विविधा गोचरैः संसारेऽत्र दुरंतदुर्गतिमये बंभ्रम्यते प्राणिभिः ॥२१॥ असंसार

॥२४॥ महाव्यसनसंकीर्णे दुःखज्वलनदीपिते। एकाक्येव भ्रमत्यात्मा दुर्गमे भवमरुस्थले॥ ॥ स्वयं

स्वकर्मनिर्वृत्तं फलं भोक्तुं शुभाशुभं। शरीरांतरमादत्ते एकः सर्वत्र सर्वथा॥ ॥ संकल्पानंतरोत्पन्नं

स्वर्गसुखामृतं॥ निर्विशत्ययमेवैकः स्वर्गश्रीरंजिताशयः॥ ॥ संयोगे विप्रयोगे च संभवे मरणे

ऽथवा। सुखदुःखादिके चास्य न सखान्योऽस्ति देहिनः॥ ॥ मित्रपुत्रकलत्रादिकृते कर्म करोत्ययं।

यत्फलं सैकाकी भुंक्ते श्वभ्रादिषु स्वयं॥ ॥ सहायाः अस्य जायंते भोक्तुं वित्तानि केवलं। न

तु सोढुं स्वकर्मोत्थं निर्दयं व्यसनावली॥ ॥ एकत्वं किं न पश्यंति जडा जन्मग्रहार्दिताः॥ यज्जन्मम्र ॥२४॥

संपाते ऽत्यन्तमेनुभूयते ॥ आत्मज्ञानस्वरूपो यं शुद्धबोधादिलोचनः ॥ अन्यमत्यं विरक्तं जीव
एकाकी विधिवेचितः ॥ अथ दैवकं मनुते मोहाद्यमेत्तैः स्थिरैस्तैरनदा स्वं स्वेन बध्नाति तद्धिपद्
ग्रीवीभवेत् ॥२६॥ एकाकित्वं प्रपन्नो ऽस्मि यदाहं वीतविभ्रमः ॥ तदैव जन्मसंबंधः स्वयमेव विशी
र्यते ॥२७॥ एकः स्वर्गी भवति विबुधः स्त्रीमुखांभोजभृंगः ॥ एकः स्वाभ्रं पिबति कलिलं छिद्यमानः
कृपाणैः ॥ एकः क्रोधाद्यनलकलितः कर्म बध्नाति विद्वान् एकः सर्वावरणविगमे ज्ञानराज्यं भु
नक्ति ॥२८॥ एकत्वांक्रयमोस्मात्स्वभावेन शरीरादेर्विलक्षणः ॥ चिदानंदमयः शुद्धो बंधप्रत्यैकता
नंपि ॥ अन्न चिद्रूपयोरैक्यं बंधं प्रति न वस्तुतः ॥ अनादिश्च नयोः श्लेषः स्वर्णकालिकयोरि

नागी ॥२४॥

मू

वश्यश्चहृह मूर्तिर्मूर्त्तेन चलेनात्यंतनिश्चलं॥ शरीरं मुह्यते मोहाच्चेतनेनास्तचेतनं॥ आत्माणु
निष्पन्नं शरीरमिदं मं मि नां॥ उपयोगात्मको त्यक्तः शरीरी ज्ञानविग्रहः॥ आत्मान्यत्वं किं
प्रपंतिज्जडाजन्मग्रहादितां॥ यज्जन्ममृत्युसंपाते मेघेणापिवतीयते॥ पूमूर्त्तो विचेत
:स्वतंत्रैः परमाणुभिः यद्वपूर्व्विहितं तेन कः संबंधस्तदात्मनः॥ अन्यत्वमेव देहेन स्या
न्नूनां यत्र देहिनः॥ तत्रैक्यं बंधुभिः सार्द्धं बहिरंगैः कुतो भवेत्॥ ये ये संबंधमायांति पदार्थाश्चे
तनेतरे॥ ते ते सर्वेपि सर्वत्र स्वस्वरूपाद्विलक्षणा॥ पुत्रमित्रकलत्राणि वस्तूनि च धनानि
सर्वथान्यस्वभावानि भावय त्वं प्रतिक्षणं॥ अन्यः कश्चिद्भवेत्पुत्रः पितान्यः ॥२४॥

यते। अन्येन केनचित्सार्द्धं कल्मषेणानुयुज्यते ॥२॥ वास्तवरूपमतिक्रम्य पृथक्पृथग्व्यवस्थिता ॥

सर्वेऽपि सर्वथा मूढभावास्त्रिलोकवर्तिनः ॥३॥ मिथ्यात्वप्रतिबद्धत्वेऽपि यत्प्रयत्नं तेन बाह्यानलंभ

वान स्वानुभूतिपद्मं जन्मगहने विक्लिन्नं त्वया प्राक्किरे संप्रत्यस्तसमस्तविभ्रमभरं श्रीरूपमेकं परं स्व

स्थं स्वं त्वं विगाह्य सिद्धवनितावक्त्रं समालोकय ॥४॥ पश्यान्तर्नित्यं निसर्गमलिनं निंद्यमनेकाशुचिसं

भृतं शुक्रादिबीजसंभूतं घृणास्पदमिदं वपुः ॥५॥ अस्सृग्मांसवसाकीर्णं शीर्णं कीकसपंजरं ॥ शिरा

नद्धं च दुर्गंधं क्व चारीरं प्रजायते ॥ यावत्त्वमनवच्छिन्नैर्भूतिभिर्बद्धं निरंतरं ॥ नाणक यिपराधीनं ॥

ताम्यन्नारकसेवं ॥६॥ कृमिजालशताकीर्णे रोगप्रचयपीडिते। जराजर्जरिते काये कीदृशी महतां

तिः॥ आयद्यं वस्तुजातं शरीरं स्त्रैः सायुबुध्या विचार्यते॥ तत्तत्सर्वं घृणोदस्तैर्दुर्गं धोमेध्यमंदिरं॥ यदीदं
शरीरं देवात्तु शरीरं सागरांबुभिः॥ क्षूयप्यत्वं पितान्यैवश्योध्यमानमपि स्राणे॥ धीकलेवरामिदं न
स्यादि चर्मावगुंठितं॥ मक्षिकाकृमिकाकेभ्यः स्यात्रातुं कस्तदा प्रभुः॥ सर्वदैव रुजाक्रां
तं स्थूच्यगृहं सर्वदापत्तनधायं देहिनां देहपंजरं॥ तैरेवं फलमेतस्य गृहीतं पुण्यकर्मभिः
ज्यजन्मनः स्वार्थयैः शरीरं कदर्थितं॥ एभिः शरीरमेतदोदायं च्यवयां दुःखं विषह्यते॥ जन्मन्यस्मि
स्तद्धितिः दोषानर्थमंदिरं॥ २०॥

क्षणानिङः स्वाविंयानित्यानीह देहिभिः सह्यंते तानि ता ॥२४॥

आर्या

मुंचंत्येव पुरीषं सा यं केवलं ॥११॥ कर्पूरकुंकुमागुरुमृगमदहरिचंदनादिवस्तूनि। भव्यान्यपि संस
र्गान्मलिनयत्ति कलेवरं नृणां ॥१२॥ अजिनपटलगूढं पंजरं कीकसानां। कुथितकुणपगं
निछन
धैः पूरितं मूढगाढं। यमवदननिषण्णं रोगभोगीन्द्रगेहं कथमिह मनुजानां प्रीतये स्याच्छरीरं ॥१३॥
अशुचि ॥ मनस्तनुवचःकर्म योग इत्यभिधीयते। स एवास्रव इत्युक्तस्तत्त्वज्ञानविशारदैः ॥१॥
वार्धेरंतः समादत्ते यानपात्रं यथा जलं। छिद्रैर्जीवस्तथा कर्म योगरंध्रैः शुभाशुभैः ॥२॥ यमप्रश
मनिर्वेदतत्त्वचिंतावलंबितं। मैत्र्यादिभावनारूढं मनः सूते शुभास्रवं ॥३॥ कषायदहनोद्दीप्तं वि
षयैर्व्याकुलीकृतं। संचिनोति मनः कर्म जन्मसंबंधसूचकं ॥४॥ विश्वव्यापारनिर्मुक्तं श्रुतज्ञा

नाणव० नावलंबितो ॥ ७ ॥ आश्रवाय विज्ञेयं वचः सत्यप्रतिष्ठितं ॥ पूर्वापवादास्पदीभूतमसन्मार्गोपदेश
॥२३॥ ॥ यापाश्रवाय विज्ञेयमसत्यं परुषं वचः ॥ ८ ॥ सुगुप्तेन सकायेन कायोत्सर्गेण वानिशं ॥ संचिनोति
शंकर्म काययोगेन संयमी ॥ ९ ॥ सततारंभयोगैश्च व्यापारैर्जंतुघातकैः ॥ शरीरं पापकर्माणि सं
तिदेहिनां ॥ १० ॥ कषायाः क्रोधाद्याः स्मरसहचराः पंचविषयाः प्रमादा मिथ्यात्वं वचनम
काय इति च ॥ दुरंते दुर्ध्याने विरतिविरहश्चेति नियतं स्रवंत्येते पुंसां दुरितपटलं जन्मभयदं ॥ ११ ॥
ऽऽ वनिरोधो यः संवरः स प्रकीर्तितः ॥ द्रव्यभावविभेदेन स द्विधा भिद्यते पुनः ॥ १ ॥ यः कर्म
पुद्गलादानविच्छेदः स्यात्तपस्विनः ॥ स द्रव्यसंवरः प्रोक्तो ध्याननिर्धूतकल्मषैः ॥ २ ॥ या संसारनि ॥२४॥

तस्यक्रियायांविरतिःस्फुटंसभावसंवरस्तज्ज्ञैर्हिज्ञेयःपरमागमात्॥३॥अत्रसंयममयैर्बाणैःसंवृ
तात्मानभिद्यते॥यमीयथासुसंनद्धोवीरःसमरसंकटे॥४॥जायतेयस्यसंयमःसाध्यसत्त्वैर्नैवरुध्यते
त्रप्रमत्तैःसमुद्युक्तैःसंवरार्थंमहर्षिभिः॥५॥क्षमाक्रोधस्यमानस्यमार्दवंत्वार्जवंपुनः॥मायायाः
संगसंन्यासोलोभस्यैतेद्विषःक्रमात्॥६॥रागद्वेषौसमत्वेननिर्ममत्वेनवानिशं॥मिथ्या
त्वंदृष्टियोगेननिराकुर्वन्तियोगिनः॥७॥अविद्याऽसंयमोद्भूतंतमस्तत्त्वावरोधकं॥ज्ञानसूर्यांशु
भिर्ध्वान्तंस्फेटयंत्यात्मदर्शिनः॥८॥असंयमगरोद्गारंसंयमसुधांबुभिःनिराकुर्वन्तिनिःशंकं
संयमीसंवरोद्यतः॥९॥द्वारपालीवयस्यांतर्विचारचतुरामतिः॥हृदिस्फुरतितस्यात्मसूतिःस्व

नाणीव ॥२४॥

पिंडस्थे॥२४॥ विहाय कल्पनाजालं स्वरूपे निश्चलं मनः। यदाधत्ते तदैव स्यान्मुनेः परमसंव
॥२२॥ सकलसमतिमूलः संयमोद्दामकांडः प्रशमविपुलशाखो धर्मपुष्पावकीर्णः। अत्र
कलफलबंधैः बंधुरो भावनाभिर्जयति जितविपक्षः संवरोद्दाममहत्त्वः॥२४॥ संवरस्य यथा कृ
यंते बीजभूतानि जन्मनः। प्रणीताय मिभिः सेयं निर्जरा जीर्णबंधनैः॥१॥ सकामाका
ना द्विधा स्यात्सा शरीरिणां निर्जरा यमिनां पूर्वा ततोऽन्या सर्वदेहिनां॥२॥ पाकः स्वयमुपायाच्च
नांतरो येथा। तथात्र कर्मणां ज्ञेयः स्वयं सोपायलक्षणः॥३॥ विशुध्यति हुताशे
सदोषमपि कांचनं। यद्वत्तथैव जीवोऽयं तप्यमानस्तपोऽग्निना॥४॥ चमत्कारकारं धीरैर्ब्राह्य ॥२५॥

दि

ध्यात्मिकं तपश्चैतत्प्रोक्तं जन्मसंतानशंकिभिरार्यसूरिभिः ॥ तत्र बाह्यं तपः प्रोक्तमुपवासादि
षड्विधं ॥ प्रायश्चित्तादिभेदैस्तु तदंतरंगं च षड्विधं ॥ ६ ॥ निर्वेदपदवीं प्राप्य तपस्यंति यथा यथा । यमी
नः पतिकर्माणि दुर्जयाणि तथा तथा ॥ ७ ॥ ध्यानानलसमालीढमप्यनादिसमुद्भवं ॥ सद्यः
प्रक्षीयते कर्म शुद्ध्यत्यंगी सुवर्णवत् ॥ ८ ॥ तपस्तावद्बाह्यं चरति सुकृती पुण्यचरितस्ततश्चा
त्माधीनं नियतविषयं ध्यानपरमं ॥ क्षिपत्यंतर्लीनं चिरतरचितं कर्मपटलं ततो ज्ञानांभोधिं
विशति परमानंदनिलयं ॥ ९ ॥ निर्जरा ॥ पवित्रीक्रियते येन येनैवोद्ध्रियते जगत् ॥ नमस्तस्मै द
याद्रीय धर्मकल्पांघ्रिपाय वै ॥ १ ॥ दशलक्ष्मयुतः सोयं जिनैर्धर्मः प्रकीर्तितः ॥ यस्यांशमं

पिमेसेत्थं विदंति यमिनः श्रीवं ॥१२॥ ज्ञानसम्यगादितुंगाल्यं यक्त्वरूपं कुर्वंतिभिः ॥ हिंसाद
षकैः शास्त्रैर्रतस्तैस्तन्निगद्यते ॥१३॥ चिंतामणिर्निधिर्दिव्यः स्वर्द्धेनुः कल्पपादपाः ॥ धर्म
ते श्रिया सार्द्धमन्ये मन्येऽत्याश्चिरंतना ॥१४॥ धर्मो नरोरगाधीशनाकनायकवांछितां
पिलोकत्रयीपूज्यां श्रियं दत्ते शरीरिणां ॥१५॥ धर्मो व्यसनसंपाते पाति विश्वं चराचरं ॥ सुखा
मृतपयःपूरैः प्रीणयत्यखिलं जगत् ॥१६॥ पर्जन्यपवनार्केंदुधराबुधिपुरंदराः ॥ अमी वि
रेषु वर्त्तंते धर्मरक्षिताः ॥१७॥ मन्ये सौ लोकपालानां व्याजेनाव्याहतक्रमः ॥ जीवलो
पकारार्थं धर्म एव विजृंभितः ॥१८॥ नानं तत्रिजगतीमध्ये भुक्तिमुक्त्योर्निबंधनं ॥ प्राप्यते ध

सामर्थ्यान्नयद्यमितमानसैः॥२५॥ नमंतिपादराजीवराजिकांनतमौलयः धर्म्मकारणी
भूतचेतसांत्रिदशेश्वराः॥२६॥ धर्म्मो गुरुश्च मित्रंच धर्म्मः स्वामीच बांधवः॥ अनाथवत्सलः
सोयंसंत्राताकारणंविना॥२७॥ धत्ते नरकपाताले निमज्जज्जगतांत्रयं॥ योजयत्यपिधर्म्मोयंसौ
ख्यमत्यक्षमंगिनां॥२८॥ नरकांधमहाकूपे पततां प्राणिनां स्वयं॥ धर्म्मएव स्वसामर्थ्याद्दत्ते हस्त
वलंबनं॥२९॥ महातिशयसंपूर्णं कल्याणोद्दाममंदिरं॥ धर्म्मोददातिनिर्विघ्नं श्रीमत्सर्वज्ञ
वैभवं॥३०॥ याति सार्द्धं तथा पाति करोति नियतं हितं॥ जन्मपंकात्समुद्धृत्य स्थापयत्यमले
पथि॥३१॥ नधर्म्मसदृशः कश्चित्सर्वाभ्युदयसाधकः॥ आनंदकुजकंदश्च हितः पूज्यः शिव

ज्ञानार्णव प्रदः॥२६ व्यालानलगरव्याघ्रद्विपसिंहलराक्षसाः नृपादयोऽपि द्रुह्यंति न धर्माधिष्टिता

॥२६॥ २७ निःशेषं धर्मसामर्थ्यं न सम्यग्वक्तुमीश्वरः [illegible] स्फुरद्वक्त्रसहस्रेण भुजंगेशोऽपि

भूतले॥२८ धर्मो धर्मेति जल्पंति तत्त्वशून्याः कुदृष्टयः वस्तुतत्त्वं न बुध्यंते तत्परीक्षाक्षमा

२९ तितिक्षा मार्दवं शौचमार्जवं सत्यसंयमौ ब्रह्मचर्यं तपस्त्यागोऽकिंचित्यं धर्म उच्यते ३०

स्वस्यानिष्टं तत्तद्वाक्चित्तकर्मभिः कार्यं स्वप्नेऽपि नो परेषामिति धर्मस्याग्रिमं लिंगं॥३१॥

शर्म्म भुजंगपुंगवपुरीसारं विधातुं क्षमो धर्मः प्रापितमर्त्यलोकविपुलप्रीतिस्तदाशंसिनां।

धर्मः स्वर्नगरीनिरंतरसुखास्वादोदयस्यास्पदं धर्मः किं न करोति मुक्तिललनासंभोगयोग्य ॥२६॥

जनाः॥३४॥ यदि नरकनिपातस्त्यक्तुमत्यन्तमिष्टस्त्रिदशपतिमहर्द्धिं प्राप्तुमेकान्ततो वा॥ यदि च
रमपुमर्थः प्रार्थनीयस्तदानीं किमपरमभिधेयं नाम धर्म्मं विधत्त॥३५॥ धर्म्मश्लो॥ यत्र भावा वि
लोक्यन्ते ज्ञानिभिश्चेतनेतराः॥ जीवादयः स लोकः स्यात्ततोऽलोको नभः स्मृतं॥१॥ वेष्टितः पव
नैः प्रान्ते महावेगैर्महाबलैः॥ त्रिभिस्त्रिभुवनाकीर्णो लोकस्तालतरुस्थितिः॥२॥ निष्पादितः स
केनापि नैव नैवोद्धृतस्तथा॥ न भग्नः किं त्वनाधारो गगने स स्वयं स्थितः॥३॥ अनादिनिधनः
सोऽयं स्वयंसिद्धोऽप्यनश्वरः॥ अनीश्वरोऽपि जीवादिपदार्थैः संभृतो भृशं॥४॥ अधोवेत्रासनाका
रो मध्ये स्याज्झल्लरीनिभः॥ मृदंगसदृशश्चाग्रे स्यादित्थं स त्रयात्मकः॥५॥ एवैते जंतवः सर्व्वे नान

ज्ञानार्ण गतिषु संस्थिताः॥ उत्पद्यन्ते विपद्यन्ते कर्मपाशवशं गताः॥ द्वीपवनवलयमध्ये संवृतोऽत्यन्त

॥२३॥ दुःस्थितिजननविनाशालिंगितैर्वस्तुजातैः स्वयमिह परिपूर्णोऽनादिसिद्धः पुराणः कृति

लयविहीनः स्मर्यतामेष लोकः॥७॥ लोका॥ दुरन्तदुरिताराति पीडितस्य प्रतिक्षणं॥ कृच्छ्रान्न

पातालतलाज्जीवस्य निर्गमः॥ ततस्माद्यदि विनिःक्रान्तः स्थावरेषु प्रजायते॥ त्रसत्वम

तिप्राणी केनापि कर्मणा॥२॥ पर्याप्तस्तथा संज्ञी पंचाक्षोऽवयवान्वितः॥ ति

भवत्यंगी तन्न स्वल्पाशुभक्षयात्॥३॥ नरत्वं यद्गुणोपेतं देशजात्यादिलक्षितं॥ प्राणिनः प्रा

प्यते तन्मन्ये कर्मलाघवात्॥४॥ आयुः सर्वाक्षसामग्री बुद्धिः साध्वी प्रशान्तता॥ यत्स्यात्तत्काकता॥ ॥२३॥

लीयं मनुष्यत्वेपि देहिनां ॥१४॥ ततो निर्विषयं चेतो यमप्रशमवासितं । यदि स्यात्पुण्ययोगेन न
पुनस्तत्त्वनिश्चयः ॥१५॥ अपास्तं तडहोभिन्नं पुंदेवाद्यैर्न चेत्प्रियं कचित्तत्प्रमादात्प्रच्यवंते त्र केचि
त्कामार्थलालसाः ॥१६॥ धर्मागमाम साद्य केचिन्न सम्यग्जनत्रयात्मकं । त्यजन्ति गुरुमिथ्यात्वविष
व्यामूढचेतसः ॥१७॥ स्वयं नष्टो जनः कश्चित्कश्चिन्नष्टैश्च नाशितः । कश्चित्प्रच्यवते मार्गाच्चं
डपाषंडशासनैः ॥१८॥ त्यक्त्वा विवेकमाणिक्यं सर्वाभिमतसिद्धिदं । अविचारितरम्येषु पक्षेष्वज्ञः
प्रवर्त्तते ॥१९॥ शास्त्र विचारितरम्याणि शासनान्यसतां जनैः । अधमान्यपि सेव्यंते जिह्वोपस्था
दिदंडितैः ॥२०॥ प्राप्यापि चरणं पुंसां बोधिरत्नं भवार्णवे । हस्तान्नष्टं यथा रत्नं महामूल्यं महार्णवे ॥

नार्णव॰ ॥१९॥सुलभमिहसमस्तंवस्तुजातंजगत्यामुरगसुरनरेंद्रैःप्रार्थितंचाधिपत्यं।कुलबलसुभग
॥२८॥ मरामादिचान्यत्किमुततदिदमेकंदुर्लभंबोधिरत्नं॥२०॥बो॥धि॥दीव्यन्नाभिरयंज्ञानीभाव
आर्या
नाभिर्निरंतरं।इहैवाप्नोत्यनातंकंसुखमत्यक्षमव्ययं॥२१॥विध्यातिकषायाग्निर्विगलतिरा
लीयतेध्वांतं।उन्मिषतिबोधदीपोहृदिपुंसांभावनाभ्यासात्॥२२॥एताद्वादशभावनाःखलु
पवर्गश्रियस्तस्याःसंगमलालसैर्घटयितुंमैत्रीप्रयुक्ताबुधैः।एतासुप्रगुणीकृतासुनियत
मुक्त्यंगनाजायतेसानंदाप्रणयप्रसन्नहृदयायोगीश्वराणांमुदे॥२३॥इत्याचार्यश्रीशुभचंद्रविर
चितेज्ञानार्णवेयोगप्रदीपाधिकारेद्वादशभावनाप्रकरणंद्वितीयं॥२॥ ॥अस्मिन्ननादिसंसारे ॥२७॥

ते सारवर्जिते । नरत्वमेवं दुःप्राप्यं गुणोपेतं शरीरिभिः ॥ ३ ॥ काकतालीयकन्यायेनोपलब्धं यदि
त्वया । तत्तर्हि सफलं कार्यं कृत्वात्मन्यात्मनिश्चयं ॥ ४ ॥ नृजन्मनः फलं कैश्चित्पुरुषार्थः प्रकीर्त्ति-
तः ॥ धर्मादिकप्रभेदेन स पुनः स्याच्चतुर्विधः ॥ ५ ॥ धर्मश्चार्थश्च कामश्च मोक्षश्चेति महर्षिभिः
पुरुषार्थोयमुद्दिष्टश्चतुर्भेदः पुरातनैः ॥ ६ ॥ किंच ॥ त्रिवर्गं तत्र सापायं जन्मजातंकदूषितं । ज्ञात्वा
तत्त्वविदः साक्षाद्यत्नं ते मोक्षसाधने ॥ ७ ॥ निःशेषकर्मसंबंधपरिविध्वंसलक्षणः ॥ जन्मनः प्र-
तिपक्षो यः स मोक्षः परिकीर्त्तितः ॥ ८ ॥ दृग्वीर्यादिगुणोपेतं जन्मक्लेशैः परिच्युतं । चिदानंदमयं
साक्षान्मोक्षमात्यंतिकं विदुः ॥ ९ ॥ अत्यक्षं विषयातीतं निरौपम्यं स्वभावजं । अविच्छिन्नं सुखं

ज्ञानार्णव यत्र सम्मोदः परिपठ्यते॥४॥ निर्मलो निष्कलः शांतो निष्पन्नोऽत्यंतनिर्वृतः॥ कृतार्थः साधुबोधा

॥१२६॥ त्मा यत्रात्मा तत्पदं शिवं॥५॥ तस्यानंतप्रभावस्य कृते त्यक्ताखिलभ्रमाः॥ तपश्चरंत्य

सकारणं॥६॥ सम्यग्ज्ञानादिकं प्राहुर्जिना मुक्तेर्निबंधनं॥ तेनैव साध्यते सिद्धिर्यस्मात्त

र्थिभिः स्फुटं॥७॥ भवक्लेशविनाशाय पिब ज्ञानसुधारसं॥ कुरु जन्माब्धिमत्येतुं ज्ञानपोताव

नं॥८॥ मोक्षः कर्मक्षयादेव स सम्यग्ज्ञानतः स्मृतः॥ ध्यानसाध्यं मतं तच्च तस्मात्तद्धित

मात्मनः॥९॥ अपास्य कल्पनाजालं मुनिभिर्मोक्तुमिच्छुभिः॥ प्रशमैकपरैर्नित्यं ध्यानमेवाव

लंबितं॥१०॥ तथाप्या॥ त्यजाविद्यां भज स्वार्थं मुंच संगान् स्थिरीभव॥ यतस्ते ध्यानसामग्रीमा ॥१२६॥

कल्पानि राद्धान्ते॥२२॥उत्तितीर्षुर्महापंकाज्जन्मसंज्ञादुरुत्तरात्॥यदि किं न तदा यत्नैर्धैर्यमा
ने निरंतरं॥२३॥चित्ते तव विवेकश्रीर्यद्यशंका स्थिरी भवेत्॥कीर्त्यते तदा ध्यानलक्षणं स्वांतशुद्धि
दं॥२४॥इयं मोहमहानिद्रा जगत्त्रयविसर्पिणी॥यदि क्षीणा तदा क्षिप्रं पिव ध्यानसुधारसं॥२५॥
बाह्यान्तर्भूतनिःशेषसंगमूर्च्छा क्षयं गता॥यदि तत्त्वोपदेशेन ध्याने चेतस्तदार्पय॥२६॥प्रमाद
विषमग्राहदंतयंत्राद्यदि च्युतः॥त्वं तदा क्लेशसंघातघातकं ध्यानमाश्रय॥२७॥दीक्षमेनं तन्मसासारभ
सैकपरायणाः॥यदि रागादयः क्षीणास्तदा ध्यातुं विचेष्टतां॥२८॥यदि संवेगनिर्वेदविवेकैर्वासि
तं मनः॥ तदा धीर स्थिरीभूय स्वस्मिन्स्वांतं निरूपय॥२९॥विरज्य कामभोगेषु विमुच्य वपुषि

हं॥ निर्ममत्वं यदि ज्ञानस्तदा ध्याता सिनान्यथा॥१९॥ निर्विण्णोसि यदि भ्रान्त दुरन्ताज्जन्मसं

॥२०॥ मात् स्वादधीरपरो ध्यानधुरां धैर्येण धारय॥२०॥ अमुना त्याकर्णितं चेतो दक्षैः शिवमनुष्ठितं

न तत्र मिदं धीर धन्ययोगीन्द्रगोचरं॥२१॥ विस्तरेणैव तुष्यंति केप्यहो विस्तरप्रियाः संक्षेपरुचय

विचित्रा श्चित्तस्य नयः॥२२॥ अस्या संक्षेपरुचिभिः सूत्रान्निरूप्यं मनिश्चयात्॥ त्रिधैवाभिमतं

श्चित्तौ जीवाशयस्त्रिधाः॥२३॥ त्रिधातावत् तत्र पुण्याशयः पूर्वस्तद्विपक्षोशुभाशयः

पयोग संज्ञोय॥२४॥ स नृत्ती यत्र कीर्तितः॥२५॥ धर्मपुण्यंस्ययच्छुद्धान्तं शुद्धलेश्यावलंबनात्॥ चिं

ह्नं स्तत्तत्त्वस्य प्रशस्तं ध्यानमुच्यते॥२६॥ पापाशय वशान्मोहान्मिथ्यात्वाद्वस्तुविभ्रमा ॥२७॥

ज्ञानार्णवा लयं ॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपकाधिकारे संक्षेपतो ध्यानलक्ष

।२२।। चतुर्विधं ॥ ॥तद्यथा॥ ॥पञ्चतुर्धा मतं तज्ज्ञैः क्षीणमोहैर्मुनीश्वरैः ॥ सूत्रे प्रकीर्णकात्

ध्यानलक्ष्म सविस्तरं ॥ शक्यते ज्ञातुमपि तस्मान्न कश्चिद्वक्तुमीश्वरः ॥ तद्देशसिद्ध्यैदि-

त्रमिहं वर्ण्यते ॥ अन्वयव्यतिरेकाभ्यां गुणदोषैः प्रपंचितं ॥ हेयोपादेयभावेन सविक-

गद्यते ॥ ध्याता ध्यानमितः स्तदंगमखिलं दृग्बोधवृत्तान्वितं ॥ ध्येयं तद्गुणदोषलक्षणयुतं

मानिंकालं फलं ॥ एतत्सूत्रमहार्णवात्समुद्धितं यत्स्याक्षरणात्तं बुधैस्तत्सम्यक्परिभावयं-

तु निपुणाः श्रेयोर्थिनः ॥ क्रमात् ॥ ध्याता ध्यानं तथा ध्येयं फलं चेति चतुष्टयं ॥ इति सूत्रसमा ॥ ।२२।।

मनोयं ...

सनंमधिकल्पं निगद्यते ॥५॥ मुमुक्षुर्जन्मनिर्विण्णः शांतचित्तो वशी स्थिरः ॥ जिताक्षः संवृतो धीरो
ध्याता शास्त्रे प्रशस्यते ॥६॥ तद्यथा ॥ उदीर्णकर्मेंधनसंभवेन दुःखानलेनातिकदर्थ्यमानं दंद
ह्यते विश्वमिदं समंतात् प्रमादमूढं च्युतसिद्धिमार्गं ॥७॥ दह्यमाने जगत्यस्मिन् महता मोहवह्निना
४८ प्रमादमुत्सृज्य निःक्रांता योगिनः परे ॥८॥ न प्रमादजयं कर्तुं धीधनैरपि पार्यते महाव्यसनसंकीर्णे
गृहवासेऽतिनिंदिते ॥९॥ शक्यते न वशीकर्तुं गृहिभिश्चपलं मन ॥ अतश्चित्तप्रशांत्यर्थं सद्भिस्त्य
क्ता गृहे स्थितिः ॥१०॥ प्रतिक्षणं द्वंद्वशतार्त्तचेतसां नृणां दुराशाग्रहपीडितात्मनां ॥ नितंबिनीलो
चनचौरसंकटे गृहाश्रमे न स्वात्मनो हितं ॥११॥ निरंतरार्त्तानलदाहदुर्गमे कुवासनाध्वांत

जि

विलुप्तलोचने॥ अनेकचिंताज्वरजिह्मितात्मनां नृणां गृहे स्वात्महितं न सिध्यति॥९॥ विपन्महापं
कनिमग्नबुधयः प्ररूढरागज्वरयंत्रपीडिताः॥ परिग्रहव्यालविषाग्निमूर्छिता विवेकवीथ्यां गृ
हिणः स्खलंत्यमी॥१०॥ अहिताहितविमूढात्मा स्वं शश्वद्वेष्टयेद्गृही॥ अनेकारंभजैः पापैः कोश
मिर्यथा॥११॥ शक्याजेतुं जन्मजातंकं नापि रागाद्यरिपताकिनी॥ विना संयममंत्रेण न सिद्धिरपि शाकयते॥
प्रचंडपवनैः प्रायश्चाल्यंते यत्र भूभृतः॥ तत्रांगनादिभिः स्वांतं निसर्गतरलं न किं॥१३॥ खपुष्पम
थवा शृंगं खरस्यापि प्रतीयते॥ न पुनर्देशकालेपि ध्यानसिद्धिर्गृहाश्रमे॥१४॥ चतुर्दशांगमपि नध्या
सिद्धिस्वप्नेपि जायते॥ गृह्णतां हेतुवैकल्याद्वस्तुजा तं यदृच्छया॥ सामान्यसिद्धिर्येति त्वैपि ॥१५॥

त्पाषंडिनां क्वचित्॥ पूर्वापरविरुद्धार्थमतसत्तावलंबिनां॥१७॥ किंच पाषंडिनः सर्वे सर्वथै
कांतदूषिताः॥ अनेकांतात्मकं वस्तु अभवंति न वेदितुं॥१८॥ नित्यतां केचिदाचख्युः केचिच्चा
नित्यतां खलाः॥ मिथ्यात्वान्नैव पश्यंति नित्यानित्यात्मकं जगत्॥१९॥ वस्तुतत्त्वापरिज्ञानात्॥
किं ध्येयं क्व च भावना॥ ध्यानाभ्यासस्ततस्तेषां क्रियासार्थैव केवलं॥२०॥ उक्तं च॥ ज्ञानमाश्रीतेत्र
तं क्रियाविदां वादिनां प्रचंडानां॥ चतुरधिकाशीतिरपि प्रसिद्धमहसां विपक्षाणां॥२१॥ अथ षष्टि
ज्ञानविदां सप्तसमेतानां प्रसिद्धबोधानां॥ द्वात्रिंशद्वैनयिका भवंति सर्वे प्रवादविदः इति॥२२॥
नादेवैः प्रसिद्धिर्याः तत्तोन्यः ज्ञानस्वविस्तरः प्रमुक्तो कृतमतैर्बीजं किंज्ञानं ज्ञानवादिभिः॥२३॥ पूर्वके

नाणिक

तैता मुक्तिहेतुर्ज्ञानादेवकेवलाद्वादिनां खलु मतेष्वेषामेषा कृत्यनयोंतरं ।२३। अथान्ये तु

।२४।। मैक्यं मुक्त्यंगं परिकीर्तितं । आपस्यंदत्रो न ज्ञानेन तत्कार्यं विफलश्रमः ।२४। विज्ञानादित्रिवेदो

स्मिन हेतुहेतु इष्टे तथापरैः स्वसिद्धांताचलेभ्ये न जन्मसंततिसाततेनः ।२५। एकैकं च त्रिभिर्न्निष्टं द्वे द्वे

तथापरैः । त्रयं न रुचयेनां स्यमतैनैते दुर्दुरुः स्मृताः ।२६। उक्तं हि । ज्ञानहीना क्रिया पुंसि परं ना

भते फलं । तरोश्छायेव किं लभ्या फलश्रीर्नष्टदृष्टिभिः ।२७। ज्ञानं पंगौ क्रिया चांधे निश्रद्धे १८

यं तत्तौ ज्ञानं क्रियाश्रद्धात्रयं तत्पदकारणं ।२८। हतं ज्ञानं क्रियाशून्यं हता चाज्ञानिनः क्रि

या । धावन्नप्यंधको नष्टः पश्यन्नपि च पंगुकः ।२९। इति ।। कारकादिक्रमो लोके व्यवहारश्च जायते नप

ते न्विष्यमाणोऽपि सद्भिः श्रेयः कोत्तवादिनां ॥२३॥ उक्तं च ॥ इदं फलमियं क्रिया करणमेतदेष क्रमो व्य-
योऽयमनुषंगजं फलमिदं दशेयं मम । अयं सुहृदयं द्विषत्प्रयतदेशकालाविमाविति प्रति-
वितर्कयन् प्रयतते बुधो नेतरः ॥२४॥ इति ॥ यस्य प्रज्ञा स्फुरत्युच्चैरनेकांतेष्वकतन्त्रमाध्यान
सिद्धिर्द्धीनिश्चेयानस्य साध्वी महात्मनः ॥२५॥ ध्याने तत्रैव निषेध्यंते नैते मिथ्यादृशः परं मुनयोऽपि
जिनेशाज्ञाप्रत्यनीकाश्चलाशयाः ॥२६॥ योगपतानेयतित्वेऽपि येषां ध्यातुमिहत्रणं अन्विष्यं लि-
गमेतेषां सूत्रसिद्धं न गद्यते ॥२७॥ तथा ॥ यत्कर्मणि न तत्काचिवाचियत्तन्निचेतसि यत्तेये स्य-
संविधानपदवीमध्येरोहति ॥२८॥ पासंगेनापि महत्त्वे येमन्यंते स्वम्पलाघवा । परेषां संगवैकल्या-

नारीष॥ कुर्वेवं विचिंता:॥३॥ एणाक्ष्यं यमधुरां हृत्वा नुंच्छ्रतीले मंदेऽक्षते शल्पक्तायैः साध्वतस्थैर्यैर्ध्यात्वै

॥२४॥ ऊर्ध्वातन्मन:॥४॥ कीर्तिपूजाभिमानार्त्ता लोकयात्रानुरंजितै:॥ बोधचक्षुर्विलुप्तायैस्तेषां ध्या

वमितं

याऽपता॥५॥ क्रोशः करणग्रामस्यार्थे॥ मिथ्यात्वविषमूर्छितैः॥ निष्पूतं यैर्न निःशेषं नतैस्तत्वं प्रमीय

॥६॥ रागादि:स्वमत्वादर्थकाल:कार्यसिद्धिर्नसाधका:॥ युक्त्वा स्वस्य चान्येषां केचिद्ध्यानं मिषि

॥७॥ संदह्यति मतिस्तत्वे यस्य कामार्थलालसा॥ चित्तलुब्धान्यसिद्धं तैस्सकथं ध्यातुमर्हति॥८

सर्गोत्र यत्लेचेतो नास्ति कैर्विचित्ताविते॥ स्याद्वाक्यं कथं ध्यानपरिखायोधमानवेतां॥९॥ कांट

मुखा:पंचभावनारागरंजिता॥ येषां हृदि पदं चक्रुः क्वतेषां वस्तुनिश्चयं॥१०॥ दीकादष्यिके ॥२४॥

त्विषीं चैवं भावनां चाभियोगिकीं दानवीं च सम्मोहीं स्पाज्यां पंचतयीं च सा ॥ ४३ ॥ तां तुरिरसित

आर्यं येषां वृत्तं त्रपाकरां तेषां स्वप्नेपि सद्धान सिद्धिर्नैवोपजायते ॥ ४४ ॥ अनिरुद्धं दसंतानां अ

जितां ग्रपरीषहां अत्यक्त चित्तचापल्याः अमत्वलं त्यां त्मनिश्चये ॥ ४५ ॥ अनासादित निर्वेद

अविद्याव्याधवंचिता अमंद छिंत संवेगा न विदं ति परं पदं ॥ ४६ ॥ न चेतः करुणाक्रांतं न च

विज्ञान वासितं विरक्तं च न भोगे भ्यो यस्य ध्यातुं न सत्तम ॥ ४७ ॥ लोकानुरंजकैः पापैः कर्मभि

र्विरचैश्रिता अरंजित निजस्वांता अनार्था ग्रहनेरता ॥ ४८ ॥ अनुकृत्य मनः शल्या अकृता

ध्यात्म निश्चया अभिन्न भाव कुर्हैश्चैपां निषिद्धं ध्यान साधने ॥ ४९ ॥ अनर्म कौतुक कौटिल्य पा

नाणेव पसूत्रोपदेशकाः ॥ अज्ञानकुष्टजीर्णानां मोहनिद्रास्तचेतनाः ॥ प्रभात्वनुद्युक्तास्तपःकर्तुं विषय

॥२५॥ ग्रासलालसाः ॥ समेगासंकिताभीतामन्येमीदेववंचिताः ॥ प्रताते त्रणीकृतस्वार्था मुक्तिश्रीसं

निस्पृहाः ॥ अभवंति न धर्मानामन्वेषितुमपि क्षणाः ॥ पृथ्वी पापाभिचारकर्माणि मातर्द्विरसलंप

ःक्रियंते धर्ममर्माणि ह्याहंतं ते स्वजीविते ॥ पुत्र ॥ तथाहा ॥ वश्यपाकर्षणविद्वेषोमारणोच्चाटनंत

॥ जलानलविषस्तंभा रसकर्मरसायनं ॥ पुरक्षोभेंद्रजालं च बलस्तंभो जयाजयौ ॥ विद्या

स्तथा बंधं ज्योतिर्ज्ञानं चिकित्सितं ॥ यक्षिणीमंत्रपातालसिद्धयः कालवंचनां ॥ पादु

जेन निस्कृशाभूतभेर्गीज्ञसाधनां ॥ द्रष्टत्यादिविक्रियाकर्माणि जित्वैर्दुष्टचेष्टितैः ॥ अत्रात्मानमपि ॥२५॥

न ज्ञातं न दृष्टं लोकहृदयं चैतैः॥६०॥ यद्यति त्वं जीविनोपायं कुर्वतः किं न लज्जिताः॥ मातुः पणमिवालंब्य यथा केचिन्न
त घृणाः॥६१॥ निस्त्रपाः कर्म कुर्वंति यतित्वेप्यति निंदितं॥ ततो विराध्य सन्मार्गं विपतंति नरकोदरे॥६२॥ अविद्या
श्रयणं युक्तं प्राग्गृहावास्थितैर्वरं॥ मुक्तं गोलिंगमादाय न श्लाघ्यं लोकदंभनं॥६३॥ मनुष्यत्वं समासाद्य यतित्वं च
जगन्नुतं॥ हेयमेवाशुभं कर्म विवेच्य स्वहितं बुधैः॥६४॥ अहो विभ्रांतचित्तानां पश्यपश्य पुंसां विचेष्टितं॥ यत्प्रपंचैर्यति
पिनीयते जन्म निःफलं॥६५॥ उक्तं च॥ भुक्ताः श्रियः सकलकामदुघास्ततः किं संतर्पिताः प्रणयिनः स्वधनैस्ततः
किम्॥ न्यस्तं पदं शिरसि विद्विषतां ततः किं कल्पं स्थितं तनुभृतां तनुभिस्ततः किम्॥६६॥ इत्थं न किंचिदपि साध
न साध्यमस्ति स्वप्नेंद्रजालसदृशं परमार्थशून्यं॥ तस्मादनंतमजरं परमं विकाशि तद्ब्रह्म वांछत जना यदि चेतनास्ति॥६७॥

ते संति न कोरि पूर्वोपि सुधियः स्फारैर्वचोभिः परं ये वार्तां प्रथयंत्यमेयमहसो रात्रौ परब्रह्मणः । तत्रानंदसु
रवतिपुनर्निर्मज्यमुंचंति ये संतापं भवसंभवं त्रिचतुरास्ते संति वा नात्र वा ॥८८॥ एते पंडितमानिनः प्रामयम
स्वाध्यायचिंताच्युताः रागादिग्रहवंचिता यतिगुणप्रध्वंसकृष्णाननाः । व्याकृष्टा विषयैर्मदैः प्रमुदिताः शं
काभिरंगीकृता न ध्यानं न विवेचनं न च तपः कर्तुं वराकाः क्षमाः ॥८९॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञा
नार्णवे योगप्रदीपाधिकारे गुणदोषविचारः ॥१॥ अथ निर्णीततत्त्वार्था धन्याः संविग्नमानसाः । कीर्त्यंते
नो जन्मसंभूतसुखनिःस्पृहाः ॥१॥ भवभ्रमणनिर्विण्णाः भावशुद्धिं समाश्रिताः । संति केचिच्च भूपृष्ठे योगिन
पुण्यचेष्टिताः ॥२॥ तद्यथा ॥ विरज्य कामभोगेषु विमुच्य वपुषि स्पृहां । यस्य चित्तं स्थिरीभूतं स हि ध्याता प्रश

असत्संयममधुराधीरैर्नहिप्राणात्ययेपियैः। त्यक्तामहत्वमालंब्यतेहिध्यानधनेश्वराः॥४॥ परीषहमहाव्याले
ग्रीष्मैर्वाक्कूटकैर्दृढैः॥ मनागपिमनोयेषांनस्वरूपात्परिच्युतं॥५॥ क्रोधादिभीमभोगीद्रैरागादिरजनीचरैः॥
अजय्यैरपिविध्वस्तंनयेषांयमजीवितं॥६॥ मनःप्रीणयितुंयेषांक्षमास्तादिव्ययोषितः॥ मैत्र्यादयःसतांसेव्यांब्र
ह्मचर्य्येप्यनिंदिते॥७॥ तपस्तरलतीव्रार्च्चिःप्रचयेपातितःस्मरः॥ येरागरिपुभिःसार्द्धंपतंगप्रतिमीकृतः॥८॥
निःसंगत्वंसमासाद्यज्ञानराज्यंसमीप्सितं॥ जगत्त्रयचमत्कारिचित्रभूतंचचेष्टितं॥९॥ प्रत्युग्रतपसात्मानंपी
डयंतोपिनिर्द्दयं॥ जगद्विध्यापयंत्युच्चैर्येमोहदहनक्षतं॥१०॥ स्वभावजनिरातंकनिर्भरानंदनंदिताः॥ तृष्णार्चिः
प्रांतयेधन्यायेकालजलदोद्गमाः॥११॥ अशेषसंगसंन्यासवशाज्जितमनोद्विजाः॥ विषयोद्दाममातंगघट

घट्टघातकाः॥२॥वाक्पथातीतमाहात्म्याविश्वविद्याविशारदाः॥शरीराहारसंसारकामभोगेषुनिस्पृहाः॥३॥
विशुद्धबोधपीयूषपानपुण्यीकृताशयाः॥स्थिरेतरजगज्जंतुकरुणावारिवार्द्धयः॥४॥स्वर्णाचलइवाकंपा
तिष्पथइवामलाः॥समीरइवनिःसंगानिर्ममत्वंसमाश्रिताः॥५॥हितोपदेशपर्जन्यैर्भव्यसारंगतर्पकाः॥
निरपेक्षाशरीरेपिसापेक्षाःसिद्धिसंगमे॥६॥इत्यादिपरमोदारपुण्याचरणलक्षिताः॥ध्यानसिद्धेःसमा
पात्रंमुनिमहेश्वराः॥७॥तवारोढुंप्रवृत्तस्यमुक्तेर्भवनमुन्नतं सोपानराजिकामीषांपदछायाभविष्यति॥८
॥नसिद्धिर्मतासूत्रेमुनीनामेवकेवलं॥इत्याद्यमलविख्यातगुणलीलावलंबिनां॥९॥निष्पंद
डविहगाःपंचाक्षकक्षांतकाःध्यानध्वस्तसमस्तकल्मषविषाविद्याम्बुधेःपारगाः॥लीलोन्मूलितकर्म

निचयाः कारुण्यपुण्याश्रया योगींद्रा भवभीमदैत्यदलनाः कुर्वंतु ते निर्वृतिम् ॥२०॥ विंध्याद्रिर्नगरं गुहा वसति
का शय्या शिला पार्वती दीपश्चंद्रकरा मृगाः सहचरा मैत्री कुलीनांगना ॥ विज्ञानं सलिलं तपः सदशनं येषां प्र
शांतात्मनां धन्यास्ते भवपंकनिर्गमपथप्रोद्देशकाः संतु नः ॥२१॥ रुद्धे प्राणप्रचारे वपुषि नियमिते संवृतेऽक्ष
प्रपंचे नेत्रस्पंदे निरस्ते प्रलयमुपगते तद्विकल्पेंद्रजाले ॥ भिन्ने मोहांधकारे प्रसरति महसि क्वापि विश्वप्रदीपे
धन्यो ध्यानावलंबी कलयति परमानंदसिंधुप्रवेशं ॥२२॥ अहेयोपादेयं त्रिभुवनमपीदं व्यवसितं शुभं वा द
पापं वा द्वयमपि दहत्कर्म महसा ॥ निजानंदास्वादव्यवधिविधुरीभूतविषयः प्रतीत्योच्चैः कश्चिद्विगलि
तविकल्पं विहरति ॥२३॥ दुःप्रज्ञाबललुप्तवस्तुनिचया विज्ञानशून्याशया विद्यंते प्रतिमंदिरं निजनिजस्वार्थो

ध्याता देहिनः॥ आनंदामृतसिंधुशीकरचयैर्निर्वाप्य जन्मज्वरं॥ ये मुक्तेर्वदनेंदुवीक्षणपरास्ते संति द्वित्रा यदि॥
ध्री॥ यैः शुभ्रंहिमशैलशृंगसुभगप्रासादगर्भांतरैः पल्यंके परमोपधामरचिते दिव्यांगनाभिः सहा तैरैवाद्यनि
विश्लविषयैरंतःस्फुरज्ज्योतिषि क्षोणीरंध्रशिलादुकोटरगतैर्धन्यैर्निशा नीयते॥२५॥ चित्ते निश्चलतां
विकल्पे
शमिते रागाद्यविद्यामये विश्रांतेक्षकदंबके विघटिते ध्वांते भ्रमारंभके॥ आनंदे प्रविजृंभिते पुरपतेर्ज्ञाने समु
लिते त्वां द्रक्ष्यंति कदा वनस्थमभितः पुस्ताशया श्वापदाः॥२६॥ आत्मन्यात्मप्रचारैकृतसकलबहिःसं
न्यासवीर्याद्दंतर्ज्योतिः प्रकाशाद्विलयगतमहामोहनिद्रातिरेकः॥ निर्णीते स्वस्वरूपे स्फुरति जगदिदं य
न्यं जडं वा तस्य श्रीबोधवार्द्धेर्दिशतु तव शिवं पादपंकेरुहश्रीः॥२७॥ दृश्यंते भुवि किं न ते कृतधियः संख्याव्यती

श्रियं येलीलां परमेष्ठिनः प्रदिनं तन्वंति वाग्निःपरांतं साक्षादनुभूय नित्यपरमानंदांबुराशौ पुनर्ये जन्मश्रममुत्सृजंति

पुरुषा धन्यास्तु ते दुर्लभाः॥२०॥ आत्मायत्तं विषयविरतं तत्वचिंताविलीनं निर्व्यापारं स्वहितनिरतं निर्वृतानंदपूर्णं

ज्ञानारूढं शमयमतपोध्यानलब्धावकाशं कृत्वात्मानं कलय सुमते दिव्यबोधाधिपत्यं॥२१॥ इत्याचार्यश्रीशु

भचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे योगप्रशंसाकरणं॥१॥ सुप्रयुक्तैः स्वयं साक्षात्सम्यग्दृग्बोधसंय

मैः॥ त्रिभिरेवापवर्गश्रीर्घनाश्लेषं प्रयच्छति॥२॥ तैरेव हि विशीर्यंते विचित्राणि बलान्यपि॥ दृग्बोधसंयमैः कर्म

निगडानि शरीरिणां॥३॥ त्रिशुद्धिपूर्वकं ध्यानमामनंति मनीषिणः॥ व्यर्थस्यात्तामंतरासाद्य तदेवात्र शरीरिणां

॥४॥ रत्नत्रयमनासाद्य यः साक्षात् ध्यातुमिच्छति॥ खपुष्पैः कुरुते मूढः स वंध्यासुतशेखरं॥५॥ तत्वरुचिः सम्यक्त्वं

॥ज्ञानार्णव॥ तत्वप्रख्यापकं भवेज्ज्ञानं पापक्रियानिवृत्तिश्चारित्रमुक्तं जिनेंद्रैः ॥१॥ तत्रादौ सम्यग्दर्शनं तावत् ॥ तद्यथा ॥ य

॥२५॥ वादिपदार्थानां श्रद्धानं तद्धि दर्शनं ॥ निसर्गेणाधिगत्या वा तद्भव्यस्यैव जायते ॥२॥ क्षीणप्रशांतमिश्रासु

तेषु क्रमात् ॥ तस्या द्रव्यादिसामग्र्यां पुंसां सद्दर्शनं त्रिधा ॥३॥ उक्तं च ॥ भव्यः पर्याप्तकः संज्ञी जीवः पंचेंद्रिया

न्वितः ॥ काललब्ध्यादिना युक्तः सम्यक्त्वं प्रतिपद्यते ॥५॥ सम्यक्त्वमथ तत्वार्थश्रद्धानं परिकीर्तितं ॥ तस्यौप

मिको भेदः क्षायिको मिश्र इत्यपि ॥६॥ सप्तानां प्रशमात्सम्यक्क्षयादुभयतोपि च ॥ प्रकृतीनामिति प्रा

त्रैविध्यं सुमेधसः ॥७॥ एकं प्रशमसंवेगदयास्तिक्यादिलक्षणं ॥ आत्मनः शुद्धिमात्रं स्यादितरच्च समंततः ॥८॥

॥इति॥ द्रव्यादिकमथासाद्य तज्जीवैः प्राप्यते क्वचित् ॥ पंचविंशतिमुत्सृज्य दोषांस्तच्छक्तिघातकान् ॥९॥ जी ॥२५॥

जीवाश्रवाबंधः संवरो निर्जरा तत्तः ॥ मोक्षश्चैतानि सप्तैवं तत्वान्यूचुर्मनीषिणः ॥१४॥ तद्यथा ॥ अनंतः सर्वदा
सर्वेजीवराशिर्द्विधास्थितः ॥ सिद्धेतरविकल्पेनत्रैलोकभवनोदरे ॥१५॥ सिद्धस्त्वेकः स्वभावः स्यात्दृग्बोधा
नंतशक्तिमान् ॥ मृत्यूत्पत्त्यादिजन्मोत्थक्लेशप्रचयविच्युतः ॥१६॥ चरस्थिरभवोद्भूतविकल्पैः कल्पिताः पृथ
क् ॥ भवंत्यनेकभेदास्ते जीवाः संसारवर्तिनः ॥१७॥ पृथिव्यादिविभेदेनस्थावराः पंचधामताः ॥ त्रसास्त्वनेकभे
दास्ते नानायोनिसमाश्रिताः ॥१८॥ चतुर्द्धागतिभेदेनभिद्यंतेप्राणिनः परं ॥ मनुष्यामरतिर्यंचो नारकाश्चयथा
यथं ॥१९॥ भ्रमंति नियतं जन्मकांतारे कश्मलाप्रायाः ॥ दुरंतकर्मसंपातप्रपंचवशवर्तिनः ॥२०॥ किंतुतिर्यग
तावेवंस्थावराविकलेंद्रियाः ॥ असंज्ञिनश्चनान्यत्र प्रभवंत्यंगिनः क्वचित् ॥२१॥ उपसंहारविस्तारधर्माद्दृग्बोध

लांछनः॥कर्त्ता भोक्ता स्वयं जीवस्तनुमात्रोप्यमूर्त्तिमान्॥२२॥कृतं छ॥तत्र जीवत्यजीवच्च जीविष्यति सचेतनः॥
यस्मात्तस्माद्बुधैः प्रोक्तो जीवस्तत्त्वविदांवरैः॥२३॥एको द्विधा त्रिधा जीवश्चतुःसंक्रांतिपंचमः॥षट्क्रमः
गोऽष्टाश्रवो नवदप्राःस्थितिः॥२४॥भव्याभव्यविकल्पोयं जीवराशिर्निसर्गजः॥मतः पूर्वोपवर्गायजन्मपं
चेतरः॥२५॥सम्यग्ज्ञानादिरूपेण ये भविष्यंति जंतवः॥प्राप्यं द्रव्यादिसामग्रीं ते भव्या मुनिभिर्मताः॥२६॥प्रंधपा
णकल्पं स्यादभव्यत्वं शरीरिणां॥यस्माज्जन्मशतेनापि नात्मतत्त्वं पृथग्भवेत्॥२७॥अभव्यानां स्वभावेन सर्व
न्मसंक्रमः॥भव्यानां भावनी मुक्तिर्निःशेषदुरितक्षयात्॥२८॥यथा धातोर्मलैः सार्द्धं संबंधोनादिसंभवः॥त
लेज्ञेयः संबंधोनादिदेहिनां॥२९॥द्वयोरनादिसंसारः सांतः पर्यंतवर्जितः॥वस्तुस्वभावतो ज्ञेयो भव्या

व्यां गिनोः क्रमात् ॥२०॥ चतुर्दशसमासेषु मार्गणासु गुणेषु च ॥ ज्ञात्वा संसारिणो जीवाः श्रद्धेयाः शुद्धदृष्टिभिः ॥२१॥
॥ जीवः ॥ धर्माधर्मनभःकालाः पुद्गलैः सह योगिभिः ॥ द्रव्याणि षट् प्रणीतानि जीवपूर्वाण्यनुक्रमात् ॥२२॥ तत्र जीवा
दयः पंच प्रदेशप्रचयात्मकाः ॥ कायाः कालं विना ज्ञेया भिन्नप्रकृतयोऽप्यमी ॥२३॥ ऽचिद्रूपा विना जीवममूर्ताः पु
द्गलं विना ॥ पदार्था वस्तुतः सर्वे स्थित्युत्पत्तिव्ययात्मकाः ॥२४॥ ऽप्यणुस्कंधविभेदेन भिन्नाः स्युः पुद्गला द्विधा ॥
मूर्ता वर्णरसस्पर्शगुणोपेताश्च रूपिणः ॥२५॥ किं चैतत्पुद्गलद्रव्यं षड्विकल्पं बुधैर्मतं ॥ स्थूलस्थूलादिभेदेन सू
क्ष्मसूक्ष्मेण च क्रमात् ॥२६॥ प्रत्येकमेकद्रव्याणि धर्मादीनि यथायथं ॥ आकाशांतान्यमूर्तानि निःक्रियाणि स्थि
राणि च ॥२७॥ स लोकगगनव्यापी धर्मः स्याद्गतिलक्षणः ॥ तावन्मात्रोऽप्यधर्मोयं स्थितिलक्ष्मा प्रकीर्तितः ॥२८॥ स्वयं गं

तुंप्रवृत्तेषुजीवाजीवेषुसर्व्वदा॥धर्मोयंसहकारीस्याज्जलंयादोगिनामिव॥३०॥यदत्तेस्थितिंप्रपन्नानांजीवादी
यंस्थितिम॥ऽधर्मःसहकारित्वाद्यथाछायाध्ववर्तिनाम॥३१॥ऽवकाशप्रदंव्योमसर्व्वगंस्वप्रतिष्ठितं॥लो
लोकविकल्पेनतस्यलक्ष्मप्रकीर्तितं॥३२॥लोकाकाशप्रदेशेषुयेभिन्नाःऽणवःस्थिता॥परिवर्ताय
मुख्यःकालःसवर्णितः॥३३॥समयादिकृतंयस्यमानंज्योतिर्गणाश्रितं॥व्यवहाराभिधःकालःसकाल
प्रपंचितः॥३४॥यदमीपरिवर्ततिपदार्थाविश्ववर्तिनः॥नवजीर्णादिरूपेणतत्कालस्यैवचेष्टितं॥३५॥भाविनो
मानत्वंवर्तमानास्त्वतीततां॥पदार्थाःप्रतिपद्यंतेकालकेलिकदर्थिताः॥३६॥धर्माधर्मनभःकालाऽ
गोचराः॥अंजनाख्यस्यसंबंधोद्धावन्योजीवपुद्गलौ॥३७॥भावाःपंचैवंजीवस्यद्धावन्यौपुद्गलस्यच॥धर्मादीनां

शेषाणां स्याद्भावः पारिणामिकः ॥४६॥ अन्योन्यसंक्रमोत्पन्नो भावः स्यात्सान्निपातिकः ॥ षड्द्रव्यभेदभिन्नात्मा स
षष्ठो मुनिभिर्मतः ॥४७॥ धर्माधर्मैकजीवानां प्रदेशा गणनातिगाः ॥ कियंतोपि न कालस्य व्योम्नः पर्यंतवर्जिताः ॥
४८॥ एकादयः प्रदेशाः स्युः पुद्गलानां यथायथं ॥ संख्यातीतास्त्वसंख्येया अनंता योगिकल्पिताः ॥४९॥ मूर्तीव्यं
जनपर्यायो वाग्गम्यो नश्वरः स्थिरः ॥ सूक्ष्मः प्रतिक्षणध्वंसी पर्यायश्चार्थसंज्ञकः ॥५०॥ अजीवः ॥ प्रकृत्यादिवि
कल्पेन ज्ञेयो बंधश्चतुर्विधः ॥ ज्ञानावृत्यादिभेदेन सोष्टधा प्रथमः स्मृतः ॥५१॥ मिथ्यात्वाविरतियोगाः कषायाश्च
यथाक्रमात् ॥ प्रमादैः सह पंचैते विज्ञेया बंधहेतवः ॥५२॥ उत्कर्षणापकर्षणस्थितिर्या कर्मणां मता ॥ स्थितिबंधः
स विज्ञेय इतरस्तत्फलोदयः ॥५३॥ परस्परप्रदेशानुप्रवेशो जीवकर्मणोः ॥ यः संश्लेषः स निर्दिष्टो बंधो विध्वस्तबंधनैः ॥
॥५४॥

प्रागेवं भावनात्रत्रे निर्ज्जराश्रवसंवराः॥ कथिताः कीर्तयिष्यामि मोक्षमार्गं सहेतुकं॥४॥ एवं द्रव्याणि तत्वानि
पदार्थान् कायसंयुतान्॥ यः श्रद्धत्ते स्वसिद्धांतात् स स्यान्मुक्तेः स्वयंवरः॥५॥ इति जीवादयो भावा दिग्मात्रेणा
र्णिताः॥ विशेषरुचिभिः सम्यक् विज्ञेयाः परमागमात्॥६॥ सद्दर्शनमहारत्नं विश्वलोकैकभूषणं॥ मुक्तिप
ल्याणदानदक्षं प्रकीर्तितं॥७॥ चरणज्ञानयोर्बीजं यमप्रशमजीवितं॥ तपः श्रुताद्यधिष्ठानं सद्भिः सद्दर्शनं म
तं॥८॥ अप्येकं दर्शनं श्लाघ्यं चरणज्ञानविच्युतं॥ न पुनः संयमज्ञाने मिथ्यात्वविषदूषिते॥९॥ अत्यल्पम
त्रज्ञैर्दृष्टिपूर्वं यमादिकं॥ प्रणीतं भवसंभूतक्लेशप्राग्भारभेषजं॥१०॥ मन्ये मुक्तः स पुण्यात्मा विशुद्धं यस्य दर्श ॥
यतस्तदेव मुक्त्यंगमग्रिमं परिकीर्तितं॥११॥ प्राप्नुवंति शिवं शश्वच्चरणज्ञानविच्युताः॥ अपि जीवा जगत्यस्मिन्

न पुनर्दर्शनं विना ॥ १२॥ अतुलसुखनिधानं सर्वकल्याणबीजं जननजलधिपोतं भव्यसत्त्वैकपात्रं। दुरिततरुकुठा
रं पुण्यतीर्थप्रधानं पिबतु जितविपक्षं दर्शनाख्यं सुधांबु ॥ १३॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्र
दीपाधिकारे दर्शनशुद्धिप्रकरणं ॥ ६॥ त्रिकालगोचरानंतगुणपर्यायसंयुताः। यत्र भावाः स्फुरंत्युच्चैः तज्ज्ञानं
ज्ञानिनां मतं ॥ १॥ ध्रौव्यादिकलितैर्भावैर्निर्भरं निचितं जगत्। बिंबितं युगपद्यत्र तज्ज्ञानं योगिलोचनं ॥ २॥ मतिश्रु
तावधिज्ञानमनःपर्ययकेवलैः। तदित्थं सान्वयैर्भेदैः पंचधेति प्रकल्पितं ॥ ३॥ अवग्रहादिभिर्भेदैः बह्वाद्यंतर्भ
वैः परैः। षट्त्रिंशत्त्रिशतं प्राहुर्मतिज्ञानं प्रपंचितं ॥ ४॥ प्रसृतं बहुधानेकैः अंगपूर्वैः प्रकीर्णकैः। स्याच्छब्दलांछितं
तद्धि श्रुतज्ञानमनेकधा ॥ ५॥ देवनारकयोर्ज्ञेयस्त्ववधिर्भवसंभवः। षड्विकल्पश्च शेषाणां क्षयोपशमलक्षणः ॥

ऋजुर्विपुल इत्येवं स्यान्मनःपर्ययो द्विधा। विशुद्ध्यप्रतिपाताभ्यां तद्विशेषोऽवगम्यतां॥७॥ अशेषद्रव्यपर्याय
विश्वलोचनं। अनंतमेकमत्यक्षं केवलं कीर्तितं जिनैः॥८॥ कल्पनातीतमभ्रांतं स्वपरार्थावभासकं।
तैरसंदिग्धमनंतं सर्वदोदितं॥९॥ अनंतानंतभागेऽपि यस्य लोकश्चराचरः। अलोकश्च स्फुरत्युच्चैस्तद्यो
गिनां मतं॥१०॥ अगम्यं यन्मृगांकस्य दुर्भेद्यं यद्रवेरपि। तदुर्बोधोद्धतध्वांतं ज्ञानभेद्यं प्रकीर्तितं॥११॥ दुःखज्व
लनतप्तानां संसारोग्रमरुस्थले। विज्ञानमेव जंतूनां सुधांबुप्रीणनक्षमं॥१२॥ निरालोकं जगत्सर्वमज्ञानति
राहतं। तावदास्ते उदेत्युच्चैर्न यावज्ज्ञानभास्करः॥१३॥ बोध एव दृढः पाशो हृषीकमृगबंधने। गारुडश्च महामं
तीक्ष्ण खड्ग
श्चित्तभोगीविनिग्रहे॥१४॥ निशातं विद्धि निस्त्रिंशं भवारातिनिपातने। तृतीयमथवा नेत्रं वि

१५ क्षीणतंद्रा जितक्लेशा वीतसंगाः स्थिराशयाः तस्यार्थमी तपस्यंति योगिनः कृतनिश्चयाः ॥१६॥ वेष्टयत्या
त्मनात्मानमज्ञानी कर्मबंधनैः ॥ विज्ञानी मोचयत्येव प्रबुद्धः समयांतरे ॥१७॥ यज्जन्मकोटिभिः पापं जय
त्यज्ञस्तपोबलात् ॥ तद्विज्ञानी क्षणार्द्धेन दहत्यतुलविक्रमः ॥१८॥ ज्ञानपूर्वमनुष्ठानं निःशेषं यस्य योगि
नः ॥ न तस्य बंधमायाति कर्म कस्मिन्नपि क्षणे ॥१९॥ अज्ञानपूर्विका चेष्टा यतेर्यस्यात्र भूतले ॥ स बध्नात्यात्म
नात्मानं कुर्वन्नपि तपश्चिरं ॥२०॥ यत्र बालश्चरत्यस्मिन्पथि तत्रैव पंडितः ॥ बालः स्वमपि बध्नाति मुच्यते त
त्वविद्ध्रुवं ॥२१॥ दुरिततिमिरहंसं मोक्षलक्ष्मीसरोजं मदनभुजगमंत्रं चित्तमातंगसिंहं ॥ व्यसनघनसमीरं विश्वत
त्वैकदीपं विषयसफरजालं ज्ञानमाराधय त्वं ॥२२॥ अस्मिन्संसारकक्षे यमभुजगविषाक्रांतनिःशेषसत्वे

अस्मिन्संसारकक्षे यमभुजगविषाक्रांतनिःशेषसत्वे क्रोधाद्युत्तुंगशैले कुटिलगतिसरित्पातसंतानभीमे॥
मोहांधाः संचरंति स्खलनविधुरिताः प्राणिनस्तावदेते यावद्विज्ञानभानुर्भवभयदमिदं नोच्छिनत्त्यंधकारं॥
२३॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे ज्ञानोपयोगः॥ यद्विशुद्धेः परंधाम यद्यो
४ त्यजनलक्षणं
गिजनजीवितं॥ तद्वृत्तं सर्वसावद्यपर्युदासैकलक्षणं॥१॥ सामायिकादिभेदेन पंचधा परिकीर्तितं॥ वृषभा
जिनैः पूर्वं चारित्रं सप्रपंचकं॥२॥ पंचव्रतसमित्पंचगुप्तित्रयपवित्रितं॥ श्रीवीरवदनोद्गीर्णं चरणं चंद्रनि
र्मलं॥३॥ पंचमहाव्रतमूलं समितिप्रसरं नितांतमनवद्यं॥ गुप्तिफलभारनम्रं सन्मतिना कीर्तितं वृत्तं॥४॥ पंच
त्रिभिर्भेदैस्तदुक्तं मुक्तसंप्राप्तयैः भवभ्रमणभीतानां चरणं शरणं परं॥५॥ हिंसायामनृते स्तेये मैथुने च परि ॥

१ सत्य आदि न्यामे — व्रतसमूह

विरतिर्व्रतमित्युक्तं सर्वसत्त्वानुकंपकैः॥६॥ सत्याद्युत्तरनिःशेषयमजातनिबंधनं॥ शीलैश्वर्याद्यधिष्ठानमहिंसा
ख्यं महाव्रतं॥७॥ वाक्चित्ततनुभिर्यत्र न स्वप्नेपि प्रवर्तते॥ चरस्थिरांगिनां घातस्तदाद्यं व्रतमीरितं॥८॥ मृते वा जीवि

गुणीत

ते वास्याज्जंतुजाते प्रमादिनां॥ बंधः एव न बंधः स्याद्धिंसायां संवृतात्मनां॥९॥ संरंभादित्रिकं योगैः कषायैः व्याह

१०८ भेद — प्राणीसमूह

तं क्रमात्॥ शतमष्टाधिकं ज्ञेयं हिंसाभेदैस्तु पिंडितं॥१०॥ अतः प्रमादमुत्सृज्य भावशुद्ध्यांगिसंततिं॥ यमप्रशममाश्रि
त्य बंधुबुद्ध्या विलोकय॥११॥ यज्जंतुवधसंजातकर्मपाकाच्छरीरिभिः॥ श्वभ्रादौ सह्यते दुःखं तद्वक्तुं केन पार्यते

नरक — घरकी — वेरी — बडीऊची

॥१२॥ हिंसैव नरकागारप्रतोलीप्रांशुविग्रहा॥ कुठारीविद्धि धा कर्तुं भेत्तुं शूलातिनिर्दया॥१३॥ क्षमादिपरमोदारैर्यमै
र्यो वर्द्धितश्चिरं॥ हन्यते सक्षणादेव हिंसया धर्मपादपः॥१४॥ तपोयमसमाधीनां ध्यानाध्ययनकर्मणां॥ तनोत्यविरतं॥

संरंभ समारंभ आरंभ
ए न तीन मे मन वचन
एकी वाक षौ चार व
कारित अनुमोदने
परस्पर गुणे १०८

डां हृदि हिंसा क्षणं स्थिता ॥१५॥ अहो व्यसनविध्वस्तैर्लोकः पाखंडिभिर्बलात् । नीयते नरकं घोरं हिंसाशास्त्रो

मांसभक्षका नरकेषु पीड्यंते शीघ्र

॥१६॥ रौरवादिषु घोरेषु विशंति पिशिताशनाः । तेष्वेव हि कदर्थ्यंते जंतुघातकृतोद्यमाः ॥१७॥ शांत्यर्थं देवपू

जार्थं मंत्रवानृत्निंकृतं प्राणभृतां घातः पातयत्यविलंबितं ॥१८॥ हिंसैव दुर्गतेर्द्वारं हिंसैव दुरितार्णवः ॥

हिंसैव नरकं घोरं हिंसैव गहनं तमः ॥१९॥ निःस्पृहत्वं महत्त्वं च नैराश्यं दुःकरं तपः । कायक्लेशश्च दानं च हिं

र्थकं ॥२०॥ कुलक्रमागता हिंसा कुलनाशाय कीर्तिता । कृता च विघ्नशांत्यर्थं विघ्नौघायैव जायते ॥२१॥ सौ

ख्यार्थं दुःखसंतानं मंगलार्थेप्यमंगलं । जीवितार्थे ध्रुवं मृत्युं कृता हिंसा प्रयच्छति ॥२२॥ तितीर्षति ध्रुवं मूढः

स शिलाभिर्नदीपतिं । धर्मबुद्ध्याधमो यस्तु घातयत्यंगिसंचयं ॥२३॥ प्रमाणीकृत्य शास्त्राणि यैर्वधः क्रियते ॥

सद्यते परलोके तैः श्वभ्रे मूलाधिरोहणं ॥२४॥ निर्दयेन हि किं तेन श्रुतेनाचरणेन च । यस्य स्वीकारमात्रेण जंतवो यां

= कथितं

ति दुर्गतिं ॥२५॥ वरमेकाक्षरं ग्राह्यं सर्वसत्वानुकंपनं । न त्वक्षपोषकं पापं कुशास्त्रं धूर्तचर्चितं ॥२६॥ चरुमंत्रौषध

दीक्षा

नां वा हेतोरन्यस्य वा क्वचित् । कृता सती नरैर्हिंसा पातयत्य विलंबितं ॥२७॥ विहाय धर्मं शमशीललांछितं दया

उपदेशांती

वहं भूतहितं गुणाकरं । मदोद्धता अक्षकषायवंचिता दिशंति हिंसामपि दुःखशांतये ॥२८॥ धर्मबुद्ध्याधमैः पापं

जंतुघातादिलक्षणं । क्रियते जीवितस्यार्थे पीयते विषमं विषं ॥२९॥ एतत्समयसर्वस्वमेतत्सिद्धांतजीवितं । यज्जंतु

विपरीत

जातरक्षार्थं भावशुद्ध्या दृढं व्रतं ॥३०॥ श्रूयते सर्वशास्त्रेषु सर्वेषु समयेषु च । अहिंसालक्षणो धर्मस्तद्विपक्षश्च पा

तकं ॥३१॥ अहिंसैव जगन्माताहिंसैवानंदपद्धतिः । अहिंसैव गतिः साध्वी श्रीरहिंसैव शाश्वती ॥३२॥ अहिंसैव शिवं

स्वर्गमोक्ष निराकरोति

सूतेदत्तेचत्रिदिवशिवांश्रियंअहिंसैवहितंकुर्याद्व्यसनानिनिरस्यति॥४०॥अस्मद्धीपावतीधात्रीकुलाचलसमं

करोति

तानैकप्राणिवधोत्पन्नंदत्त्वादोषंव्यपोहति॥४१॥सकलजलधिवेलावारिसीमांधरित्रींनगरनगसमग्रांस्वर्ण

रत्नादिपूर्णाम्।यदिमरणनिमित्तेकोपिदद्यात्कथंचित्तदपिनमनुजानांजीवितत्यागबुद्धिः॥४२॥आत्मैवो

प्यंतेनाशुप्रक्षिप्तःश्वभ्रसागरेहंतमन्येयेनापियेनहिंसासमर्थिता॥४३॥शूलचक्रासिकोदंडैरुद्युक्तास

खंडने॥येधमात्तेपिनिस्त्रिंशैर्देवत्वेनप्रकल्पिताः॥४४॥अबलिनिर्दुर्बलस्यात्रक्रियतेयःपराभवः॥परलोके

वधके कुरुते

त्तस्मादनंतःप्रविसह्यते॥४५॥भयवेपितसर्वांगाननाथाननंजीवितप्रियान्॥निघ्नद्भिःप्राणिनःकिंतैःस्वं

गतमजरामरं॥४६॥स्वच्चपुत्रपौत्रसंतानंवर्द्धयंत्यादरेजनाः॥व्यापादयंतिचान्येषामत्रहेतुर्नबुध्यते॥४७॥पर

णोःपरंनोल्पंनमहऽंगनात्परं॥यथाकिंचित्तथाधर्मोनांहिंसालक्षणात्परः॥६१॥तपःश्रुतयमज्ञान
दिकर्मणां॥सत्यशीलव्रतादीनामहिंसाजननीपरा॥६२॥करुणार्द्रंचविज्ञानवासितंयस्यमानसं॥इंद्रि
निःसंगंतस्यसिद्धंसमीहितं॥६३॥निस्त्रिंशंप्राइवनिस्त्रिंशंयस्यचेतोस्तिजंतुषु॥तपःश्रुताद्यनुष्ठानंतस्यक्ले
वलं॥६४॥द्वयोरपिसमंपापंनिर्णीतंपरमागमे॥वधानमोदयोकर्त्रोरसत्संकल्पसंश्रयात्॥६५॥संकल्पाच्छा
लिमत्स्योपिस्वयंभूरमणार्णवे॥महामत्स्याशुभेनस्वंनियोज्यनरकंगतः॥६६॥अहिंसैकापियत्सौख्यं
समूहे पीड्यंते तृणेन
णांमेघवापिप्राणिनां॥दत्तेतद्देहिनांनायंतपःश्रुतयमोत्करः॥६७॥दूयंतेयत्तृणेनापिस्वशरीरैकदर्थिते॥सनिर्दय
परस्यांगेकथंशस्त्रंनिपातयेत्॥६८॥जन्मोग्रभयभीतानामहिंसैवौषधीपरा॥तथामरपुरींगंतुंपाथेयं

क्लं॥४९॥किंत्वहिंसैवभूतानांमातेवहितकारिणी॥तथारमयतुंकांताविनेतुंचसरस्वती॥५०॥स्वान्ययो
र्वासुखदुःखंहिताहितं॥जंतूनयःपातकीहन्यात्सनरत्वेपिराक्षसः॥५१॥अभयंयच्छभूतेषुकुरुमैत्रीमनिंदि
ताम्॥पश्यात्मसदृशंविश्वंजीवलोकंचराचरं॥५२॥जायंतेभूतयःपुंसांयाःकृपाक्रांतचेतसां॥चिरेणापिनताः
कुर्वात्तादेव्यमपिभारती॥५३॥किंनतप्तंतपस्तेनकिंनदत्तंमहात्मना॥वितीर्णमभयंयेनप्रीतिमालंव्यदेहिनां॥५
यथायथाहृदिस्थैर्यंकरोतिकरुणानृणां॥तथातथाविवेकश्रीःपरांप्रीतिंप्रकाशयेत॥५५॥अन्य
दंहिंसाश्रीजिनागमे॥परैश्वर्ययोगमात्रेणकीर्तितासायदृच्छया॥५६॥तन्नास्तिजीवलोकेजिनेंद्रदेवेंद्रचक्रि
॥यत्सौख्यंभवंतिमनुजानजीवरक्षानुरागेण॥५७॥यत्किंचित्संसारेशरीरिणांदुःखशोकभयबीजं॥दौर्भाग्या

समस्तं तद्धिंसासंभवं ज्ञेयं ॥५०॥ ज्योतिश्चक्रस्य चंद्रो हरिरमृतभुजां चंडरोचिर्ग्रहाणां कल्पांगः पादपानां सलिलनि
धिरपां स्वर्णशैलो गिरीणां । देवः श्रीवीतरागस्त्रिदशमुनिगणस्यात्र नाथो यथायं तद्वच्छीलव्रतानां प्रशमयमत
पसां विद्धि हिंसाप्रधानं ॥५१॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे अहिंसाप्रकरणम् ॥ छ ॥
यः संयमधुरां धत्ते धैर्यमालंब्य संयमी । स पालयति यत्नेन वाग्वने सत्यपादपं ॥१॥ अहिंसाव्रतरक्षार्थं यमजातं
जिनैर्मतं । नारोहति परां कोटिं तदेवासत्यदूषितं ॥२॥ असत्यमपि तत्सत्यं यत्सत्त्वाशंसकं [हितकारी] वचः । सावद्यं यच्च पुष्णा
ति तत्सत्यमपि गर्हितं [निंदितं] ॥३॥ अनेकजन्मजक्लेशशुद्ध्यर्थं यस्तपस्यति । सर्वसत्त्वहितं शश्वत्स ब्रूते सूनृतं वचः ॥४॥ सू
नृतं करुणाक्रांतमविरुद्धमनाकुलं । अग्राम्यं गौरवाश्लिष्टं वचः शास्त्रे प्रशस्यते ॥५॥ मौनमेव हितं पुंसां शश्वत्सर्वार्थ

सिद्धये वचो वाच्यं प्रियं तथ्यं (सत्यं) सर्वसत्वोपकारि यत् ॥६॥ यो जिनैर्जगतां मार्गः प्रणीतोऽत्यंतशाश्वतः ॥ असत्यबलतः
सोऽपि निर्दयैः कथ्यतेऽन्यथा ॥७॥ विचार्य (निष्पाद्य) असत्यसंदोहं (समूह) खलैर्लोकः खलीकृतः ॥ कुशास्त्रैः स्वमुखोद्गीर्णैस्त्वाघगहनं
तमः ॥८॥ जयंति ते जगद्वंद्याः यैः सत्यकरुणामयो ॥ अवंचकश्च लोकोऽयं पथि शश्वत्प्रतिष्ठितः ॥९॥ असद्वदनव
के विशालविषसर्पिणी ॥ उद्वेजयति वागेवं जगद्दंतविषोल्बणा ॥१०॥ न सास्ति काचिद्व्यवहारवर्तिनी न यत्र वा
स्फुरति प्रवर्तिका ॥ ब्रुवन्नसत्यामिह तां हताशयः (हृतबुद्धि) करोति विश्वव्यवहारविप्लवम् ॥११॥ पृष्टैरपि न वक्तव्यं न श्रो
तव्यं वचः शंकाकुलं पापं दोषाढ्यं चाभ्यसूयकं (निंदकं) ॥१२॥ मर्मच्छेदि मनःशल्यं च्युतस्थैर्यं विरोधकं ॥ निर्दयं
त्याज्यं प्राणैः कंठगतैरपि ॥१३॥ धन्यास्ते हृदये येषामुदीर्णः (प्रकाशित) करुणांबुधिः ॥ वाग्वीचिसंचयोल्लासैर्निर्वापि

हिनः॥१५॥ धर्मनाशे क्रियाध्वंसे स्वसिद्धांतार्थविप्लवे॥ अपृष्टैरपि वक्तव्यं तत्स्वरूपप्रकाशने॥१६॥ यथा मुकुर्मोहयत्यै

(लग्ना ... सर्पिणी ... वाणी ... विस्तारी तैं)

वं विश्रांता कर्णयोर्जनं॥ विषमं विषमुत्सृज्य सा वपुः पन्नगीनगी॥१७॥ असत्येनैव विक्रम्य चार्वाकद्विजकौलिकैः

(मार्ग, स्थापित ... नगरप्रणालसदृशं)

सर्व्वाक्षिपोषकं धूर्तैः पथ्यपक्षं प्रतिष्ठितं॥१८॥ मन्ये पुरजलावर्तं प्रतिमं तन्मुखोदरं॥ यतो वाचः प्रवर्त्तंते कश्मलाः

कार्यनिःफलाः॥ प्राप्नुवंत्यति घोरेषु रौरवादिषु संभवं॥ तिर्यक्ष्वथ निगोदेषु मृषावाकेन देहिनः॥१९॥ न तथा चंदनं

(पुष्पमाला)

चंद्रमणयो मालतीस्रजः॥ कुर्वंति निर्वृतिं पुंसां यथा वाणी श्रुतिप्रिया॥२०॥ अपि दावानलप्लुष्टं शाड्वलं जायते वनं

(विषमात् अपि)

न लोकः सुचिरेणापि जिह्वानलकदर्थितः॥२१॥ सर्वलोकप्रिये तथ्ये प्रसन्ने ललिताक्षरे॥ वाक्ये सत्यपि किं ब्रूते नि

(अधमजन)

कृष्टः परुषं वचः॥२२॥ सत्ये विज्ञाततत्वानां सत्यसीमावलंबिनां॥ चरणस्पर्शमात्रेण विशुध्यति धरातलं॥२३॥ अयमत्र

णोपेतं सत्यश्रुतसमन्वितम्॥ येऽत्र जन्म सफलं नीतं ते धन्या धीमतां मताः॥२४॥ नृजन्मन्यपि यः सत्यप्रतिज्ञाप्र
तोऽधमः॥ स केन कर्मणा पश्चाज्जन्मपंकं तरिष्यति॥२५॥ अदयैः संप्रयुक्तानि वाक्शस्त्राणीह भूतले॥ सद्यो
णि कृंतंति शितास्त्राणि वदेहिनाम्॥२६॥ व्रतश्रुतयमस्थानं विद्याविनयभूषणम्॥ चरणज्ञानयोर्बीजं सत्यसं
ज्ञं व्रतं मतं॥२७॥ नहि सत्यप्रतिज्ञस्य पुण्यकर्मावलंबिनः॥ प्रत्यूह (विघ्नं) करणे शक्ताः अपि दैत्योरगादयः॥२८॥ चंद्रमू
र्वानंदं वर्द्धयत्री जगत्त्रये॥ स्वर्गे निर्धीयते मूर्ध्नि कीर्तिः सत्योत्थिता नृणाम्॥२९॥ खंडितानां विरूपाणां दुर्वि
रोगिणां॥ कुलजात्यादिहीनानां सत्यमेकं विभूषणम्॥३०॥ यमतपस्वी जटी मुंडो नग्नो वा चीवरावृतः (वल्कल)॥ सोऽप्यसत्यं य
दि ब्रूते निंद्यः स्यादंत्यजादपि (चांडालात्)॥३१॥ कुटुंबं जीवितं वित्तं यद्यसत्येन वर्द्धते॥ तथापि युज्यते वक्तुं नासत्यं शीलशालि

३२॥ कृतः सकलं पापमसत्योच्छ्रं तथान्यतः ॥ साम्यमेवं वदंत्यार्यास्तुलायां धृतयोस्तयोः ॥ ३३ ॥ मूकतां मतिवैकल्यं
चांडाल घूघू मार्जार स्यालस्याल श्वान
मूर्खत्वं बोधिविच्युतिं ॥ बाधिर्यं मुखरोगित्वमसत्याद्वेद देहिनाम् ॥ ३४ ॥ श्वपाकोलूकमार्जारवृकगोमायुमंडलं
वृकं
स्वीक्रियंते क्वचिल्लोकैर्नरैरसत्यच्युतचेतसः ॥ ३५ ॥ प्रसन्नोन्नतवृत्तानां गुणानां चंद्ररोचिषां ॥ संघातं घातयत्येवमसद्
वदित असत्य
द्युदितं मृषा ॥ ३६ ॥ न हि स्वप्नेपि संसर्गमसत्यमलिनैः सह ॥ कश्चित्करोति पुण्यात्मा दुरितोलूकपंकया ॥ ३७ ॥ ज
गद्वंद्यैः सतां सेव्यैर्भव्यव्यसनशुद्धिदैः ॥ शुभैः कर्मणि योग्यः स्यान्नासत्यमलिनो जनः ॥ ३८ ॥ महामतिनिर्निर्धूतं उच्छीर्षं
देवदेवैर्निषेधितं ॥ असत्यं पोषितं पापैः दुःशीलाधमनास्तिकैः ॥ ३९ ॥ सुतस्वजनदारार्थं वित्तबंधुकृतेथवा ॥
आत्मार्थे न वचोसत्यं वाच्यं प्राणात्ययेपि वा ॥ ४० ॥ परोपरोधादपि निंदितं वचो ब्रूवन्नरो गच्छति नारकीं पुरीं ॥ ४

प्रगटं

निंद्यष्टत्तोपिगुणीनरेश्वरोवसुर्यथागांदितिलोकविश्रुतम्॥४१॥चंचन्मस्तकमौलिरत्नविकटज्योतिच्छटाडंबरैः
र्देवाःपल्लवयंतियच्चरणयोःपीठंलुठंतोप्यमी॥कुर्वन्तिग्रहलोकपालखचरायत्प्रातिहार्य्यंनृणांप्राम्यंतिज्ज
न्नादयश्चयदिदंतत्सत्यवाचःफलं॥४२॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेसत्य

बहुधा

प्रकरणम्॥छ॥अनामाद्यव्रतंनामतृतीयंगुणभूषणं॥नापवर्गपथिप्रायःक्वचिद्दत्तेमुनिःस्थितिम्॥१॥यःस
मीप्सतिजन्माब्धेःपारमाक्रमितुंसुधीः॥सत्रिशुद्ध्यातिनिःशोकोनादत्तेकुरुतेमतिम्॥२॥वित्तमेवमतंसूत्रेप्रा

लघुत्वं

णाबाह्याःशरीरिणाम्॥तस्यापहारमात्रेणस्युस्तेप्रागेवघातिताः॥३॥गुणागौणत्वमायांतियांतिविद्याःविडं ब

समूहानि

म्॥चौर्य्येणाकीर्तयःपुंसांशिरस्यादधतेपदं॥४॥पुण्यानुष्ठानजातानिप्रणश्यंतीहदेहिनाम्॥परवित्तामिष

ग्रामलालसानां धरातले ॥५॥ परद्रव्यग्रहासक्तस्य तस्करस्येह निर्दया ॥ गुरुबंधुसुतान्हंतुं प्रायः प्रज्ञा प्रवर्तते ॥६॥
चौरस्वभावं
हृदि यस्य पदं धत्ते परवित्तामिषस्पृहा ॥ करोति किं न किं तस्य कंठलग्नेव सर्पिणी ॥७॥ चुराशीलं विनिश्चित्य परि
त्यजति शंकिता ॥ वित्तापहारदोषेण जनन्यपि सुतं निजं ॥८॥ भ्रातरः पितरः पुत्राः स्वकुल्या मित्रबांधवाः ॥ संसर्ग
भिद्यात
मपि नेच्छंति क्षणार्द्धमिह तस्करैः ॥९॥ न जने न वने चेतः स्वस्थं चोरस्य जायते ॥ मृगस्येवोद्धतव्याधाच्छंकपद
धमात्मनः ॥१०॥ मंत्रासौ ज्ञांतचेतस्कश्चौरो जागर्त्यहर्निशं ॥ बध्येयात्र ध्रियेयात्र मार्येयात्रेति शंकितः ॥११॥ न
त्मरक्षां न दाक्षिण्यं नोपकारं न धर्मतां ॥ न सतां शंसितं कर्म चौरः स्वप्नेपि बुध्यते ॥१२॥ तृणांकुरमिवादाय घात
संसर्गं
यंत्यविलंबितं ॥ चोरं विज्ञाय निःशंका धीमंतोपि धरातले ॥१३॥ गुरवो लाघवं नीता गुणिनोप्यत्र खंडिताः ॥ चौरसं

परलोके

अयं दोषेण यतयो निधनं गताः ॥१४॥ विशंति नरकं घोरं दुःखज्वालाकरालितं । अमुत्र नियतं मूढ प्रा

नदी नगर पर्वत ग्राम वन घर

चर्च्चिताः ॥१५॥ सरित्पुरगिरिग्रामवनवेश्मजलादिषु । स्थापितं पतितं नष्टं परस्वं त्यज सर्वथा ॥१६॥ चिदं चिद्रूप

वांछा

यत्परस्वमनेकधा । तत्त्याज्यं संयमोद्दामसीमासंरक्षणोद्यतैः ॥१७॥ आस्तां परधनादित्सा कर्तुं स्वप्नेऽपि धी

चारित्र

तृणमात्रमपि ग्राह्यं नादत्तं दंतशुद्धये ॥१८॥ अतुलसुखसिद्धिहेतोर्धर्म्मस्य प्रशमचरणरक्षणार्थं च । इह परलोक

तार्थं कलय स्वचित्तेपि मा चौर्य्यम् ॥१९॥ विषयविरतिमूलं संयमोद्दामशाखं यमदमशमपुष्पं ज्ञानलीला

मविबुधजनशकुंतैः सेवितं धर्मवृक्षं दहति मुनिरपीह स्तेयतीव्रानलेन ॥२०॥ इत्याचार्यश्रीशुभचंद्रविर

चिते ज्ञानार्णवे योगप्रदीपाधिकारे चौर्य्यपरिहारप्रकरणम् ॥ छ ॥ विदंति परमं ब्रह्म यत्समालंब्य योगिनः । तद्व्रतं

ह्मचर्यंस्याद्धीरधौरेयगोचरं॥१॥सप्रपंचंप्रवक्ष्यामिज्ञात्वेदंगहनंव्रतं।स्वल्पोपिनसतांक्लेशःकार्योस्याल्लोकविस

रमं॥२॥एकमेवव्रतंश्लाघ्यंब्रह्मचर्यंजगत्त्रये।यद्विशुद्धिंसमापन्नाःपूज्यंतेपूजितैरपि॥३॥ब्रह्मव्रतमिदंजीयाच्चर

ब्रह्मचर्य

णस्यैवजीवितम्।स्युःसंतोपिगुणायेनविनाक्लेशायदेहिनाम्॥४॥नाल्पसत्वैर्ननिःशीलैर्नदीनैर्नाक्षनिर्जि

तैः।स्वप्नेपिचरितुंशक्यंब्रह्मचर्यमिदंनरैः॥५॥पर्यंतविरसंविद्धिदशधान्यच्चमैथुनं।योषित्संगाद्विरक्तेनत्याज

गीतनृत्यवाद्य

मेवमनीषिणा॥६॥आद्यंशरीरसंस्कारोद्वितीयंवृष्यसेवनं।तौर्यत्रिकंतृतीयंस्यात्संसर्गस्तुर्यमिष्यते॥७॥योषि

द्विषयसंकल्पःपंचमंपरिकीर्तितं।तदंगवीक्षणंषष्ठंसत्कारःसप्तमंमतं॥८॥पूर्वानुभूतसंभोगस्मरणंस्यात्तद

विर्यनाशन विषफलसमानं प्रथमसेवनेरम्य

ष्टमं।नवमंभाविनीचिंतादशमंवस्तिमोक्षणं॥९॥किंपाकफलसंभोगसन्निभंतद्धिमैथुनं।आपातमात्ररम्यं

ज्ञानार्णव॥ ॥४२॥

स्याद्विपाकेऽत्यंतनिंदितं॥१०॥ विरज्य कामभोगेषु ये ब्रह्म समुपासते॥ ते दश महादोषास्तैः त्याज्या भावशुद्धये॥
११॥ अपि च॥ स्मरप्रकोपसंभूतान् स्त्रीकृतान्मैथुनोत्थितान्॥ संसर्गप्रभवान् ज्ञात्वा दोषान् स्त्रीषु विरज्यताम्॥१२॥
यथा॥ सिक्तोऽप्यंबुधरव्रातैः प्लावितोऽप्यंबुराशिभिः॥ न हि त्यजति संतापं कामवह्निप्रदीपितः॥१३॥ मूलं ज्येष्ठस्य
ध्वाक्षे विभ्रे नभसि भास्करः॥ न प्लोषति तथा लोकं यथा दीप्तः स्मरानलः॥१४॥ हृदि ज्वलति कामाग्निः पूर्वमेव श
रीरिणाम्॥ भस्मसात्कुरुते पश्चादंगोपांगानि निर्दयः॥१५॥ अचिंत्यकामभोगींद्रविषव्यापारमूर्छितं॥ वीक्ष्य वि
श्वं विवेकाय यतंते योगिनः परम्॥१६॥ स्मरव्यालविषोद्गारैर्वीक्ष्य विश्वं कदर्थितं॥ यमिनः शरणं जग्मुर्विवे
कविनितासुतं॥१७॥ एक एव स्मरो वीरः स चैकोऽचिंत्यविक्रमः॥ अवज्ञयैव येनेदं पादपीठीकृतं जगत्॥१८॥ एकार्द

सेव्यते

अतुलपराक्रमः

जयत्येष जीवलोकं चराचरं मनोभूरनंगमानीयस्वशक्त्याव्याहतेक्रमः ॥१९॥ अपीडयत्येव निःशंको मनोभूर्भुवन
त्रयं ॥ प्रतीकारशतेनापि यस्य भंगो न भूतले ॥२०॥ कालकूटादहं मन्ये स्मरसंगं महाविषं ॥ स्यात्पूर्वस्य प्रतीकारं नि

स्त्रीशरीर कादौ

प्रतिकारमुत्तरं ॥२१॥ जंतुजातमिदं मन्ये स्मरवह्निप्रदीपितं ॥ मज्जत्यगाधमं ध्वंस्य पुरंध्रीकायकर्दमं ॥२२॥ अन
तव्यसनासारदुर्गे भवमरुस्थले ॥ स्मरज्वरपिपासार्ता विपद्यंते शरीरिणः ॥२३॥ घृणास्पदमतिक्रूरं पापाढ्यं योगि
षितं ॥ जनोयं कुरुते कर्म्म स्मरशार्दूलचर्वितः ॥२४॥ दिग्मूढमथ विभ्रांतमुन्मत्तं शंकिताशयं ॥ विलक्षं कुरुते लो
कं स्मरवैरी विजृंभितः ॥२५॥ न हि क्षणमपि स्वस्थं चेतः स्वप्नेपि जायते ॥ मनोभवशरव्रातैर्भिद्यमानं शरीरिणां ॥२६॥
जानन्नपि न जानाति पश्यन्नपि न पश्यति ॥ लोकः कामानलज्वालाकलापकवलीकृतः ॥२७॥ भोगिदष्टस्य जायंते

वेगाः सप्तैव देहिनाम्॥ स्मरभोगी द्रष्टष्टानां दशस्युस्ते महाभयाः॥२८॥ तद्यथा॥ प्रथमे जायते चिंता द्वितीये द्रष्टुं
स्युस्तृतीयेतिनिःश्वासाश्चतुर्थे भजते ज्वरम्॥२९॥ पंचमे दह्यते गात्रं षष्ठे भुक्तं न रोचते॥ सप्तमे स्यान्म
र्छा उन्मत्तत्वमथाष्टमे॥३०॥ नवमे प्राणसंदेहो दशमे मुच्यतेऽसुभिः॥ एतैर्वेगैः समाक्रांतो जीवस्तत्त्वं न पश्यति॥३१॥
संकल्पवशतस्तीव्रा वेगा मंदाश्च मध्यमाः॥ मोहज्वरप्रकोपेन प्रभवंतीह देहिनाम्॥३२॥ अपि मानसमुत्तुंगनग
शृंगाग्रवर्त्तिनाम्॥ स्मरवीरः क्षणार्द्धेन विधत्ते मानखंडनं॥३३॥ शीलशालमतिक्रम्य धीधनैरपि तन्यते
त्वमंत्यजस्त्रीणां संभोगाय स्मराज्ञया॥३४॥ वृद्धमपि चारित्रं ध्वंसयत्याशु देहिनाम्॥ निरुणद्धि श्रुतं सत्यं धै
मदनव्यथा॥३५॥ नासने शयने याने स्वजने भोजने स्थितम्॥ क्षणमात्रमपि प्राणी प्राप्नोति स्मरशल्लितः॥३

वित्तवृत्तबलस्यांतंस्वकुलस्यचलांछनं मरणंवासमीपस्थंनस्मरार्त्तःप्रपश्यति ॥३९॥ नपिशाचोरगारोगानदैत्य
ग्रहराक्षसाः ॥ पीडयंतितथालोकंयथायंमदनज्वरः ॥४०॥ प्रनासाद्यजनःकामी कामिनीहृदयप्रियां ॥ विषश
स्त्रानलोपायैःसद्यःस्वंहंतुमिच्छति ॥४१॥ दक्षोमूढःक्षमीक्षुद्रःशूरोभीरुर्गुरुर्लघुः ॥ तीक्ष्णःकुंठोवशीभ्रष्टोज
नःस्यात्स्मरवंचितः ॥४२॥ कुर्वंतिवनिताहेतोरचिंत्यमपिसाहसं ॥ नराःकामहठात्कारविधुरीकृतचेतसः ॥४३॥ उन्म
लयतिविश्रांतंपूज्यंश्रीधर्मपादपं ॥ मनोभवमहादंतीमनुष्याणांनिरंकुशः ॥४४॥ प्रकुप्यतिनरःकामीबकुलंब्र
ह्मचारिणी ॥ जनायजाग्रतेचौरोरजन्यांसंचरन्निव ॥४५॥ स्नुषांश्वश्रूंसुतांधात्रींगुरुपत्नींतपस्विनीं ॥ तिरश्चीमपिक
मार्त्तोनरःस्त्रींभोक्तुमिच्छति ॥४६॥ किंचकामशरव्रातजर्जरेमनसिस्थिति ॥ निमेषमपिबध्नातिनविवेकसुधारसः ॥४७॥

हरिहरपितामहद्या बलिनोऽपि तथा स्मरेण विध्वस्ता ॥ त्यक्तत्रपा यथैते स्वां कान्तां नारीं न मुंचंति ॥४६॥ इति दीप्तः स्तवया

ढं नृत्वं जन्मोग्रसंक्रमे ॥ तदा तत्कुरु येनेयं स्मरज्वाला विलीयते ॥४७॥ स्मरदहनसुतीव्रानंतसंतापविद्धं भुवन

मिति समस्तं वीक्ष्य योगिप्रवीराः ॥ विगतविषयसंगाः प्रत्यहं संश्रयंते प्रशमजलधितीरं संयमारामरम्यं ॥४८॥ इत्या

कर्म

चार्यश्री शुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे कामप्रकोपप्रकरणम् ॥ छ ॥ कुर्वंति यन्मदोद्रेकदर्प्पि

कर्म्मण.

ता भुवि योषितः ॥ प्राप्तां प्राप्तमपि तस्येह न वक्तुं कश्चिदीश्वरः ॥१॥ धारयंत्यमृतं वाचि हृदि हालाहलं विषं ॥ निसर्गकु

टिला नार्यो न विद्मः केन निर्मिताः ॥२॥ वज्रज्वलनलेखेव भोगिदंष्ट्रेव केवलं ॥ वनितेयं मनुष्याणां संतापभयदा

निकासयति

यिनी ॥३॥ उद्वासयति निःशंका जगत्पूज्यं गुणव्रजं ॥ बध्नाति व्यसनं चित्ते सतामपि नितंबिनी ॥४॥ वरमालिंगिता क्रुद्धा

चंचलजिह्वा

चलत्वं लोलत्वं सर्पिणी ॥ न पुनः कौतुकेनापि नारी नरकपद्धतिः ॥४॥ हृदि दत्ते तथा दाहं स्पृष्टा कुतभुक्शिखा वनितेयं

यथा पुंसां मिंडियार्थ प्रकोपिनी ॥ द्विसंध्येव क्षण रागाढ्या निम्नगेवाधरप्रिया ॥ वक्रा बालेंदुलेखेव भवंति नियतं ॥६॥

यः ॥७॥ धूमावल्यइव शंकाः कुर्वंति मलिनं क्षणात् ॥ मदनोन्मादसंभ्रांता योषितः स्वकुलं ग्रहं ॥८॥ निर्दयत्वमनार्य

त्वं मूर्खत्वमतिचापलं ॥ वंचकत्वं कुशीलत्वं स्त्रीणां दोषाः स्वभावजाः ॥९॥ विचरंति कुशीलेषु लंघयंति कुलक्रमं

न स्मरंति गुरुं मित्रं पतिं पुत्रं च योषितः ॥१०॥ अवश्यां जनादितं त्राणि मंत्रयंत्राण्यनेकधा ॥ व्यर्थी भवंति सर्वाणि वनि

तां राधनं प्रति ॥११॥ अगाधक्रोधवेगांधाः कर्म कुर्वंति तत्स्त्रियः ॥ सद्यः पतति येनैतद्भुवनं दुःखसागरे ॥१२॥ स्वातंत्र्य

मभिवांछंताः कुलकल्पमहीरुहं ॥ अविचार्यैव निघ्नंति स्त्रियो भीष्टफलप्रदं ॥१३॥ अनदानेन च सौजन्येन प्रतिष्ठान

गोरवं न च पश्यंति कामांधाः योषितः स्वान्ययोर्हितं ॥१४॥ न तत्क्रुद्धा हरिव्याघ्रव्यालानलनरेश्वराः। कुर्वंति यत्करोत्यै
पुरुषे
रिनारी निरंकुशा ॥१५॥ यामांसाद्यत्वया कांता सोढव्या नारकी व्यथा। तस्याः वार्तापि न श्लाघ्या कथमालिंगन
॥१६॥ सकोपि स्मर्यतां देवो मंत्रो वालंब्यमाहसं। यतो गनापिशाचीयं ग्रसितुं नोपसर्पति ॥१७॥ एकैव वनितामाल
चिंत्यपराक्रमा। लीलयैव यया मूढ खंडितं जगतां त्रयं ॥१८॥ न तद्दृष्टं श्रुतं ज्ञानं न तच्छास्त्रेषु चर्चितं। यत्कुर्वंति
एकीकृत्य
हा पापं स्त्रियः कामकलंकिता ॥१९॥ यमजिह्वानलज्वालावज्रविद्युद्विषांकुरान्। समाहृत्यैकतामन्ये वेधसेयं वि
सिनी ॥२०॥ मनस्यन्यद्वचस्यन्यद्वपुष्यन्यद्विचेष्टितं। यासां प्रकृतिदोषेण प्रेम तासां कियच्चिरम् ॥२१॥ अप्युत्तुंगाः
चंद्रमा सूर्य
तिष्यंति नरा नार्यंग संगता। यथा वामिति लोकस्य स्तनाभ्यां प्रकटीकृतम् ॥२२॥ यदींदुस्तीव्रतां धत्ते चंडरोचिश्च शी

पुरुषे
ततो दैवात्तथापिनो धत्ते नरि नारी स्थिरं मनः ॥२२॥ देवदैत्योरगव्यालग्रहचंद्रार्कचेष्टितम् ॥ विदंति ये महाप्राज्ञास्तेपि वृ
त्तं न योषिताम् ॥२३॥ सुखदुःखजयपराजयजीवितमरणानि ये विजानंति मुह्यंति तेपि नूनं तत्त्वविदः स्त्रीचेष्टिते स्त्रीणां
॥२४॥ जलधेर्यानपात्राणि ग्रहाद्या गगनस्य च ॥ यांति पारं न तु स्त्रीणां दुश्चरित्रस्य केचन ॥२५॥ आरोपयंति संदेहतु
लायां मंति निर्दया ॥ नार्यः पतिं च पुत्रं च पितरं च क्षणादपि ॥२६॥ शृंगं तिविपिने व्याघ्रं प्राकुं तं गगने स्थितं ॥ सरि
उदगतं मीनं न स्त्रीणां चपलं मनः ॥२७॥ अनंत दोस्ति जगत्यस्मिन्मणिमंत्रौषधांजनं ॥ विद्यां श्रयेन सद्भावं प्रयास्यंती
दासीपुत्रै कामदेवांकं
ह योषितः ॥२८॥ मनो भवसमं शूरं कुलीनं भुवनेश्वरम् ॥ हत्वा स्त्रियः पतिं सद्यो रमंते चेष्टकासुतैः ॥२९॥ स्मरोत्संगमं
प्राप्य वांछंति पुरुषांतरं ॥ नार्यः सर्वाः स्वभावेन वदंतीत्यमलाप्रया ॥३०॥ विनांजनेन तंत्रेण मंत्रेण विनयेन च ॥ वं

घ्नंति नरं नार्यः प्रज्ञाधनमपि क्षणात् ॥३१॥ कुलजातिगुणभ्रष्टं निकृष्टं दुष्टचेष्टितं । अस्पृश्यमधमं प्रायो मन्ये

पृष्ठैः महानपराक्रमैः

णां प्रियं नरं ॥३२॥ वैरिवारणदंताग्रे समारुह्य स्थिरीकृता । वीरश्रीर्यैर्महासत्वैर्योषिद्भिस्तेपि खंडिताः ॥३३॥

स्थापिता

गौरवेषु प्रतिष्ठासु गुणेष्वाराध्यकोटिषु । धृता अपि निमज्जंति दोषपंके स्वयं स्त्रियः ॥३४॥ कृत्वाप्यकार्यलक्षा

प्रत्यक्षमपि योषितः । छादयंत्येव निःशंकाः विश्ववंचनपंडिताः ॥३५॥ दोषान् गुणेषु पश्यंति प्रियेकुर्वंति वि

अंजलीकरणादिकं

प्रियं सन्मानिताः प्रकुप्यंति निसर्गकुटिलाः स्त्रियः ॥३६॥ दानसन्मानसंभोगप्रणतिप्रतिपत्तिभिः । अपि सेवा

रं नाथं घ्नंति नार्योतिनिर्दया ॥३७॥ विषमध्ये सुधास्पंदं सस्यजातं शिलोच्चये । संभाव्यं न तु संभाव्यं चेतः स्त्री

निर्दोषं न

मकल्मषं ॥३८॥ वंध्यांगजस्य राज्यश्रीः पुष्पश्रीर्गगनस्य च । स्याद्दैवान्न तु नारीणां मनःशुद्धिर्मनागपि ॥३९॥ कुल

द्वयमहाकष्टं भस्मसात्कुरुते क्षणात्॥ दुश्चरित्रसमीरालीप्रदीप्तो वनितानलः॥४०॥ सुराचलं इवाकंपा अगाधा

(कंपनं)
वार्द्धिवद्दुष्प्रा नीयंते त्रं नराः स्त्रीभिर्विधूतिं क्षणांतरे॥४१॥ वित्तहीनो जरी रोगी दुर्बलः स्थानविच्युतः॥ कुलीनाभि

रपि स्त्रीभिः सद्यो भर्त्ता विमुच्यते॥४२॥ भेत्तुं शूलमसिं छेत्तुं कर्त्तितुं क्रकचं दृढं॥ नरान्पीडयितुं यंत्रं वेधसा विहि

(चंद्रमा) (वंचीत)
ताः स्त्रियः॥४३॥ विधुर्वधूभिर्मन्ये हं नभस्यो विप्रतारितः॥ अथवा क्षीयते कस्मात्कलंकोपहतप्रभः॥४४॥ यद्रा

(वंचितः) (सूर्यः)
गं संध्यया धत्ते यन्निमत्यं विलंबितं॥ तन्मन्ये वनितासार्थैर्विप्रलुब्धः खरद्युतिः॥४५॥ अंतःशून्यो भृशं पूरौति वेला

(समुद्र)
व्याजेन क्षेपते॥ धीरोपि मथितो बद्धः स्त्रीनिमित्तैः सरित्पतिः॥४६॥ सुरेंद्रप्रतिमा धीरा अप्यचिंत्यपराक्रमाः॥ द

(निमित्ते) (शोकानां मूलं)
शग्रीवादयो याताः कृते स्त्रीणां रसातलं॥४७॥ दुःखखानिरगाधैर्यं कलेर्मूलं भयस्य च॥ पापबीजं शुचां कंदः

श्वभ्रावनिर्नितंबनी॥४८॥यदिमूर्त्ताःप्रजायेरन् स्त्रीणांदोषाःकथंचन।पूरयेयुस्तथानूनंनिःशेषंभुवनोदरं॥
॥तुकेनसमाहर्तुंविश्ववर्त्त्यघसंचयं वेधसेयंकृतामन्येनारीव्यसनवागुरा॥५०॥एकंद्रष्टापरंभावैर्व्वाग्निरं
तपोगिते॥संदूषयंत्यन्यंरतेप्रार्थ्यान्यंरमयंत्यंगनाजनाः॥५१॥धीरैर्धैर्यंसमालंब्यविवेकामललोचनैः।त्यक्ताःस्वप्ने
पिनिःकंपैर्नार्यःश्रीसूरिपुंगवैः॥५२॥यद्वक्तुंनबृहस्पतिःप्रातमखःश्रोतुंनसाक्षात्क्षमस्तत्स्त्रीणामगुणव्रजं
गदितुंमन्येनकोपिप्रभुः।आलोक्यस्वमनीषयाकतिपयैर्वर्णैर्यदुक्तंमयातच्छ्रुत्वागुणिनस्त्यजंतुवनितासं
भोगपापगृहाः॥५३॥परिभवफलवल्लीदुःखदावानलालीविषयजलधिवेलांश्वभ्रसौधप्रतोलीम्।मदन
दंष्ट्रांमोहतंत्रासवित्रींपरिहरपरिणामैःस्थैर्यमालंब्यनारीम्॥५४॥अथवा॥यभिर्निर्जन्मनिर्विसौदूषिताय

पिस्त्रियः॥ न थाप्येकांततस्तासां विद्यते नाघसंचयः॥५५॥ ननु संति जीवलोके काश्चिच्छमशीलसंयमोपेताः॥
वंशतिलकभूताः श्रुतसत्यसमन्विता नार्यः॥५६॥ सतीत्वेन महत्वेन वृत्तेन विनयेन च॥ विवेकेन स्त्रियः काश्चि
द्भूषयंति धरातलं॥५७॥ निर्विण्णैर्भवसंक्रमाच्छ्रुतधरैरेकांततो निस्पृहैर्नार्यो यद्यपि निंदिताः शमधनैर्ब्र
चारित्रयुक्ताः
लंबिभिः॥ निंद्यंते न तथापि निर्मलयमस्वाध्यायवृत्तांकिता निर्वेदप्रशमादिपुण्यचरितैर्याः शुद्धिभू
५८॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे स्त्रीस्वरूपप्रतिपादनप्रकरणं॥ छ॥ स्मरज्व
घृतेन — घृतसिंचिता — आलिंगितः
लनसंभ्रांतो यः प्रतीकारमिच्छति मैथुनेन स दुर्बुद्धिराज्येनाग्निं निषेधति॥१॥ वरमाज्यच्छटासिक्तः परिष्व
अग्निः — योनिस्थानं — गतबुद्धयः
प्राणांते न पुनर्दुर्गतिद्वारं योषितां जघनस्थलं॥२॥ स्मरपीतज्वरातंकशंकिताः क्षीणबुद्धयः॥ विशंति व

[विरसाय]
पंकेतत्प्रतीकारवांछया॥३॥ वासनाजनितंमन्येसौख्यंस्त्रीसंगसंभवं सेव्यमानंयदंतेस्याद्वैरस्यायैवकेवलं॥४॥
पूयतिर्यथोन्मत्तः पश्यत्यश्मापिकांचनं मैथुनेपितथासौख्यंप्राणीरागांधमानसः॥५॥ अपथ्यानियथारोगीप
[निर्लज्य] [विध्याप्यं] [वर्द्धित]
थ्यबुध्यानिषेवते सुखबुध्यातथांगानिस्त्रीणांकामीगतत्रपः॥६॥ दीकस्निग्धभूतेयथादीपंनिर्वाणमपिनिंदितं स्म
[विषपक्वफलं सदृश] [प्रथमसमये]
रमूढः सुखंतद्वद्दुःखमप्यत्रमैथुनं॥७॥ किंपाकफलसमानंवनितासंभोगसंभवंसौख्यं आपातेरमणीयंप्र
यतेविरसमवसाने॥८॥ मैथुनाचरणेकर्मनिर्घृणैः क्रियतेधमं पीयतेवदनंस्त्रीणांलालांबुकलुषीकृतं॥९॥ कं
[कुष्टरोगी] [कामस]
डूयनंतनुखेदाद्धेत्तिकुष्टीयथासुखं तीव्रस्मररुजातंकपीडितोमैथुनंतथा॥१०॥ अशुचीन्यंगनांगानिस्मरा
[पीडितविषपीडीता]
र्त्तीविषमूर्छिताः जिह्वाभिर्विलिहंत्युच्चैः शुनीनामिवकुक्कुराः॥११॥ ग्लानिर्मूर्छाभ्रमःकंपःश्रमःस्वेदोंगवि ॥४ण॥

उदये ज्ञानासी

मर्माणि विपाके ज्ञास्यसि स्वयं ॥२०॥ मैथुनाचरणे मूढ म्रियंते जंतुकोटयः ॥ योनिरंध्रसमुत्पन्ना लिंगसंघट्टपी
डिताः ॥२१॥ बीभत्सानेकदुर्गंधमलाक्तं स्वकलेवरं ॥ यत्र तत्र वपुः स्त्रीणां कस्यास्तु रतये भुवि ॥२२॥ उक्तं च ॥ उत्ता
नोच्छूनमंडूकदारितोदरसन्निभे ॥ चर्मरंध्रे मनुष्याणां मपूर्वः कोप्ययं मद्ग्रहः ॥२३॥ सर्वाशुचिमये काये दुर्गंधामे
ध्यसंभृते ॥ रमंते रागिणः स्त्रीणां विरमंति तपस्विनः ॥२४॥ कुथितकुणपगंधं योषितां योनिरंध्रं कृमिकुलशत
पूर्णं निर्झरत्क्षारवारि ॥ त्यजति मुनिनिकायः क्षीणजन्मप्रबंधो भजति मदनवीरप्रेरितो गीवराकः ॥२५॥ इ
त्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे मैथुनप्रकरणं ॥छ॥ विरज्य कामभोगेषु संगेभ्यो योत्र गीति

कुपित सर्प सदृश

प्राणप्रियं सकृद्दाहि रिवं स्त्रीणां संसर्गाद्धि निवर्तते ॥ यथा सद्यो विलीयंते गिरयो वज्रताडिताः ॥ तथा मन्त्रं नापम

कयाचं

या॥ क्षयरोगादयो दोषाः मैथुनोत्थाः शरीरिणाम्॥१२॥ अनेकदुःखसंतान निदानं विद्धि मैथुनं। कथं तदपि

ऽविद दुर्गंधतां

धबुद्धय॥१३॥ कुष्टव्रणमिवाजस्त्रं वातिस्त्रवति पूतिकं। यत्स्त्रीणां जघनद्वारं रतये तद्धि रागिणां॥१

प्रेते

काकः कृमिकुलाकीर्णे करंके कुरुते रतिं। यथा तद्वद्वराकोयं कामी स्त्रीगुह्यमंथने॥१५॥ वकुंभपिल

दुर्गंधे मूत्रपूर्णे तद्वारे जघनबिले वनितानां रमते बालो न तत्वज्ञः॥१६॥ स्वतालुरक्तं किल कुक्कुरधमैः

पते यद्वद्दिहास्थिचर्वणात्॥ तथा विटैर्विद्धि वपुर्विडंबनैर्निषेव्यते मैथुनसंभवं सुखं॥१७॥ अशुचिषं

घृणा रक्तादिअशुचिषु

गेषु संगताः पश्य रागिणः॥ जुगुप्सां जनयंत्येते लोलंतः कृमयो यथा॥१८॥ योनिरंध्रमिदं स्त्रीणां दुर्गतेर्द्वारमं

विदार्यंति

ग्रिमं॥ तत्त्यजंति ध्रुवं धन्या न दीना दैववंचिताः॥१९॥ मालतीवं मृदून्यासां विद्धि चांगानि योषितां॥ दारयिष्यं

निकटवर्त्ती
यावन्नितंबिनीभोगिभ्रकुटिं न समीक्षते ॥१॥ यासां संकल्पलेशोपि तनोति मदनज्वरं ॥ प्रत्यासत्तिर्न्न किं तासां रु-
रोधयति
णद्धि चरणश्रियं ॥२॥ यस्याः संसर्गमात्रेण यतिभावः कलंक्यते ॥ तस्याः किं न कथालापैर्भ्रूभंगैश्चारुविभ्रमैः ॥
परिज्ञातं दृष्टं
॥३॥ सुचिरं सुष्ठु निर्णीतं लब्धं वा वृद्धसंनिधौ ॥ लुप्यते स्त्रीमुखालोकाद्वृत्तरत्नं शरीरिणां ॥४॥ पुस्तोपलविनिष्प-
न्नं दारुचित्रादिकल्पितं ॥ अपि वीक्ष्य वपुः स्त्रीणां मुह्यत्यंगी न संशयः ॥५॥ दृष्टिपातो भवेत्पूर्वं व्यामुह्यति ततो म-
नः ॥ प्रणिधत्ते जनः पश्चात्तत्कथां गुणकीर्त्तनैः ॥६॥ ततः प्रेमानुबंधः स्यादुभयोरपि निर्भरं ॥ उत्कंठते ततश्चेतः प-
परमकोटीसीमां
मकाष्ठाप्रतिष्ठितं ॥७॥ दानदाक्षिण्यविश्वासैरुभयोर्वर्द्धते स्मरः ॥ ततः शाखोपशाखाभिः प्रीतिवल्ली विसर्प्पति ॥
क्रीडा
॥८॥ मनो मिलति चान्योन्यं निःशंकं संगलालसं ॥ प्रणश्यति ततो लज्जा प्रेमप्रसरपीडिता ॥९॥ निःशंकीकुरुते न-

प्रहारेणाल्पचेतसः॥२॥यस्तपस्वीव्रतीमौनीसंवृतात्माजितेंद्रियः॥कलंकयतिनिःशंकंस्त्रीसखःसोपिसंयमं

[gloss: पूर्णे] [gloss: वर्द्धते]

॥३॥मासेमासेव्यतिक्रांतेयःपिबत्यंबुकेवलं॥विमुह्यतिनरःसोपिसंगमासाद्ययोषितः॥४॥सर्वत्राप्युपचीयंतेसं

[gloss: प्रकटती] [gloss: स्वभावत]

यमाद्यास्तपस्विनाम्॥गुणाःकिंत्वंगनासंगंप्राप्ययांतिक्षयंक्षणात्॥५॥संचरंतिजगत्यस्मिन्स्वेच्छयाया

॥विलीयंतेपुनर्नारीवदनेंदुविलोकनात्॥६॥तावद्धत्तेमुनिःस्थैर्यंश्रुतंशीलंकुलक्रमं॥यावन्मत्तांग

नावागुराभिर्निरुध्यते॥७॥नवनीतनिभंपुंसांमनःसद्योविलीयते॥वनितावह्निसंतप्तंसतामपिनसंशयः॥

अंतःसुप्तोपिजागर्तिस्मरःसंगेनयोषिताम्॥रोगव्रजइवापथ्यसेवासंभावितात्मनाम्॥९॥क्रियतेयैर्मन

स्थैर्यंश्रुतप्रशमसंयमैः॥तेपिसंसर्गमासाद्यवनितानांक्षयंगताः॥१०॥स्थिरीकृत्यमनस्तत्त्वंतावत्तिष्ठतिसं

एकांते

रहोजल्पावलंबितं वीक्षणादीधनोद्धतः कामाग्निः प्रविजृंभते ॥२०॥ बहिरंतस्ततस्तेन दह्यमानोग्निना भृशं ॥ अ
विचार्य जनः शीघ्रं ततः पापे प्रवर्तते ॥२१॥ श्रुतं सत्यं तपः शीलं विज्ञानं व्रतमुत्तमम् ॥ इंधनीकुरुते मूढः प्रवि
ष्टः वनितानले ॥२२॥ स्फुरंति हृदि संकल्पा ये स्त्रीव्यासक्तचेतसां ॥ रागिणां तानिह भ्रातर्न कोपि गदितुं क्षमः ॥
२३॥ संसर्गप्रभवान्नूनं गुणा दोषाश्च देहिनाम् ॥ एकांततः सदोषाय स्त्रीभिः सार्द्धं कृतः क्षणात् ॥२४॥ पुण्यानुष्ठान
संभूतं महत्वं क्षीयते नृणाम् ॥ सद्यः कलंक्यते वृत्तं साहचर्येण योषिताम् ॥२५॥ अपवादमहापंके निमज्जंति न संशय
यमिनोपि जगद्वंद्यवृत्तेरामास्पदं श्रिताः ॥२६॥ अनंतमहिमाकीर्णं प्रोत्तुंगं वृत्तपादपं ॥ वामा कुठारधारेयं विछिन
त्त्याशु देहिनाम् ॥२७॥ लोचनेषु मृगाक्षीणां क्षिप्तं किं चित्तदंजनं ॥ येनापांगैः क्षणादेव मुह्यत्यासां जगत्रयं ॥२८॥ कौतुके

क्षणेनापि हि दृष्टिर्लग्नांगनामुखे। कष्टं न शक्यते लोकैः पंकमग्नेव हस्तिनी॥२९॥ एकत्र वसतिः साध्वी वरं व्याघ्रोर
गैः सह। पिशाचैर्वा न नारीभिर्निमेषमपि शस्यते॥३०॥ भ्रूलताचलनैर्येषां स्खलत्यमरमंडली। तेपि संसर्गमात्रेण
वनितानां विडंबिताः॥३१॥ त्यजंति वनिताचौररुद्धाश्चारित्रमौक्तिकं। यतयोपि तपोभंगकलंकमलिनाननाः॥३२
ब्रह्मचर्यच्युतः सद्यो महानप्येवमन्यते। सर्वैरपि जनैर्लोके विध्यातइव पावकः॥३३॥ विक्षुभ्यति जगद्येषां
पादपांशुभिः। वंचितास्तेपि वनितापांगवीक्षणात्॥३४॥ तपःश्रुतकृताभ्यासा ध्यानधैर्यावलंबिनः। स्वयं
यमिनः पूर्वं योषाभिः कश्मलीकृताः॥३५॥ द्युते यत्र मातंगैर्नगोत्तुंगैर्जलप्लवे। तत्र मूढा न संदेहः प्रागेव मृग
काः॥३६॥ इह हि वदनकंजं हावभावालसाढ्यं मृगमदललितांकं विस्फुरद्भ्रूविभंगं। लोक्षणमपि रमणीनां लो

नैर्वीक्ष्यमाणां जनयति हृदि कंपं धैर्य्यनाशं च पुंसां ॥३७॥ [३८?] यासां सीमंतिनीनां कुरवकतिलकाशोकमाकंदवृक्षाः प्रा
प्योच्चैर्विक्रियं ते ललितभुजलतालिंगनादीन्विलासान् ॥ तासां पूर्णेंदुगौरं मुखकमलमलं वीक्ष्य लीलालस
त्कं को योगी यस्तदानीं कलयति कुशलो मानसं निर्विकारं ॥३९॥ यावद्वृत्ते प्रतिष्ठां परिहरति मनश्चापलं चेष्टितं
वत्तावत्सिद्धांतसूत्रं स्फुरति हृदि परं विश्वतत्त्वैकरूपं ॥ क्षीराकूपार (दुग्धसमुद्र) वेलावलयविलसितैर्मानिनीनां कटाक्षैर्या
वन्नो हन्यमानं कलयति हृदयं दीर्घदोलायतानि ॥३९॥ संसर्गाद्दुर्बलां दीनां संत्रस्तामर्थ्यनिष्ठतीम् ॥ कुष्टिनं
रोगिणीं जीर्णां दुःखितां क्षीणविग्रहाम् ॥४०॥ निंदितां निंद्यजातीयां स्वजातीयां तपस्विनीम् ॥ बालामपि तिर
श्चीं स्त्रीं कामी भोक्तुं प्रवर्तते ॥४१॥ अंगनापांगबाणाली प्रपतंतीं निवारय ॥ विधाय हृदयं धीरं दृढं वैराग्यवर्मितं ॥४२॥

ब्रह्मचर्यविशुद्ध्यर्थं संगः स्त्रीणां न केवलं। त्याज्यः पुंसामपि प्रायो विटविद्यावलंबिनां॥४३॥मद्यैः कामुकैः
चकैर्मार्गविच्युतैः। स्तब्धलुब्धाधमैः सार्द्धं संगो लोकद्वयांतकः॥४४॥सूत्रे दत्तावधानाः प्रशमयमतपो
लब्धावकाशाः शाश्वत्संन्यस्तसंगा विमलगुणमणिग्रामभाजः स्वयं ये। श्रूयंते कामिनीनां स्तनजघनमु
कनांतेपि भग्नाः मग्नं तो मोहवार्द्धौ जिनपतियतयः प्राक्प्रसिद्धाः कथासु॥४५॥इत्याचार्यश्रीशुभचंद्रवि
ते ज्ञानार्णवे योगप्रदीपाधिकारे संसर्गप्रकरणम्॥२७॥लोकद्वयविशुद्ध्यर्थं भावशुद्ध्यर्थमंजसा॥ विद्या
अर्थं वृद्धसेवैव प्रशस्यते॥१॥कषायदहनः शांतिं याति रागादिभिः समं। चेतः प्रशांतिमाधत्ते वृद्धसेवावलंबि
म्॥२॥निश्चलीकुरु वैराग्यं चित्तदैत्यं नियंत्रय। आसादय परां शुद्धिं वुबुद्धे वृद्धसाक्षिकं॥३॥स्वतत्वनिष्टोद्धृतं वि

[शून्यवादी] [परमागमे] [संत्यक्तो] [प्राप्य] [कसोटी] [को]

संतोष श्वेतकेशैः मनः कलंकता

विकालोकवर्द्धितं येषां बोधमयं चक्षुस्ते वृद्धा विदुषां मता ॥४॥ तपःश्रुतधृतिध्यानविवेकयमसंयमैः । ये वृद्धास्ते
त्र शस्यंते न पुनः पलितांकुरैः ॥५॥ प्रत्यासत्तिं समायातैर्विषयैः स्वांतरंजकैः । न धैर्यं स्खलितं येषां ते पि वृद्धा बुधैर्म
ताः ॥६॥ न हि स्वप्ने पि संजाता येषां सद्वृत्तवाच्यता । यौवने पि मता वृद्धास्ते धन्याः शीलशालिनः ॥७॥ किंच प्रायः
शरीरशैथिल्यात्स्यात्स्वस्था मतिरंगिनां । यौवने तु क्वचित्कुर्याद्दृष्टतत्त्वो पि विक्रियां ॥८॥ वार्द्धके न वपुर्द्वत्ते शैथि
ल्यं च यथा यथा । तथा तथा मनुष्याणां विषयाशा निवर्तते ॥९॥ हीमांश्चरणसंभ्रांतो वृद्धो पि तरुणायते । तरुणो
पि सतां धत्ते श्रियं सत्संगवासितः ॥१०॥ माक्षाद्वृद्धानुसेवेयं मातेव हितकारिणी । शिक्षादायिनी विनेत्री वार्थानां दीपिकेवार्थदर्शि वागि
नी ॥११॥ कदाचिद्दैववैमुख्यान्मातापि विकृतिं भजेत् । न देशकालयोः क्वापि वृद्धसेवा कृतासती ॥१२॥ अंधएववरा

कौमौनसतांयस्यभारती॥श्रुतिरंध्रंसमासाद्यप्रस्फुरत्यधिकंहृदि॥१३॥सत्संसर्गसुधास्यंदैःपुंसांहृदिपवि

कमलं नविकाशितं

ज्ञानलक्ष्मीःपदंधत्ते विवेकमुदितासती॥१४॥वृद्धोपदेशधर्मांशुंप्राप्यचित्तकुशेशयं॥नप्राबोधिकथंत

अन्वेष्यमान प्रमाणंकरोति

यमश्रीःस्थितिंदधे॥१५॥अनुपास्यैववयोवृद्धमंडलीमंदविक्रमः॥जगत्तत्वस्थितिंवेत्तिसमिमीतेनभःकरैः॥

प्रसरति आह्लादितं

१६॥पूतीतांशुरश्मिसंपर्कात्द्विसर्प्पतियथांबुधिः॥तथासद्वृत्तसंसर्गान्नृणांप्रज्ञापयोनिधिः॥१७॥अनेरा

नीकरोति अग्निं

धातिविध्याप्यांशाहविर्भुजं॥आमाद्यंयमिनांयोगीवाक्यथांतीतसंयमं॥१८॥वृद्धानुजीविनामेवस्य

सुप्राप्येषु

त्रिवादिसंपदः॥भवत्यपिचनिर्लेपंमनःक्रोधादिकश्मलं॥१९॥सुलभेष्वपिभोगेषुनृणांतृष्णानिवर्त्तते॥म

सहितै

सर्गसुधास्यंदैःप्राश्वदीद्वीकृतात्मनां॥२०॥कातरत्वंपरित्यज्यधैर्यमेवावलंबते॥सत्संगजपरिज्ञानरंजि

त्माजनः स्वयं॥२१॥पुण्यात्मनां गुणग्रामसीमासंसक्तमानसैः॥तीर्यते यमिभिः किं न कुविद्यागरसागरः॥२२
[लभते]
तत्वे तपसि वैराग्ये परां प्रीतिं मम श्रुते हृदि स्फुरति यस्योच्चैर्वृद्धवागदीपसंततिः॥२३॥मिथ्यात्वादिनगोत्तुंग
[अज्ञानअंधकार]
शृंगभंगाय कल्पितः॥विवेकः साधुसंगोत्थो वज्रादप्यजयो नृणां॥२४॥अप्यनादिसमुद्भूतं क्षीयते निविडं त
[वृद्धसे बिनां] [मनोत्पन्नं]
मः॥वृद्धानुयायिनां च स्याद्विश्वतत्वैकनिश्चयः॥२५॥अंतःकरणजं कर्म्म यः स्फेटयितुमिच्छति स योगिवृंद
[सेवा]
मीराध्यं करोत्यात्मन्यैव स्थितिमं॥२६॥क्षणैकैवं महतां सेवा स्याज्जेत्री भुवनत्रये॥यथैव यमिनामुच्चैरंतर्ज्योति
[आरोहति] [निर्भयः] [योगिभिः]
र्विजृंभते॥२७॥दृष्ट्वा श्रुत्वा यमी योगी पुण्यानुष्ठानमूर्जितं॥आक्रामति निरातंकः पदवीं तैरुपासितां॥२८॥वि
श्वविद्यासु चातुर्य्यं विनयेष्वतिकौशलं॥भावसिद्धिः स्वसिद्धांते सत्संगादेव देहिनाम्॥२९॥यथात्र शुद्धिमाधा

स्वर्णमित्यंतमग्निना मनः शुद्ध्यति तथा ध्यानी योगिसंसर्गवह्निना ॥३०॥ भयलज्जाभिमानेन धैर्य्यमेवावलंब

(संगर्ग)
ते ॥ साहचर्यं समासाद्य संयमी पुण्यकर्मणां ॥३१॥ शरीराहारसंसारकामभोगेष्वपि स्फुटं ॥ विरज्यति नरः क्षिप्रं

(परमागमे स्थापितः)
सद्भिः सूत्रे प्रतिष्ठितः ॥३२॥ यथा यथा मुनिर्धत्ते चेतः सत्संगवासितं ॥ तथा तथा तपोलक्ष्मीः परां प्रीतिं प्र

(रक्षणशीलं)
येत ॥३३॥ उक्तं च ॥ न हि भवति निर्विगोपकमनुपासितगुरुकुलस्य विज्ञानं ॥ प्रकटितपश्चिमभागं पश्य

तनृत्तं मयूरस्य ॥३४॥ तपः कुर्वंतु वा मा वा चेद्वृद्धान्समुपासते ॥ तीर्त्वा व्यसनकांतारं यांति पुण्यां गतिं नराः ॥

(प्राप्यते)
३५॥ कुर्वन्नपि तपस्तीव्रं विदन्नपि श्रुतार्णवं ॥ नासादयति कल्याणं चेद्वृद्धानवमन्यते ॥३६॥ मनोऽभिमतनिः

(संगर्ग)
लसंपादनक्षमं ॥ कल्पवृक्षमिवोदारं साहचर्यं महात्मनां ॥३७॥ जायते यत्समासाद्य न हि स्वप्नेऽपि दुर्मतिः

मुक्तिबीजंतदेकंस्यादुपदेशाक्षरंसतां॥४०॥तन्नलोकेपरंधामनतत्कल्याणमग्रिमं॥यद्योगिपदराजीवसंश्रि
तैर्नाधिगम्यते॥४१॥अंतर्हीनमपिध्वांतमनादिप्रभवंनृणां॥क्षीयतेसाधुसंसर्गप्रदीपप्रसराहतं॥४२॥दहति
संयमं संसार
दुरितकक्षंकर्मबंधंलुनीतेवितरतियमसिद्धिंभावशुद्धिंतनोति॥नयतिजननतीरंज्ञानराज्यंचदत्तेध्रुवमि
प्रधान
हमनुजानांवृद्धसेवैवसाध्वी॥४३॥वृद्धसेवा॥विरमविरमसंगान्मुंचमुंचप्रपंचंविसृजविसृजमोहंविद्धिवि
द्धिस्वतत्वं॥कलयकलयवृत्तंपश्यपश्यस्वरूपंकुरुकुरुपुरुषार्थंनिर्वृतानंदहेतोः॥४४॥अतुलसुखनिधा
संकल्पविकल्पं
नंज्ञानविज्ञानबीजंविलयगतकलंकंशांतविश्वप्रचारं॥गलितसकलशंकंविश्वरूपंविशालंभजविगत
समुद्रस्य
विकारंस्वात्मनात्मानमेव॥४५॥धन्यास्तेमुनिमंडलस्यगुरुतांप्राप्ताःस्वयंयोगिनः॥शुद्ध्यत्येवजगत्त्रयीशमवा

श्रीपादरागांकिता॥ तेषां संयमसिद्धयः सुकृतिनां स्वप्नेपि येषां मनो नालीढं विषयैर्न कामविशिखैर्न्नो वा

चनैः॥४४॥ येषां वाग्भुवनोपकारचतुरा प्रज्ञा विवेकास्पदं ध्यानध्वस्तसमस्तकर्मकवचं वृत्तं कलंकोज्झितं

सम्यग्ज्ञानसुधातरंगनिचयैः श्रोतश्च निर्व्वापितं धन्यास्ते प्रशमं यत्वनंगविशिखव्यापारजातारुजः॥४५॥ चं

चच्छ्रिरमप्यनंगपरशुप्रख्यैर्व्व धूलोचनैः येषामिष्टफलप्रदः कृतधियां नोछेदि शीलद्रुमः॥ धन्या

स्तु संततमिलतदुर्व्वारिकामानलज्वालाजालकरालमानसमिदं विश्वं विवेकांबुभिः॥४६॥ यदि विषयपि

शाची निर्गता देहगेहात्सपदि यदि विशीर्णो मोहनिद्रातिरेकः॥ यदि युवतिकरंके निर्ममत्वं प्रपन्नो झगिति

ननु विधेहि ब्रह्मवीथीविहारं॥४७॥ अस्मरज्ञो गीढदुर्व्वारविषयानलकरालितं॥ जगद्यैः शांतिमानीतं ते जिनाः ॥५५॥

क्षेत्रं वास्तु धनं धान्यं द्विपदाश्च चतुःपदा शयनासनं यानं च कुप्यं भांडममी दश

तुन्नां तये ॥४०॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे ब्रह्मप्रकरणं ॥ छ ॥ यानपात्रमि

वांभोधौ गुणवानपि मज्जति ॥ परिग्रहगुरुत्वेन संयमी जन्मसागरे ॥१॥ बाह्यांतर्भूतभेदेन द्विधा ते स्युः परि

परिग्रहाः

ग्रहाः ॥ चिदचिद्रूपिणो बाह्या अंतरंगाश्च चेतनाः ॥२॥ दश ग्रंथा मता बाह्या अंतरंगाश्चतुर्दश ॥ तान्मुक्त्वा भ

व निःसंगो भावशुध्या भृशं मुने ॥३॥ निःसंगोपि मुनिर्न स्यात्संमूर्छन् संगवर्जितः ॥ यतो मूर्छैव तत्वज्ञैः सं

परिग्रहोत्पत्तिः

गसूतिः प्रकीर्तिता ॥४॥ स्वजनधनधान्यदाराः पशुपुत्रपुराकरा गृहं भृत्याः ॥ मणिकनकरजतशय्या

परिग्रहाः

वस्त्राभरणादि बाह्यार्थाः ॥५॥ उक्तं च ॥ मिथ्यात्ववेदरागा दोषा हास्यादयोपि षट् चैव ॥ चत्वारश्च कषा

याश्चतुर्दशाभ्यंतरा ग्रंथाः ॥ इति ॥ दोसंवृतस्य सुवृत्तस्य जिताक्षस्यापि योगिनः ॥ व्यामुह्यति मनः क्षिप्रं

धनांशा व्यालविप्लुतां [पीडितं] ॥७॥ त्याज्य एवाखिलः संगो मुनिभिर्मोक्तुमिच्छुभिः ॥ स [मग] चेत्त्यक्तुं न शक्नोति कार्यस्तर्ह्यात्म [कुरुः]
दर्शिभिः ॥८॥ नाण्वोपि गुणा लोके दोषाः शैलेंद्रसन्निभाः ॥ भवंत्यत्र न संदेहः संगमासाद्य देहिनाम् ॥९॥ अंतर्बा
ह्योः शुद्धोर्योगाद्योगी विशुध्यति ॥ न ह्येकं पत्रमालंब्य व्योम्नि पत्री विसर्प्पति [गच्छति] ॥१०॥ साध्वीयं स्याद्बहिः शुद्धिरंतः
शुद्धात्र देहिनाम् ॥ फल्गुभावं भजत्येव बाह्यात्वाध्यात्मकीं विना ॥११॥ संगात्कामस्ततः क्रोधस्तस्माद्धिंसा तया शु
तेन श्वाभ्री गतिस्तस्यां दुःखं वाचामगोचरं ॥१२॥ संग एव मतः सूत्रं निःशेषानर्थमंदिरं ॥ येनासंतोपि सूयंते [उत्पद्यंते] रागा
रिपवः क्षणे ॥१३॥ रागादिविजयः सत्यं क्षमा शौचं [संतोष] वितृष्णता ॥ मुनेः प्रच्याव्यते [दूरीक्रियते] नूनं संगैर्व्यामोहितात्मनः ॥१४॥ संगाः
मात्र्यं स्वीक्रियंते शरीरिभिः [प्राणिभिः शरीरं] ॥ तत्मागेव मुनिः सारं योगिभिः परिकीर्तितम् ॥१५॥ हृषीकराक्षसानीकं [इंद्रियससमूहं] कषा

क्लेशतां समीपत्वं

भुजगव्रजं वित्तामिषमुपादाय धत्ते कामप्युदीर्णतां ॥१६॥ उन्मूलयति निर्वेदविवेकद्रुममंजरीं । प्रत्यासत्तिं स-

कामबाणैः व्यापितः

मायातः सतामपि परिग्रहः ॥१७॥ लुप्यते विषयव्यालैर्भिद्यते मारमार्गणैः । रुध्यते वनिताव्याधैर्नरः संगैरभिद्रुतः ॥

बाणैः मेरुं

१८॥ यः संगपंकनिर्मग्नोऽप्यपवर्गाय चेष्टते । स मूढः पुष्पनाराचैर्विभिंद्यात्त्रिदशाचलं ॥१९॥ अणुमात्रादपि ग्रंथान्

मोहग्रंथिर्दृढीभवेत् । विसर्पति ततस्तृष्णा यस्यां विश्वं न शांतये ॥२०॥ परीषहरिपुव्रातं तुच्छवृत्तैकभीतिदं । वीक्ष्य

धैर्यं विमुंचंति यतयः संगसंगताः ॥२१॥ सर्वसंगपरित्यागः कीर्तितः श्रीजिनागमे । यस्तमेवान्यथा ब्रूते स हीनः स्वान्

धन पिशाच

घातकः ॥२२॥ यमः प्रशमजं राज्यं तपः श्रुतपरिग्रहं । योगिनोऽपि विमुंचंति वित्तवेतालपीडिताः ॥२३॥ पुण्यानुष्ठानजा-

विघ्नं

तेषु निःशेषाभीष्टसिद्धिषु । कुर्वंति नियतं पुंसां प्रत्यूहं धनसंग्रहाः ॥२४॥ अत्यक्तसंगसंतानो मोक्तुमात्मानमुद्यत-

(तेजः) (मेरु)
बध्नन्नपि न जानाति स्वं धनैः कर्मबंधनैः ॥२५॥ अपि सूर्यस्त्यजेद्धाम स्थिरत्वं वा सुराचलः । न पुनः संगसंकीर्णो मु-
(नपुंसक)
न्यात्संवृत्तेंद्रियः ॥२६॥ बाह्यानपि च यः संगान्परित्यक्तुमनीश्वरः । स क्लीवः कार्मणं सैन्यं कथमग्रे हनिष्यति ॥२७॥
(धनं) (कर्द्दमे)
ड्वल्मीकं रागाद्यरिनिकेतनं । क्रीडास्पदमविद्यानां बुधैर्वित्तं प्रकीर्तितं ॥२८॥ अत्यल्पे धनजंबाले निमग्नो गु-
प्येजगत्यस्मिन्जनः क्षिप्रं दोषलक्ष्यैः कलंक्यते ॥२९॥ संन्यस्तसर्वसंगेभ्यो गुरुभ्योऽप्यतिशंक्यते । धनिभि-
(भयात्)
रात्रावपि न मुष्यते ॥३०॥ भूतस्वजनभूपालदुष्टचौरारिविद्रवात् । बंधुमित्रकलत्रेभ्यो धनिभिः शंक्यते भृशम् ॥३१॥
ध्नाति यज्जीवो धनाशाकश्मलीकृतः । तत्स्यन्नांतिर्यदि क्लेशाद्दकुभिर्जन्मकोटिभिः ॥३२॥ सर्वसंगविनिर्मुक्त-
वृत्ताक्षः स्थिराशयः । धत्ते ध्यानधुरां धीरः संयमी वीरवर्णितां ॥३३॥ संगपंकात्समुत्तीर्णो नैराश्यमवलंबते ।

पराधीनै. तिष्ठंते
नाक्रम्यते दुःखैः पारतंत्र्यैः क्वचिन्मुनिः ॥८४॥ यावंतः कुरुते जंतुः संबंधान्मनसः प्रियान्। तावंतोऽस्य निषन्यंते हृदये शोक

शल्यं चटके
संकुले ॥८५॥ मार्जारभक्षिते दुःखे यादृशं गृहकुर्कुटे। न तादृक् ममताशून्ये कलविंकेऽथ मूषके ॥८६॥ विजने जनसंकी

मुक्तः
र्णे सुस्थिते दुःस्थितेऽपि वा। सर्वत्राऽप्रतिबद्धः स्यात् संयमी संगवर्जितः ॥८७॥ दुःखमेव धनव्यालविषविध्वस्तचेतसां।

विदार्यते मांससहितः
अर्जने रक्षणे नाशे पुंसां तस्य परिक्षये ॥८८॥ स्वजातीयैरपि प्राणी सद्यो निहूयते धनी। यथात्र सामिषः पक्षी पक्षि

वृंदमंडले ॥८९॥ आरंभो जंतुघातश्च कषायश्च परिग्रहात्। जायतेऽत्र ततः पातः प्राणिनां श्वभ्रसागरे ॥९०॥ न स्याद्ध्या

तुं प्रवृत्तस्य चेतः स्वप्नेऽपि निश्चलं। मुनेः परिग्रहग्राहैर्भिद्यमानमनेकधा ॥९१॥ सकलविषयबीजं सर्वसावद्यमूलं नर

आश्रय नाशं पापः पुण्यं
कनगरकेतुं वित्तजातं विहाय। अनुसर मुनिवृंदानंदसंतोषराज्यमभिलषसि यदि त्वं जन्मबंधव्यपायं ॥९२॥ एनःको

भनस्य

धनप्रशक्तमनसांनांमादिहिंसादिनांकस्तस्यार्जनरक्षणक्षयकृतैर्नादाहिदुःखानलैः॥ तत्प्रागेवविचार्यवर्जयवरं

मूढवित्तस्पृहांयेनैकास्पदतांनयासिविषयेपापस्यतापस्यच॥४३॥ एवंतावदहंलभेयविभवंरक्षेयमेवंततस्तद्धृ

आशा

येयमेवमनिशंभुंजीयचैवंपुनः इत्याशारुद्धमानसमृगांनात्मानमुत्पश्यति॥ क्रुद्धक्रूरकृतांतदंत

यंत्रांतरालस्थितं॥४४॥ इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेपरिग्रहदोषविचारप्र०

त्याग

॥छ॥ बाह्यांतर्भूतनिःशेषसंगसंन्याससिद्धये आशांसद्भिर्निराकृत्यनैराश्यमवलंबितं॥१॥ यावद्यावच्छरी

धनाशावाविसर्पति॥ तावत्तावन्मनुष्याणांमोहग्रंथिर्दृढीभवेत॥२॥ अनिरुद्धासतीशश्वदाशाविश्वंप्रसर्पति॥

वांछितं

मूलासौपुनश्छेत्तुंनशक्यते॥३॥ यद्याशाशांतिमायातातदासिद्धंसमीहितं॥ अन्यथाभवसंभूतोदुःख

द्धिर्दुरुत्तरः॥४॥ यमप्रशमराज्यस्य सद्बोधार्कोदयस्य च विवेकस्यापि लोकानामाशैव प्रतिषेधिका॥५॥ आशामपि
न समर्थोतीयः क्षणं रक्षितुं क्षमः तस्यापवर्गसिद्ध्यर्थं वृथा मन्ये परिश्रमं॥६॥ आशैव मदिराक्षाणामाशैव विषमंजरी॥
आशामूलानि दुःखानि प्रभवंतीह देहिनां॥७॥ तावन्मुखिनो धीरा यैराशाराक्षसी हता महाव्यसनसंकीर्णोत्ती

मोहं प्राप्ताः

र्णः क्लेशसागरः॥८॥ येषामाशा कुतस्तेषां मनःशुद्धिः शरीरिणां॥ अतो नैराश्यमालंब्य शिवीभूता मनीषिणः॥९॥
सर्वाशां यो निराकृत्य नैराश्यमवलंबते तस्य क्वचिदपि स्वांतं संगपंकेन लिप्यते॥१०॥ तस्य सत्यं श्रुतं वृत्तं विवेकस्त

विनाशं　　अमर्यादः

त्वनिश्चयः॥ निर्ममत्वं च यस्याशापिशाची निधनं गता॥११॥ यावदाशानलश्चित्ते जाज्वलीति विशृंखलः॥ तावत्तव

पुरुषं　　बद्धस्नेहः

महादुःखदाहशांतिः कुतस्तनी॥१२॥ निराशातासुधापूरैर्यस्य चेतः पवित्रितं तमालिंगति सोत्कंठं प्रशमश्रीर्बद्धसौहृदा
॥१३॥

॥ज्ञानार्णव॥
॥५९॥

नमज्जति मनो येषामाशांभसि दुरुत्तरे। तेषामेव जगत्यस्मिन् फलितो ज्ञानपादपः॥१५॥ शक्रोपि न सुखी स्वर्गे स्या(शा)
दाशानलदीपितः। विध्याप्याशानलज्वालां श्रयंति यमिनः शिवं॥१६॥ चरस्थिरार्थजातेषु यस्याशा प्रलयं गताः।
किं न तस्य लोकेस्मिन् मन्ये सिद्धं समीहितं॥१७॥ चापल्यं त्यजति स्वांतं विक्रियाश्चाक्षदंतिनः। प्रशाम्यति
न्निनैराश्याधिष्ठितात्मनां॥१८॥ किमत्र बहुनोक्तेन यस्याशा निधनं गता। स एव महतां सेव्यो लोकद्व
(त्यागः) (हे आचर)
(यो)॥आशा जन्मोग्रपंकाय शिवायाशाविपर्ययः। इति सम्यक् समालोच्य यद्धितं तत्समाचर॥२०॥ दीनस्याद्विक्षि
(गतविकल्पाः) (आशापिशाचीनष्टाः)
प्तानां स्वेष्टसिद्धिः क्वचिन्नृणां। कथं प्रक्षीणविक्षेपा भवंत्याशाग्रहक्षता॥२१॥ विषयविपिनवीथीसंकटे पर्यटं
झटिति घटितवृद्धिः क्वापि लब्धावकाशा। अपि नियमिनरेंद्रानाकुलत्वं नयंती छलयति खलु कं वा नैयमाशा

॥५९॥

ज्ञाची॥२१॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे आज्ञाविचयप्रकरणं॥ छ॥ इति पंचमहा
व्रतानि॥ महत्वहेतोर्गुणिभिः श्रितानि महांति मत्वा त्रिदशैर्नुतानि महासुखज्ञाननिबंधनानि महाव्रतानीति स
तां मतानि॥१॥ उक्तं च॥ आचरितानि महद्भिर्यच्च महांतं प्रसाधयंत्यर्थं स्वयमपि महांति यस्मान्महाव्रतानीत्यत
वाग्मनोइत्यादि
स्तानि॥२॥ महाव्रतविशुद्ध्यर्थं भावनापंचविंशतिः॥ परमां साध्यनिर्वेदपदवीं भव्य भावय॥३॥ ईर्याभाषैषणादाना
नामा
क्षेपोत्सर्गसंज्ञकाः॥ सद्भिः समितयः पंच निर्दिष्टाः संयतात्मभिः॥४॥ वाक्कायचित्तजानेकसावद्यप्रतिषेधकं त्रि
योगरोधनं वा स्याद्यत्तद्गुप्तित्रयं मतं॥५॥ तद्यथा॥ सिद्धक्षेत्राणि चैत्यानि जिनबिंबानि वंदितुं गुर्वाचार्यतपोवृद्धा
न्सेवितुं व्रजतोऽथवा॥६॥ दिवा सूर्यकरैः स्पृष्टं मार्गं लोकातिवाहितं दयार्द्रस्यांगिरक्षार्थं शनैः संश्रयतो मुनेः॥७

कर्कशा परुषा कट्वी निष्ठुरा परकोपा नीछेदंकरा मध्यकृशा अतिमानिनी भयंकरा भूतहिंसाकरा चेति एता दश भाषा मुक्ता ॥१॥

जुडाप्रमाण

वालोक्य यत्नेन युगमात्राहितेक्षणः ॥ प्रमादरहितस्यास्य समितीर्या प्रकीर्तिता ॥८॥ धूर्त्तकामुकक्रव्याद
चौरचार्वाकसेविता ॥ शंकासंकेतपापाढ्या त्याज्या भाषा मनीषिभिः ॥९॥ दशदोषविनिर्मुक्तां सूत्रोक्तां
संमतां गदतोस्य मुनेर्भाषा स्याद्भाषासमितिः परा ॥१०॥ उद्गमोत्पादसंभूतैर्धूमांगारादिकैस्तथा दोषैर्म्म
निर्मुक्तं विघ्नशंकादिवर्जितम् ॥११॥ शुद्धं काले परैर्दत्तमनुद्दिष्टमयाचितं अदतोन्नं मुनेर्ज्ञेया एषणा
तिः परा ॥१२॥ शय्यासनोपधानानि शास्त्रोपकरणानि च पूर्वं सम्यक् समालोक्य प्रतिलिख्य पुनः पुनः ॥
१३॥ गृह्णतोस्य प्रयत्नेन क्षिपतो वा धरातले भवत्यविकला साधोरादानसमितिः स्फुटा ॥१४॥ विजंतुके
मूत्रश्लेष्ममलादिकं ॥ क्षिपतोतिप्रयत्नेन व्युत्सर्गसमितिर्भवेत् ॥१५॥ विहाय सर्वसंकल्पान् रागद्वेषावलं

नं स्वाधीनं कुरुते चेतः समत्वे सुप्रतिष्ठितम् ॥१६॥ सिद्धांतसूत्रविन्यासे शश्वत्प्रेरयतोथवा ॥ भवत्यविकलानाम

मनोगुप्तिर्मनीषिणः ॥१७॥ साधुसंवृत्तवाग्वृत्तेर्मौनारूढस्य वा मुनेः ॥ संज्ञादिपरिहारेण वाग्गुप्तिः स्यान्महामुनेः ॥

१८॥ स्थिरीकृतशरीरस्य पर्यंकं संश्रितस्य वा ॥ परीषहप्रपातेपि कायगुप्तिर्मता मुनेः ॥१९॥ जनन्यो [मातरः] यमिनाम

ष्टौ रत्नत्रयविशुद्धिदाः ॥ एताभी रक्षितं दोषैर्मुनिवृंदं न लिप्यते ॥२०॥ इति कतिपयवर्णैश्चर्चितं चित्ररूपं चरण

मनघमुच्चैश्चेतसां शुद्धिधाम ॥ अविदितपरमार्थैर्यन्नसाध्यं विपक्षैस्तदिदमनुसरंतु ज्ञानिनः शांतदोषाः ॥

२१॥ सम्यगेतत्समासाद्य त्रयं त्रिभुवनार्चितं ॥ द्रव्यक्षेत्रादिसामग्र्या भव्यः सपदि [शीघ्र] मुच्यते ॥२२॥ एतत्समयसर्वस्वं

मुक्तेश्चैतन्निबंधनं ॥ हितमेतद्धि जीवानामेतदेवाग्रिमं पदं ॥२३॥ ये याता यांति यास्यंति यमिनः पदमव्ययं ॥ सम

॥ध्यैवंतेनूनंरत्नत्रयमखंडितं॥२४॥साक्षादिदंमनासाद्यंजन्मकोटिशतैरपि॥दृश्यतेनहिकेनापिमुक्तिश्रीमुख
॥२५॥अथवा॥दृग्बोधचरणान्याहुःस्वमेवाध्यात्मवेदिनः॥यतस्तन्मयएवासौशरीरीवस्तुतःस्थितः॥२६॥
निर्णीतेस्मिन्स्वयंसाक्षान्नापरःकोपिमृग्यते॥यतोरत्नत्रयस्यैषप्रसूतेरग्रिमंपदं॥२७॥जानातियःस्वयंस्व
स्वरूपंगतभ्रमः॥तदेवंतस्यविज्ञानंतद्वृत्तंतच्चदर्शनं॥२८॥स्वज्ञानादेवमुक्तिःस्याज्जन्मबंधस्ततोन्यथा॥एत
देवजिनोद्दिष्टंसर्वस्वंबंधमोक्षयोः॥२९॥आत्मैवममविज्ञानंदृग्वृत्तंचेतिनिश्चयः॥मत्तःसर्वेप्यमीभावाबा
संयोगलक्षणाः॥३०॥अयमात्मैवसिद्धात्मास्वशक्त्यापेक्षयास्वयं॥व्यक्तीभवतिसध्यानवह्निनात्यंतसाधि
३१॥एतदेवपरंतत्वंज्ञानमेतद्धिशाश्वतं॥अतोन्योयःश्रुतस्कंधःसतदर्थंप्रपंचितः॥३२॥अपास्यकल्पनाजा

चिदानंदमये स्वयं॥ यः स्वरूपे लयं प्राप्तः स स्यात्तत्र यास्पदं॥ ३३॥ सुप्तेष्वन्येषु जागर्त्ति पश्यत्यात्मानमात्मनि॥ वीत
त्रयरहितं
विश्वविकल्पोयं स स्वदर्शी बुधैर्मतः॥ ३४॥ निःशेषक्लेशनिर्मुक्तममूर्त्तं परमाक्षरं॥ निःप्रपंचं व्यतीताक्षं पश्य
स्वं स्वात्मनि स्थितं॥ ३५॥ नित्यानंदमयं शुद्धं विश्वरूपं सनातनं॥ पश्यात्मनि परं ज्योतिरद्वितीयमनव्ययं॥ ३६॥ य
सिद्धं
स्यां निशि जगत्सुप्तं तस्यां जागर्त्ति यः स्वयं॥ निःपन्नं कल्पनातीतं स वेत्त्यात्मानमात्मनि॥ ३७॥ या निशा सर्वभूते
षु तस्यां जागर्त्ति संयमी॥ यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥ ३८॥ यस्य हेयं न चादेयं निःशेषं भुवनत्र
यं॥ उन्मीलयति विज्ञानं तस्य स्वान्यप्रकाशकं॥ ३९॥ दृश्यंते भुवि किं न तेल्पमतयः संख्याव्यतीताश्चिरं ये ली
लां परमेष्ठिनो निजनिजैस्तन्वंति वाक्यैः परां॥ तं साक्षादनुभूय नित्यपरमानंदांबुराशिं पुनर्ये जन्मभ्रममुत्सृजंति॥

सहसा धन्यास्तु ते दुर्लभाः ॥४०॥ किंच ॥ सत्यं यममहारामं यमप्रशमजीवितं देहिनां निर्दहत्येव क्रोधाद्याग्निः समु
त्थितः ॥४१॥ दृग्बोधादिगुणानर्घ्यरत्नप्रचयसंचितं भांडागारं दहत्येव क्रोधवह्निः समुत्थितः ॥४२॥ संयमोत्त
मुनिः
पूषं सर्व्वाभिमतसिद्धिदं कषायविषसेकोयं निःसारी कुरुते क्षणात् ॥४३॥ तपःश्रुतयमाधारं वृत्तविज्ञानवर्द्धि
तं भस्मी भवति रोषेण पुंसां धर्मात्मकं वपुः ॥४४॥ अयं समुत्थितः क्रोधो धर्मसारं सुरक्षितं निर्दहत्येव नि
ष्कारापमिवानल ॥४५॥ पूर्वमात्मानमेवासौ क्रोधांधो दहति ध्रुवं पश्चादन्यान्नवालोको विवेकविकलाश
नरकं
यः ॥४६॥ कुर्वंति यतयोप्यत्र क्रुद्धास्तत्कर्म निंदितं हत्वा लोकद्वयं येन विशंति धरणीतलं ॥४७॥ क्रोधाद्द्वीपा
निंदित
यिकृतं कर्मातिगर्हितं दग्धा द्वारवती नाम पूः स्वर्गनगरीनिभा ॥४८॥ लोकद्वयविनाशाय पापाय नरकाय ॥ ॥६२॥

स्वपरस्योपकारण्यं क्रोधशत्रुः शरीरिणां ॥ धर्म अनादिकालसंभूतः कषायविषमग्रहः ॥ स एवानंतदुर्वारदुःखसं

पादनक्षमः ॥५०॥ तस्मात्प्रशममालंब्य क्रोधवैरी निवार्यतां ॥ जिनागममहांभोधेरवगाहश्च सेव्यतां ॥५१॥ क्रोधव

बनवाटी

न्हेः क्षमैकेयं प्रशांतौ जलवाहिनी ॥ उद्दामसंयमारामवृत्तिर्वात्यंतनिर्भरा ॥५२॥ जयंति यमिनः क्रोधं लोकद्वयवि

राधकं ॥ तन्निमित्तेपि संप्राप्ते भजंतो भावनामिमां ॥५३॥ तद्यथा ॥ यदि घं कुरुते कोपि मां स्वस्थं कर्मपीडितं ॥ चिकि

समूहं

त्सित्वा स्फुटं दोषं स एवाकृत्रिमः सुहृत् ॥५४॥ हत्वा स्वपुण्यसंकाशं मद्दोषं यो निकृंतति ॥ तस्मै यदि हि रुष्यामि म

दन्यः को धमस्तदा ॥५५॥ आकृष्टोहं हतो नैव हतो वा न द्विधाकृतः ॥ मारितो न हतो धर्मो मदीयोनेन बंधुना ॥५६॥ सं

अहो

भवंति महाविघ्ना इह निःश्रेयसार्थिनां ॥ ते चेत्किल समायाताः समत्वं संश्रयाम्यतः ॥५७॥ चेन्मामुद्दिश्य भ्रश्यंति

शीलशैलात्तपस्विनः॥ अमी यतोत्र मज्जन्मपरलोके ज्ञायकेवलं॥५०॥ प्राङ्मयायत्कृतं कर्म तन्मयैवोपभुज्यते॥
निमित्तमात्रोन्यः सुखदुःखोद्यतो जनः॥५१॥ मदीयमपि चेच्चेतः क्रोधाद्यैर्विप्रलुप्यते (आसंगछते) अज्ञातज्ञा
विशेषस्तदा भवेत्॥६०॥ अन्यायमार्गप्रपन्नेस्मिन्कर्मपाके पुरःस्थिते॥ विवेकी कस्तदात्मानं क्रोधादीनां वशं नयेत्
॥६१॥ सहस्व प्राक्तनासातफलं स्वस्थेन चेतसा॥ निःप्रतीकारमालोक्य भविष्यद्दुःखशंकितः॥६२॥ उद्दीपयंतो
ग्निं बकु विक्रम विद्विषः (शात्रवः) मन्ये विलोपयिष्यंति किंचिन्मत्तः शमश्रियं॥६३॥ अप्यसह्ये समुत्पन्ने महाक्लेशे (समूहे)
तुष्यत्यपि च विज्ञानी प्राक्कर्मविलयोद्यतः॥६४॥ यदि वाक्कंटकैर्विद्धो नावलंबे क्षमामहं॥ ममाप्याक्रोश (पुरुषात्)
क्को विशेषस्तदा भवेत्॥६५॥ विचित्रैर्वधबंधादिप्रयोगैर्नचिकित्स्यते॥ यद्यसौ मां तदा कस्यात्संचितासातनिः
॥६६

यः शमः प्राक् समभ्यस्तो विवेकज्ञानपूर्वकः। तस्यैतेद्य परीक्षार्थं प्रत्यनीकाः समुत्थिताः॥६६॥ अयदि प्रशममर्या

दां भित्वा रुष्यामि पात्रवे। उपयोगः कदास्य स्यात्तदा मे ज्ञानचक्षुषः॥६७॥ अयत्नेनापि सैवेयं संजाता कर्मनिर्ज

[तीव्र पीडा]

रा। चित्रोपायैर्ममानेन यत्कृता भर्त्स्ययातना॥६८॥ [illegible] ममापि चेद्द्रोहमुपैति मानसं परेषु सद्यः प्रतिकूल

वर्तिषु। अपारसंसारपरायणात्मनां किमस्ति तेषां मम वा विशेषणं॥७०॥ अपारयन्बोधयितुं पृथग्जनानस

त्प्रवृत्तेष्वपि नासदाचरेत्। अशक्नुवन्पीतविषं चिकित्सितुं पिबेद्विषं कः स्वयमप्यबालिशः॥७१॥ न चेदयं मां दु

रितैर्विकंपयेदहं यतेयं प्रसमाय नाधिकं। अतो निलाभोयमिति प्रतर्क्ययन्विचाररूढा हि भवंति निश्चलाः॥७२॥

परिपरितोषनिमित्तं त्यजंति केचिद्धनं शरीरं वा। दुर्वचनबंधनाद्यैर्वयं रुषंतो न लज्जामः॥७३॥ अहं तु हानिं मे मात्म

*आत्मार्थविनाशः — विनाशे — शत्रुक्षमा*

र्थः सिद्धिः स्यान्नात्र संशयः ॥ हतोयदि न रुष्यामि रोषश्चेद्व्यत्ययस्तदा ॥१४॥ प्राणात्ययेपि संपन्ने प्रत्यनीकप्रति

*क्षमा — प्राप्ता*

तां सद्भिः स्वसिद्ध्यर्थं क्षमैका स्वस्थचेतसां ॥१५॥ इयं निकषभूरद्य संपन्ना पुण्ययोगतः ॥ शमत्वं किं प्रपन्नोस्मि न

वेति परीक्ष्यते ॥१६॥ स एव प्रशमः श्लाघ्यः स च श्रेयो निबंधनं अदयैर्हन्तुकामैर्यो न पुंसां कश्मलीकृतः ॥१७॥ चिरा

स्तेन किं तेन शमेनास्त्रेण वा फलं व्यर्थीभवति यत्कार्ये समुत्पन्ने शरीरिणां ॥१८॥ प्रत्यनीके समुत्पन्ने यद्धैर्यं त

स्यते स्यात्सर्वोपि जनः स्वस्थः सत्यशौचक्षमास्पदं ॥१९॥ वासीचंदनतुल्यां तैर्वृत्तिमालंब्य केवलां आरब्धं

सिद्धिमानीतं प्राचीनैर्मुनिसत्तमैः ॥२०॥ कृतैर्वान्यैः स्वयं जातैरुपसर्गैः कलंकितं येषां चेतः कदाचिन्न ते प्राप्ता

*पूर्वकृता*

स्ते संपदः ॥२१॥ प्राक्कृतायं न रुष्यंति कर्म्मणो निर्विवेकिनः तस्मिन्नपि च कुप्यंति यत्तदेव चिकित्सितिः ॥२२॥ स्वयं स्व

श्रान्मांसमाकृष्य क्षिपत्यात्मानमस्तधीः वधबंधनिमित्तैपि कस्तस्मै विप्रियं चरेत् ॥७७॥ अथ स्यैव कर्मणो नाशाज्ज्वर
दाहः प्रशाम्यति तच्चेद्भुक्तिं समायातं सिद्धं तद्धि यद्वांछितं ॥७८॥ अनंतक्लेशसंपार्चिः प्रदीप्ते यं भवाटवी तत्रोत्प
न्नैर्न किं सह्यं स्तद्रुत्योव्यसनोत्करः ॥७९॥ समस्य ज्ञानविवेकशून्यमनसः सिद्धांतसूत्रद्विषो निस्त्रिंशाः परलोक
नष्टमतयो मोहोनलोद्दीपिताः ॥[illegible]॥ दौर्जन्यादिकलंकिता यदि नरा नंस्युर्जगत्यां तदा तस्मात्तीव्रतपोग्निहन्त्र
तधियः कां क्षंति मोक्षश्रियं ॥८१॥ एव यमिह परमात्मध्यानदत्तावधानाः परिकलितपदार्थास्त्यक्तसंसारमार्गाः
यदि निकषपरीक्षासु क्षमा नो तदानीं भजति विफलभावं सर्वथैषं प्रयासः ॥८२॥ अहो केश्चित्कर्मानुदयगत
मानीय रजसा दग्धोपं निर्दूतं प्रबलतपसा जन्मचिकितैः त्वयं यद्यायातं तदिदमुदमालंब्य मनसा न किं सह्यं धीरै

॥ज्ञानार्णव॥
॥६५॥

रतुलसुखसिद्धेर्व्यवसितैः॥७७॥ क्रोधकषायजयः॥ कुलजातीश्वरत्वादिमदविध्वस्तबुद्धिभिः सद्यः संचीयते
नीचैर्गतिनिबंधनं॥१॥ मानग्रंथिर्मनस्युच्चैर्यावदास्ते दृढस्तवा। तावद्विवेकमाणिक्यं प्राप्तमप्यपसर्पति॥२॥ स्वप्रो
गमानशैलाग्रवर्त्तिभिर्लुप्तबुद्धिभिः। क्रियते मार्गमुल्लंघ्य पूज्यपूज्याव्यतिक्रमः॥३॥ लुप्यते मानतः पुंसां विवे
लोचनं प्रच्यवंते ततः शीघ्रं शीलशैलाग्रसंक्रमात्॥४॥ ज्ञानरत्नमपाकृत्य गृह्णात्यज्ञानपन्नगं। गुरूनपि
नो मानी विमानयति गर्वितः॥५॥ अकरोत्युद्धतधीर्मानाद्विनयाचारलंघनं। विराध्याराध्यसंतानं स्वेच्छा
तति॥६॥ मानमालंब्य मूढात्मा विधत्ते कर्म निंदितं। कलंकयति चाशेषं चरणं चंद्रनिर्मलं॥७॥ प्रगुणा।
किं तेन मानेनार्थः प्रसिध्यति। तन्मन्ये मानिनां मानं यल्लोकद्वयशुद्धिदं॥८॥ अपमानकरं कर्म येन दूरान्निषि । ॥६५॥

सञ्चैश्चेतसां मानः परः स्वपरघातकः ॥६७॥ क्रमानोनाम संसारे जंतुव्रजविडंबिकः ॥ यत्र प्राणी नृपो भूत्वा विष्टाम
ध्ये कृमिर्भवेत् ॥६८॥ मानः जन्मभूमिरविद्यानामकीर्त्तेर्वासमंदिरं ॥ पापपंकमहागर्त्तो निकृतिः कीर्त्तिता बुधैः
॥६९॥ अर्गलेवापवर्गस्य पदवी श्वभ्रवेश्मनः ॥ शीलशालवने वह्निर्मायेयमवगम्यताम् ॥७०॥ कूटद्रव्यमिवासा
रं स्वप्नराज्यमिवाफलं ॥ अनुष्ठानं मनुष्याणां मन्ये मायावलंबिनां ॥७१॥ लोकद्वयाहितं केचित्तपोभिः कर्तुमुद्य
ताः ॥ निकृत्या वर्त्तमानास्ते हंत हीना न लज्जिताः ॥७२॥ मुक्ते रविप्लुतैश्च्योताः गतिरृज्वी जिनेश्वरैः ॥ तत्र मायावि
नां स्यात्तु न स्वप्नेप्यस्ति योगिता ॥ अव्रती निःशल्य एव स्यात्सशल्यो व्रतघातकः ॥ मायाशल्यं मतं साक्षात्सूरिभि
र्भूरिभीतिदं ॥ इहाकीर्त्तिममादत्ते मृतो यात्येव दुर्गतिम् ॥ मायाप्रपंचदोषेण जनोयं जिह्मिताशयः ॥ आच्छाद्यमान

पिप्रायःकुकर्मस्फुटतिस्वयं॥अलंमायाप्रपंचेनलोकद्वयविरोधिना॥६॥कमायाचरणाहीनंकसन्मार्गपरिग्र
॥नापवर्गपथिभ्रांतःसंचरंतीहवंचका॥७॥बकवृत्तिंसमालंब्यवंचकैर्वंचितंजगत्॥कौटिल्यकुशलैःपापैःप्र
२ निर्मलंजगत्
सन्नंकश्मलाशयैः॥८॥माया॥नयंतिविफलंजन्मप्रयासैर्मृत्युगोचरैः॥वराकाःप्राणिनोजस्रंलोभादप्राप्तवांछि
शाकपत्रमात्रेण
ता॥९॥शाकेनापीछयाजातुनभर्तुमुदरंक्षमा॥लोभात्तथापिवांछंतिनराश्चक्रेश्वरश्रियम्॥१०॥स्वामिगुरुबंधुवृद्धान
नान्बालांश्चजीर्णदीनादीन्॥व्यापाद्यविगतशंकोलोभार्त्तोवित्तमादत्ते॥११॥येकेचित्सिद्धांतेदोषाःश्वभ्रस्यमा
प्रोक्ताः॥प्रभवंतिनिर्विचारंतेलोभादेवजंतूनाम्॥१२॥लोभः॥शमांबुभिःक्रोधशिखीनिवार्यतांनियम्यतां
दारमार्दवैः॥इयंचमायार्जवतःप्रतिक्षणंनिरीहतांचाश्रयलोभशांतये॥१३॥अयत्रयत्रप्रसूयंतेतवक्रोधादयोद्विषः

१ क्रोधमुत्पत्तिविनाशाय

पूर्वं　　　चौरा　　　कृत्य

तत्तत्प्रागेवमोक्तव्यंवस्तुतत्स्मृतिशांतये॥१५॥येनयेननिवार्यंतेक्रोधाद्याःपरिपंथिनः॥स्वीकार्यमप्रमत्तेनतत्तत्कार्य

ज्ञानिन　　　क्रोधादिनिमित्ते　　　पीडीतं

मनीषिणा॥१६॥गुणाधिकतयामन्येसयोगीगुणिनांगुरुः॥तन्निमित्तेपिनाक्षिप्तंक्रोधाद्यैर्यस्यमानसं॥१७॥यदिक्रोधा

क्रोधादय　　　निःफलं　　　आत्मज्ञान

दयःक्षीणास्तदाकिंखिद्यतेवृथा॥तपोभिरथतिष्ठंतितपस्तत्रापिपार्थकं॥१८॥स्वसंवित्तिंसमायातियमिनांतत्त्वमुत्त

पुरुष　　　समर्थ

मं॥आसमंतात्छमंनीतेकषायविषमज्वरे॥१८॥अथवा॥अजितात्मसःकषायाग्निंविजेतुंनप्रभुर्भवेत्॥अतःक्रोधा

विषयआशापीडीतस्य　　　इंद्रियहस्ती

दिकंजेतुमक्षरोधःप्रशस्यते॥१९॥विषयाशाभिभूतस्यविक्रियंतेक्षदंतिनः॥पुनस्तएवदृश्यंतेक्रोधादिगहनंश्रि

इंद्रियसमूह　　　समूह

ताः॥२०॥इदमक्षकुलंधत्तेमदोद्रेकंयथायथा॥कषायदहनःपुंसांविसर्पतितथातथा॥२१॥कषायवैरिव्रजनिर्ज

यंयमीकरोतुपूर्वंयदिसंवृतेंद्रियः॥किलानयोर्निग्रहलक्षणोविधिर्नहिक्रमेणात्रबुधैर्विधीयते॥२२॥तद्यथा॥य

विषयोद्भूतं दुःखमेवं नंत तत्सुखं ॥ अनंतजन्मसंतानक्लेशसंपादकं यतः ॥२३॥ दुर्दमेंद्रियमातंगान् शीलशालेनि
यंत्रयाधीरविज्ञानपाशेन विकुर्वाणान् [विक्रिया कुर्वाणान्] नयद्दृच्छया [स्वइच्छया] ॥२४॥ हृषीक [क] भीममनोगीजक्रुद्धदर्पोपशांतये स्मरंति वीरनिर्दिष्टं यो
गिनः परमाक्षरं [णमोकार] ॥२५॥ निरुध्य बोधपाशेन क्षिप्ता वैराग्यपंजरे ॥ हृषीकहरयो [इंद्रिय मर्कटा] येन स मुनीनां महेश्वरः ॥२६॥ हृदि
स्थांश्चैव बोधिरत्नं सुनिर्मलं शीलशालो [शीलवृक्ष] नयस्याक्षदंतिभिः प्रविदारितः ॥२७॥ दुःखमेवाक्षजं सौख्यमविद्याव्याल
लितं मूर्खास्तत्रैव रज्यंते न विद्मः केन हेतुना ॥२८॥ यथा यथा हृषीकाणि स्ववशं यांति देहिनां ॥ तथा तथा स्फुरत्युच्चै
र्दिविज्ञानभास्करः ॥२९॥ विषयेषु यथा चित्तं जंतोर्मग्नमनाकुलं ॥ तथा यद्यात्मनस्तत्त्वे सद्यः को न शिवी भवेत् ॥३०॥
पितजनकं मोहदावबह्नेर्महेंधनं ॥ असातसंततेर्बीजमक्षसौख्यं जगुर्जिनाः ॥३१॥ नरकस्यैव सोपानं पाथेयं

नरकमार्गे परद्रव्यापेक्षं

ध्वनि अपवर्गपुरद्वारकपाटयुगलं दृढं ॥३२॥ विघ्नबीजं विपन्मूलमन्यापेक्षं भयास्पदं । करणग्राह्यमेतद्धि यदक्षार्थो

त्थं सुखं ॥३३॥ जगद्वंचनचातुर्यं विषयाणां न केवलं । नरान्नरकपाताले नेतुमप्यतिकौशलं ॥३४॥ निसर्गचपलैश्चित्रै

विषयेषु तृष्णा निरंतर

र्विषयैर्वंचितं जगत् । प्रत्याशा निर्दयैस्तेषु कीदृशी पुण्यकर्मणां ॥३५॥ वर्द्धते गृद्धिरश्रांतं संतोषश्चापसर्पति । विवेको

विलयं याति विषयैर्वंचितात्मनां ॥३६॥ विषयस्य कालकूटस्य विषयाख्यस्य चांतरं । वदंति ज्ञाततत्वार्था मेरुसर्षप

अप्राप्तवैराग्यं

योरिव ॥३७॥ अनासादितनिर्वेदं विषयैर्व्याकुलीकृतं । पतत्येव जगज्जन्मदुर्गे दुःखाग्निदीपिते ॥३८॥ इंद्रियाणां न गुप्ति

आत्मा

र्नाभ्यस्तश्चित्तनिर्जयः । न निर्वेदः कृतो मित्र नात्मा दुःखेन भावितः ॥३९॥ एवमेवापवर्गाय प्रवृत्तैर्ध्यानसाधने । स्व

आत्मनोत्पन्नं

मेव वंचितं मूढैर्लोकद्वयपथच्युतैः ॥४०॥ अध्यात्मजं यदत्यक्षं स्वसंवेद्यमनश्वरं । आत्माधीनं निराबाधमनंतं योगि

त्वामेवं चिंतुं मन्ये प्रवृत्ता विषया इमे॥ स्थिरीकुरु तथा चित्तं यथैते नैकलक्ष्यते॥४५॥



नो सुखं॥४२॥ अपास्य करणग्रामं यदात्मन्यात्मना स्वयं॥ सेव्यते योगिभिस्तद्धि सुखमाध्यात्मिकं मतं॥४३॥

प्रथमारम्भरमणीक — विषउदयवत् — अती — इंद्रियचोरसैन्य

तमात्ररम्याणि विषयोत्थानि देहिनाम्॥ विषपाकानि पर्यंते विद्धि सौख्यानि सर्वथा॥४४॥ हृषीकतस्करानी

समुद्र — अग्नि

चित्तदुर्गांतराश्रितं पुंसां विवेकमाणिक्यं हरत्येवं निवारितं॥४५॥ उदधिरुदकपूरैरिंधनैश्चित्रभानुर्यदि क

थमपि दैवात्तृप्तिमासादयेतां॥ न पुनरिह शरीरी कामभोगैर्विसंख्यैश्चिरतरमपि भुक्तैस्तृप्तिमायाति कश्चित॥

व्याप्त

यद्यपि दुर्गतिबीजं तृष्णासंतापपापसंकलितं॥ तदपि न सुखं संप्राप्यं विषयसुखं वांछितं नृणाम्॥४६॥ किंच॥

इच्छा — विगत — व्याप्नोति — अनिवार्यप्ररूपा

अपि संकल्पिताः कामाः संभवंति यथा यथा॥ तथा तथा मनुष्याणां तृष्णा विश्वं विसर्पति॥४७॥ अनिषि

इंद्रियसमूह — मस्तके — पर्वतं

संदोहं यः साक्षान्मोक्तुमिच्छति विदारयति दुर्बुद्धिः शिरसा स महीधरं॥४८॥ इहमिह विषयोत्थं यत्सुखं तद्धि दुः

२ तस्य तस्य इंद्रियाणां विषयस्य कारणानां स्रगाचंदनवनीतादीनां पारतंत्र्यं पराधीनत्वं तथा इंद्रियसौख्य = तृष्णा संतती वृद्धियुक्तं = स्वाभाविक संगमधा कस्यात्म डायुक्तै

खं व्यसनविपिनबीजं तीव्रसंतापविद्धं कटुतरपरिपाकं निंदितं ज्ञानवृद्धैः परिहर किमिहान्यैर्धूर्त्तवाचां प्रपं

चैः ॥४॥ तत्तत्कारकपारतंत्र्यममचिरान्नाशः पुनः समत्तक्षमान्वयस्तैरंभिर्निरुपाधिसंगमभृतो बाधानिधानैः परैः

सौख्येभ्यः ... खेदे ... सर्पदंष्ट्राभिः

प्रार्मेभ्यः स्पृहयंति हंत विषयानामित्यं यद्देहिनस्तत्क्रुधात्फणिनायकाग्रदशनैः कंडूविनोदः स्फुटम् खाजमिटा इच्छाकरै

नियंत्रितः ... प्रीणितो वा पीडितो वा ... वैराग्यपरायणो

॥५॥ निःशेषाणि मतेंद्रियार्थरचनासौंदर्यसंदानितः प्रीतिप्रस्तुतलोभलंघितमनाः को नाम निर्विघ्नताम्

अतिशयेन ... अग्रे

अस्माकं तु नितांतघोरनरकज्वालाकलापाः पुरः सोढव्याः कथमित्यसौ तु महती चिंता मनः कृंतति ॥ पच्छदयति:

गजबंधनोपायेन ... पतंगाः

॥६॥ मीना मृत्युं प्रयाता रसनवशमिता दंतिनः स्पर्शरुद्धा बद्धास्ते वारिबंधे ज्वलनमुपगताः पत्रिणश्चा

क्षिदोषात् भृंगा गंधोद्धताशाः प्रलयमुपगता गीतलोभाः कुरंगाः कालव्यालेन दष्टास्तदपि तनुभृतामि

प्रालीजनोऽन्यः स्यात् ॥५३॥ संवृणोत्यक्षसैन्यं यः कूर्मोऽङ्गानीव संयमी ॥ स लोके दोषपंकाढ्ये चरन्नपि न लिप्य
ते ॥५४॥ अयत्नेनापि जायंते तस्यैता दिव्यसिद्धयः ॥ विषयैर्न मनो यस्य मनागपि कलंकितं ॥५५॥ इत्याचार्य
श्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे अक्षविषयनिरोधकरणं ॥ अयमात्मा स्वयं साक्षाद्गु
णरत्नमहार्णवः ॥ सर्वज्ञः सर्वदृक् सार्वः परमेष्ठी निरंजनः ॥१॥ तत्स्वरूपमजानानो जनोऽयं विधिवंचितः ॥ विषये
षु सुखं चेत्ति यत्स्यात्पाके विषान्नवत् ॥२॥ यत्सुखं वीतरागस्य मुनेः प्रशमपूर्वकं ॥ न तस्यानंतभागोऽपि प्रा
प्यते त्रिदशेश्वरैः ॥३॥ अनंतबोधवीर्यादिनिर्मला गुणिनो गुणाः ॥ स्वस्मिन्नेव स्वयं मृग्या अपास्य कारणांतरं ॥४॥

ज्ञायते जीवस्य
हो ऽनंतवीर्ययमात्मा विश्वप्रकाशकः ॥ त्रैलोक्यं चालयत्येव ध्यानशक्तिप्रभावतः ॥४॥ अस्य वीर्यमहं मन्ये यो-
वीर्यं निराबाधं
गिनामप्यगोचरं ॥ यत्समाधिप्रयोगेण स्फुरत्यव्याहतं क्षणे ॥५॥ अयमात्मा स्वयं साक्षात्परमात्मेति निश्चयः ॥
समूह गुणसमूह
विशुद्धध्याननिर्धूतकर्मेंधनसमुत्करः ॥६॥ ध्यानादेव गुणग्राममस्याशेषं स्फुटीभवेत् ॥ क्षीयते च तथानादि-
संभवा कर्मसंततिः ॥७॥ शिवोयं वैनतेयश्च स्मरश्चात्मैव कीर्तितः ॥ अणिमादिगुणानर्घ्यरत्नवार्धिर्बुधैर्मतः ॥
८॥ उक्तं च ॥ आत्यंतिकस्वभावोत्थानंतज्ञानसुखः पुमान् ॥ परमात्मा विपः कंतुरहो माहात्म्यमात्मनः ॥१॥ इति
अमुमेवार्थं संप्रति गद्यैर्विशदयामः ॥ तद्यथा ॥ यथांतर्बहिर्भूतनिजनिजानंदसंदोहसंपाद्यमानद्रव्यादि-
चतुष्कसकलसामग्रीस्वभावप्रभावात्परिस्फुरितरत्नत्रयातिशयसमुल्लसितस्वशक्तिनिराकृतसकलत-

आत्मनः १ प्रकटीभूत १ समूह १ ग्रासित निबिड



ग्वरणप्रादुर्भूतशुक्लध्यानानलवहलज्वालाकलापकवलितगहनांतरानादिसकलजीवप्रदेशघनघ
संसारकारणाज्ञानावरणादिद्रव्यभावसंबंधनविप्रोषत्ततोयुगपत्प्रादुर्भूतानंतचतुष्टयोघनप
सवितुःप्रतापप्रकाशाभिव्यक्तिवत्खल्वयमात्मैवपरमात्मव्यपदेशभाग्भवति॥शिवतत्वं॥अविरलमरी
मंजरीपुंजपिंजरितभासुरतराशुरोमणिमंडलीसहस्रमंडितविकटतरफूत्कारमारुतपरंपरोत्पातपे
लितकुलाचलसम्मिलितशिखिशिखासंतापद्रवत्ताकांचनकांतिकपिशनिजकायकांतिछटा
टलितदिग्वलयक्षत्रियभुजंगपुंगवद्वितयपरिक्षिप्तक्षितिबीजविस्पष्टप्रकटपविपंजरपिनद्ध
गिरिचतुरस्रमेदिनीमंडलावलंबनगजपतिपृष्ठप्रतिष्ठितपरिकलितकुलिशकरप्राचीप्रमुखविला

शृंगारदर्पणोच्छ्वसितलोचनसहस्रश्रीत्रिदशपतिमुद्रालंकृतसमस्तभुवनावलंबिसुनाशीरपरिकलितज
गुह्यः॥पृथ्वीतत्वं समाप्तं॥तदुपरिपुनरानाभिविपुलतरसुधासमुद्रसन्निभसमुच्छ्वसन्निजशरीरप्रभापट
लव्याप्तसकलगगनांतरालवैशयांशी विषविषधरावनद्धवारुणपुरप्रतिष्ठितविपुलतरबीजाक्षरमंडन
पुंडरीकलक्ष्मोपलक्षितपारावारमयखंडेंदुमंडलाकारवरुणपुरप्रतिष्ठितविपुलतरप्रचंडमुद्राग्रहे
विकीर्णशिशिरतरपयःकणाक्रांतिकर्बुरितसकलककुप्चक्रकरिमकरमारूढपशस्तपाशपाणिवरु
णामृतमुद्राबंधविधुरितनिःशेषविषानलसंतानभगवद्वरुणानिर्व्यूढोत्संगप्रदेशः॥विस्फुरितनिजवपु
र्बहलज्वालावलीपरिकलितसकलदिग्वलयद्विजदंदशूकरक्षिताशुशुक्षणिरवर्णविस्फुरितविस्तीर्ण

कोपपन्नत्रिकोणतेजोमयपुरमध्यबद्धवसतिवह्न्यधिरूढप्रज्वलदंलातहस्तानलमुज्ज्वोद्दीपितस
कविरचितोरः प्रदेशः॥अग्नितत्वं॥अविरतपरिस्फुरत्फूत्कारमारुतांदोलितसकलभुवनाभोगपरि
पद्धरणाचक्रवालकालिमानिजतनुसमुत्थलहलकांतिपटलपिहितनिखिलनभस्तलस्फूरत्काड्वेयव
लयितमरुन्मुज्झोपपन्नविंदुसंदोहसुंदरमहामारुतवलयत्रितयात्मकसकलभुवनाभोगवायुपा
भस्वत्पुरांतर्गतवाहनकुरंगवेगविहरणदुर्ल्लिलितकरतलकलितचलविटपकोटिकिपालय
लिमरुन्मुज्झोच्छलितसकलभुवनपवनमयवदनारविंदः॥वायुतत्वं॥गगनगोचरामूर्तजयविजयभुजंग
भूषणोनंताकृतिपरमविभुनभस्तलनिलीनसमस्ततत्वात्मकसमस्तज्वररोगविषयधरोड्डमरडाकिनी

यक्षकिंनरनरेंद्रारिमारिपरयंत्रमंत्रमुद्रामंडलज्वलनहरिसरभशार्दूलद्विपदैत्यदुष्टप्रभृतिसमस्तोपसर्ग
निर्मूलनकारिसामर्थ्यः॥ परिकलितसमस्तगारुडमुद्रामंडलाडंबरसमस्ततत्वात्मकः संन्नात्मैवगारुडग
गोचरत्वमवगाहते॥ विषतत्वं॥ यदिपुनरसौ सकलजगच्चमत्कारिकार्मुकास्पदनिवेशितमंडलीकृतसर
सेक्षुकांडस्वरसहितकुसुमसायकविधिलक्षीकृतदुर्लक्षमोक्षलक्ष्मीसमागमोत्कंठितकठोरतरमुनि
मनाः स्फुरन्मकरकेतुकमनीयसकलललनावृंदवंदितसौंदर्यरतिकेलिकलापदुर्ल्ललितचेताश्चतुरचेष्टि
तभ्रूभंगमात्रवशीकृतजगत्त्रयस्त्रैणसाधनोदुरधिगमागाधगहनरागसागरांतरदोलितसुरासुरनरभुज
गयक्षसिद्धगंधर्वविद्याधरादिवर्गः स्त्रीपुरुषभेदभिन्नसमस्तसत्वपरस्परमनःसंघटनसूत्रधारः॥ विविधवन

जिपरिमलपरिमिलितमधुकरकुलविकसितसितकुसुमस्तबकतरलितकटाक्षप्रगटसौभाग्येनसह
रलताकिसलयकरोन्मुक्तमंजरीपरागपिष्टातकप्रिसुनितप्रवेशोत्सवेनमदमुखरमधुकरकुटुंबिनीको
लालापसंवलितमांसलितकोकिलाकुलकणत्कारसंगीतकप्रियेणमलयगिरिमेखलावनकृतनिलयचं
दनलतालास्योपदेशकुशलैःसुरतभरखिन्नपन्नगनितंबिनीजनवदनकवलितशिखैरपिविरहिणीनिःश्वास
सलीकृतकायैःकेरलीकुरलांदोलनदक्षैरुत्कंपितकुंतलकामिनीकुंतलैःपरिगतसुरतखेदोन्मिषित
ललाटश्वेदांबुकणिकापानदोहदवद्भिरासादितानेकनिर्झरशिशिरशीकरैर्बकुलामोदसंदर्भनिर्भरैःपा
लुंटितपाटलासौरभैःपरिमिलितनवमालिकामोदैर्मंदसंचरणशीलैराकुलीकृतसकलभुवनजनमनोभिर्म ॥७२॥

मारुतैः॥समुद्धसितसौभाग्येनवसंतसुहृदाहूरमारोपितप्रतापः॥प्रारब्धोन्नमतपस्तस्तश्रांतमुनिजनप्रार्थितप्रवे
शोत्सवेनस्वर्गापवर्गद्वारसंघटनवज्रार्गलः॥सकलजगद्विजयवैजयंतीकृतचतुरकामिनीभ्रूविभ्रमः॥सोभग
रिमुद्राविशेषप्रणालीसकलजगद्वशीकरणसमर्थ्यइतिचिंत्यते॥तदायमात्मैवकामोक्तिविषयतामनुभवतीति
तदेवंयदिहजगतिशरीरविशेषसमवेतंकिमपिसामर्थ्यमुपलभामहे॥तत्सकलमात्मनएवेतिनिश्चयः॥अ
त्म [illegible] प्रवृत्तिपरंपरोत्पादितत्वाद्विग्रहग्रहणस्येति॥१९॥यदिहजगतिकिंचिद्विस्मयोत्पत्तिबीजंभुजगमनुजदेवे
ष्वस्तिसामर्थ्यमुच्चैः॥तदखिलमपिमत्वानूनमात्मैकनिष्ठंभजतनियतचित्ताःशाश्वदात्मानमेव॥२०॥अचिंत्यमे
स्यसामर्थ्यंप्रवक्तुंकःप्रभुर्भवेत्॥तच्चनानाविधध्यानपदवीमधितिष्ठति॥२१॥तदस्यकर्तृजगदंकिलीनंतिरो

हितास्ते सहजैर्वप्राप्तिं॥प्रबोधितस्तां समभिव्यनक्ति प्रसह्य विज्ञानमयः प्रदीपः॥अथवा॥अयं त्रिजगती
विश्वज्ञोऽनंतशक्तिमान्॥नात्मानमपि जानाति स्वस्वरूपात्परिच्युतः॥२॥अनादिकालसंभूतैः कलंकैः क
कृतः॥स्वेच्छयार्थान्समादत्ते स्वतोऽत्यंतविलक्षणान्॥३॥दृग्बोधनयनः सोऽयमज्ञानतिमिराहतः॥जानन्नपि
जा नाति पश्यन्नपि न पश्यति॥४॥अविद्योद्भूतरागादिगरव्यग्रीकृताशयः [विघ्न पीडित]॥पतत्यनंतदुःखाग्निप्रदीप्ते जन्म
मे॥५॥लोष्ठेष्वपि यथोन्मत्तः स्वर्णबुद्ध्या प्रवर्तते॥अर्थेष्वनात्मभूतेषु स्वेच्छयायं तथाभ्रमात्॥६॥वासनाजनिता
न्यमुखदुःखानि देहिनाम्॥अनिष्टमपि येनायमिष्टमित्यभिमन्यते॥७॥अविश्रांतमसौ जीवो यथाकामार्थ
सं॥खिद्यते त्रयदि स्वार्थे तथा किं न विमुच्यते॥८॥इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे ॥१३॥

तत्वप्रकरणं॥ अथ केचिद्यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इति अष्टावंगानि योगस्यस्था
नानि॥ तथान्ये: यमनियमौ वपास्य आसनप्राणायामप्रत्याहारधारणाध्यानसमाधय इति षट्॥ तथान्ये॥ उ
त्साहान्निश्चयाद्धैर्यात्संतोषात्तत्वदर्शनात्। मुनेर्जनपदत्यागात् षड्भिर्योगः प्रसिध्यति॥ १॥ एतान्येवांगः केचिच्च
मनःस्थैर्याय प्रयुंजते। तस्मिन् स्थिरीकृते साक्षात्स्वार्थसिद्धिर्ध्रुवा भवेत्॥ २॥ यमादिषु कृताभ्यासो निःसंगो निर्म
मो मुनिः। रागादिक्लेशनिर्मुक्तं करोति स्ववशं मनः॥ ३॥ अष्टावंगानि योगस्य यान्युक्तान्यार्यसूरिभिः। चित्तप्रस
मार्गेण बीजं स्युस्तानि मुक्तये॥ ४॥ अंगान्यष्टावपि प्रायः प्रयोजनवशात्क्वचित्। उक्तान्यत्रैव तान्युच्चैर्विदां कुर्वंतु
योगिनः॥ ५॥ मनोरोधे भवेद्रुद्धं विश्वमेव शरीरिभिः। प्रायोऽसंवृत्तचित्तानां शेषरोधोऽप्यपार्थकः॥ ६॥ इति॥ कलंकवि

लयः साक्षान्मनःशुद्धैव देहिनाम्॥ तस्मिन्नपि समीभूते स्वार्थसिद्धिरुदाहृता॥९॥ चित्तप्रपंचजानेकवि
धकाः प्राप्नुवंति नरा नूनं मुक्तिकांताकरग्रहम्॥१०॥ अतस्तदेव संरुध्य कुरु स्वाधीनमंजसा॥ यदि छेत्तुं
त्वं कर्मनिगडं दृढं॥११॥ सम्यग्स्मिन्प्रशमं नीते दोषा जन्मभ्रमोद्भवाः॥ जन्मिनां खलु शीर्यंते ज्ञानश्रीप्रतिबं
॥१२॥ एक एव मनोदैत्यः जयः सर्वार्थसिद्धिदः॥ अन्यत्र विफलः क्लेशो यमिनां तज्जयं विना॥१३॥ एक एव मनोरोधः
सर्वाभ्युदयसाधकः॥ यमेवालंब्य संप्राप्ता योगिनस्तत्त्वनिश्चयं॥१४॥ पृथक्करोति यो धीरः स्वपरावेकतां गतौ॥
चापलं निगृह्णाति पूर्वमेवांतरात्मनः॥१५॥ मनःशुद्धैव शुद्धिः स्याद्देहिनां नात्र संशयः॥ वृथा तद्व्यतिरेकेण काय
यं कदर्थना॥१६॥ ध्यानशुद्धिं मनःशुद्धिः करोत्येव न केवलं॥ विछिनत्त्यपि निःशंका कर्मजालानि देहिनाम्॥१७

पंकजसंलीनं तस्यैतद्भुवनत्रयं॥ यस्य चित्तं स्थिरीभूय स्वस्वरूपे लयं गतं॥ प्रमनःकृत्वाशु निःसंगं निःशेषविषयच्यु
तं॥ मुनिभृंगैः समालीढं मुक्तेर्वदनपंकजं॥१९॥ यथा यथा मनःशुद्धिर्मुनेः साक्षात्प्रजायते॥ तथा तथा विवेकश्रीर्हृ
दि धत्ते स्थिरं पदं॥२०॥ चित्तशुद्धिमनासाद्य मोक्तुं यः सम्यगिच्छति॥ मृगतृष्णातरंगिण्यां स पिबत्यंबु केवलं॥२१॥ तद्ध्या
नं तद्धि विज्ञानं तद्ध्येयं तत्त्वमेव वा॥ येनाविद्यामतिक्रम्य मनस्तत्त्वे स्थिरीभवेत्॥२२॥ विषयग्रामलुब्धेन चित्तदैत्ये
न सर्वथा॥ विक्रम्य स्वेच्छया जस्रं जीवलोकः कदर्थितः॥२३॥ अवार्यविक्रमः सोयं चित्तदंती निवार्यतां॥ न याव
द्ध्वंसयत्येष सत्संयमनिकेतनं॥२४॥ विभ्रमन्विषयारण्ये चलच्चेतोबलीमुखः॥ येन रुद्धो ध्रुवं सिद्धं फलं तस्यै
व वांछितं॥२५॥ चित्तमेकं न शक्नोति जेतुं स्वातंत्र्यवर्ति यः॥ ध्यानवार्तां ब्रुवन्मूढः स किं लोके न लज्जते॥२६॥ यदसाध्यं

मोक्षं

तपोनिष्टैर्मुनिभिर्निर्वीतमत्सरैः।तत्पदंप्राप्यतेधीरैश्चित्तप्रसरबंधकैः।।२७।।अनंतजन्मजानेककर्मबंधस्थितिर्दृ
भावशुद्धिंप्रपन्नस्यमुनेःप्रक्षीयतेक्षणात्।।२८।।यस्यचित्तंस्थिरीभूतंप्रसन्नंज्ञानवासितं।।सिद्धमेवमुनेस्त
साध्यंकिंकायदंडनैः।।२९।।तपःश्रुतयमज्ञानतनुक्लेशादिसंचयं।।अनियंत्रितचित्तस्यस्यान्मुनेस्तुषकंडनं।।३०।।
वहिमनःशुद्धिर्लोकाग्रपथदीपिका।।स्खलितंबहुभिस्तत्रतामनासाद्यनिर्मलां।।३१।।असंतोऽपिगुणाःसं
स्यांसत्यांशरीरिणाम्।।संतोऽपियांविनायांतिसामनःशुद्धिःशस्यते।।३२।।अपिलोकत्रयैश्वर्यंसर्वाक्षप्रीणनक्ष
भजत्यचिंत्यवीर्योयंचित्तदैत्योनिरंकुशः।।३३।।प्रशमश्रुतयमोपेताजिताक्षाःशंसितव्रताः।।विदंत्यनिर्जित
ताःस्वस्वरूपंनयोगिनः।।३४।।विलीनविषयंशांतंनिःसंगंत्यक्तविक्रियं।।स्वस्थंकृत्वामनःप्राप्तंमुनिभिःपदमं

दिक्चक्रं दैत्यधिष्ण्यं त्रिदशपतिपुराण्यंबुवाहांतरालं द्वीपांभोधिप्रकांडं खचरनरसुराहींद्रवासं समग्रं। एतत्त्रै-
(गृह) क्यनीडं पवनचयचितं चापलेन क्षणार्द्धे नाभ्रांतं चित्तदैत्यो भ्रमति तनुमतां (प्राणिना) दुर्विचिंत्यप्रभावः॥३६॥
मसमाधिध्यानविज्ञानहेतोर्विनयनयविवेकोदारचारित्रसिद्ध्यै। यद्यहं जयति चेतःपन्नगं दुर्न्निवारं स ख
जगति योगिव्रातवंद्यो मुनींद्रः॥३७॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे मनोव्या
रप्रतिपादविकरणं॥ निःशेषविषयोत्तीर्णं विकल्पव्रजवर्ज्जितं। स्वतत्त्वैकपरं धत्ते मनीषी नियतं मनः॥१॥ अथव
क्रियमाणमपि स्वस्थं मनः सद्यो (व्याप्यते) निभूयते। अनाद्युत्पन्नसंबंधै रागादिरिपुभिर्बलात्॥२॥ स्वतत्त्वानुगतं चेतः
करोति यदि संयमी। रागादयस्तथाप्येते क्षिपंति भ्रमसागरे॥३॥ आत्माधीनमपि स्वांतं सद्यो रागैः कलंक्यते

तद्धैरतः पूर्वमत्र यत्नो विधीयताम्॥४॥ अयत्नेनापि जायंते चित्तभूमौ शरीरिणाम्॥ रागादयः स्वभावोत्थ ज्ञा
ज्यांगघातकाः॥५॥ इंद्रियार्थानपाकृत्य स्वतत्वमवलंब्यते॥ यदि योगी तथाप्येते छलयंति मुहुर्मनः॥६॥
ढंक्व चिज्ज्ञातं क्वचिज्ज्ञीतं क्वचिद्भुतं प्रांकितं चक्क चित्क्लिष्टं रागाद्यैः क्रियते मनः॥७॥ अजस्रं रुध्यमानोपि चिरा
भ्यासाद्दृढीकृताः॥ चरंति हृदि निःशंका नृणां रागादि राक्षसाः॥८॥ प्रयासैः फल्गुनिर्मूढैः किमात्मा दंड्यते धि
॥ शक्यते न हि चेच्चेतः कर्तुं रागादिवर्जितं॥९॥ क्षीणरागं च्युतद्वेषं ध्वस्तमोहं सुसंवृतं॥ यदि चेतः समापन्नं
द्धं समीहितं॥१०॥ मोहपंके परिक्षीणे प्रशांते रागविभ्रमे॥ पश्यंति यमिनः स्वस्मिन्स्वरूपं परमात्मनः॥११॥
संग्रामे त्रिशिवश्रीसंगमोत्सुकैः॥ योगिभिर्ज्ञानपास्त्रेण रागमल्लो निपातितः॥१२॥ असंक्लिष्टमविभ्रांतमविद्ध

नाकुलं निश्चलं चं मनः कृत्वा वस्तुतत्वं निरूपय ॥३॥ रागादिनिर्हतं चैतः स्वतत्वविमुखं भवेत् ततः प्रच्यवते क्षि
प्रं ज्ञानरत्नाद्रिमस्तकात् ॥४॥ रागद्वेषभ्रमाभावे मुक्तिमार्गे स्थिरी भवेत् संयमी जन्मकांतारसंक्रमक्लेशशांकि
तः ॥५॥ रागादिनिर्विश्रांतं वंच्यमानं मुहुर्मनः न पश्यति परंज्योतिः पुण्यपापेंधनानलं ॥६॥ रागादिपंकविश्ले
षात्प्रसन्ने चित्तवारुणि परिस्फुरति निःशेषं मुनेर्वस्तुकदंबकं ॥७॥ स कोपि परमानंदो वीतरागस्य जायते ये
न लोकत्रयैश्वर्यमप्यचिंत्यं तृणायते ॥८॥ प्रशाम्यति विरागस्य दुर्बोधविषमग्रहः स एव वर्द्धते जस्रं रागार्तस्येह
देहिनः ॥९॥ स्वभावजमनातंकं वीतरागस्य यत्सुखं न तस्यानंतभागोपि प्राप्यते त्रिदशेश्वरैः ॥१०॥ गतार्वना
दिसंभूतौ रागद्वेषौ महासुरौ अनंतदुःखसंतानप्रसूतेः प्रथमांकुरौ ॥११॥ उक्तं च ॥ रागी बध्नाति कर्माणि वीतरा

मुनिरूप्यभावप्रुध्यायतत्त्वतद्बंधमोक्षाय॥२९॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेरा
षप्रकरणम्॥३॥मोहवह्निमपाकर्तुंस्वीकर्तुंसंयमश्रियं॥छेत्तुंरागद्रुमोद्यानंशमत्वमवलंब्यतां॥१॥चि
त्रक्षणैर्भवैरिष्टानिष्टतयास्थितैः॥नमुह्यतिमनोयस्यतस्यसाम्येस्थितिर्भवेत्॥२॥विरज्यकामभोगे
वपुषिस्पृहा॥समत्वंभजसर्वज्ञज्ञानलक्ष्मीकुलास्पदं॥३॥छित्वाप्रशमशस्त्रेणभवव्यसनवागुरां॥मुक्तेःस्वयं
धीरव्रजशनैःशनैः॥४॥साम्यसूर्यांशुभिर्भिन्नेरागादितिमिरोत्करे॥प्रपश्यतियमीस्वस्मिन्स्वरूपंपर
॥५॥साम्यसीमानमालंब्यकृत्वात्मन्यात्मनिश्चयं॥पृथक्करोतिविज्ञानीसंश्लिष्टेजीवकर्मणी॥६॥
रिणि॥शुद्धानांसतांज्ञानैकचक्षुषां॥इहैवानंतबोधादिराज्यलक्ष्मीःसखीभवेत्॥७॥भावयस्वतथात्मानं

अग्नि शिखा

नीति निर्भरां नयथा द्वेषरागाभ्यां गृहीतात्यर्थकदंबकम्॥ रागादिविपिनं भीमं मोहशार्दूलपालितं। दग्धं मुनिमहा

वीरैः साम्यधूमध्वजार्चिषा॥ मोहपंके परीक्षीणे शीर्णे रागादिबंधने। नृणां हृदि पदं धत्ते साम्यश्रीर्विश्ववंदिता

॥१४॥ आशाः सद्यो विपद्यंते यांत्यविद्याः क्षयं क्षणात्। म्रियते चित्तभोगीन्द्रो यस्य सा साम्यभावना॥ १ ॥ साम्यकोटिं

समारूढो यमी जयति कर्म यत्। निमेषांतेन तज्जन्मकोटिभिस्तपसेतरः॥ २ ॥ साम्यमेव परं ध्यानं प्रणीतं विश्वद

र्शिभिः। तस्यैव व्यक्तये नूनं मन्येऽयं शास्त्रविस्तरः॥ ३ ॥ साम्यभावितभावानां स्यात्सुखं यन्मनीषिणां। तन्मन्ये ज्ञा

नसाम्राज्यसमत्वमवलंबते॥ ४ ॥ यः स्वभावोत्थितां साध्वीं विशुद्धिं स्वस्य वांछति। स धारयति पुण्यात्मा सम

त्वाधिष्ठितं मनः॥ ५ ॥ तनुत्रयविनिर्मुक्तं दोषत्रयविवर्जितं। यदा वेत्त्यात्मनात्मानं तदा साम्ये स्थितिर्भवेत् प्र

ज्ञेषपरपर्यायैः परद्रव्यैर्विलक्षणं निश्चिनोति यदात्मानं तदा साम्यं प्रसूयते ॥ अतस्यैवाविचलं
भिन्नत्वं
व्ययमात्तस्यैव बंधविश्लेषः समत्वं यस्य योगिनः ॥ यस्य हेयं न चादेयं जगद्विश्वं चराचरं ॥ स्या
शुभाशुभकर्मक्षय
त्साक्षाच्छुभाशुभमलक्षयः ॥१९॥ तथाहि ॥ शाम्यंति जंतवः क्रूरा बद्धवैराः परस्परं ॥ अपि स्वार्थप्रवृ
मुनिना
मुनेः साम्यप्रभावतः ॥२०॥ भजंति जंतवो मैत्रीमन्योन्यं त्यक्तमत्सराः ॥ समत्वालंबिनां प्राप्य पादपद्मार्चितां
मेघे
क्षितिं ॥२१॥ शाम्यंति योगिभिः क्रूरा जंतवो नेति शंक्यते ॥ दावदीप्तमिवारण्यं यथा वृष्टैर्बलाहकैः ॥२२॥ भवं
प्रसन्नानि कश्मलान्यपि देहिनां ॥ चेतांसि योगिसंसर्गेऽगस्त्ययोगे जलानि वा ॥२३॥ अपि चा ॥ क्षुभ्यंति
हस्ती दैत्य सिंह शार्दूल सर्पादय
क्षकिन्नरनरास्तुष्यंति नाकेश्वराः मुंचंति द्विपदैत्यसिंहशरभव्यालादयः क्रूरतां ॥ रुग्वैरप्रतिबद्धविभ्रमभय ॥१९

अष्टं जगज्ज्ञायते स्याद्योगीन्द्र समत्वसाध्यमथवा किं किं न सद्यो भुवि ॥२४॥ चंद्रः सांद्रैर्विकिरति सुधामंशुभिर्जी
वलोको भास्वानुग्रैः किरणपटलैरुच्छिनत्त्यंधकारं धात्री धत्ते भुवनमखिलं विश्वमेतच्च वायुर्यद्वत्साम्या
च्छमयति तथा जंतुजातं यतींद्रः ॥२५॥ सारंगी सिंहसावं स्पृशति सुतधिया नंदिनी [गौ] व्याघ्रपोतं मार्जारी हंसबालं
प्रणयपरवशा केकिकांता [मयूरी] भुजंगं वैराण्याजन्मजातान्यपि गलितमदा जंतवोन्ये त्यजंति श्रित्वा साम्यैकरू
ढं प्रशमितकलुषं योगिनं क्षीणमोहं ॥२६॥ एकः पूजां रचयति नतः [नम्रीभूतः] पारिजातप्रसूनैः क्रुद्धः कंठे क्षिपति भु
जगं हंतुकामस्ततोन्यः तुल्या वृत्तिर्भवति च तयोर्यस्य नित्यं स योगी साम्यारामं विशति परमज्ञानदत्तावका
शो ॥२७॥ नारण्यान्नगरं न मित्रमहिताद्ग्रावोष्टान्न जांबूनदं न स्रग्दाम भुजंगमान्न दृषद [ग्राव्या] स्तल्पं प्रशांकोज्ज्वलं यस्मा

तःकरणे विभर्ति कलयानोत्कृष्टतामीषदप्यार्यास्तं परमोपशांतिपदवीमारूढमाचक्षते ॥२८॥ मोधोत्संगे स्म
स्तुतिज्ञापनविधौ कर्द्दमे कुंकुमे वा पल्यंके कंटकाग्रे दृषदि शशिमणौ चर्मचीनांशुकेषु शीर्णांगे दिव्य
अनुममा शाम्यवशात्
समसमवशाद्यस्य चित्तं विकल्पैर्नालीढं सोयमेकः कलयति कुशलः साम्यलीलाविलासं ॥२९॥ चलत्य
चलमालेयं कदाचिद्दैवयोगतः नोपसर्गैरपि स्वांतं मुनेः साम्यप्रतिष्ठितं ॥३०॥ उन्मत्तमथ विभ्रांतं दिग्मूढ
मुप्तमेव वा साम्यस्थस्य जगत्सर्वं योगिनः प्रतिभासते ॥३१॥ वाचस्पतिरपि ब्रूते यद्यंजस्रं समाहितः वक्तुं तथा
पि शक्नोति न हि साम्यस्य वैभवं ॥३२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे साम्यप्र
करणम् ॥छ॥ दुःप्रज्ञाबललुप्तवस्तुनिचया विज्ञानशून्याशया विद्यंते प्रतिमंदिरं निजनिजस्वार्थोद्यता देहि

नः॥ आनंदामृतसिंधुपूरीकरश्चयैर्निर्वाप्यजन्मानलं येमुक्तेर्वदनेंदुवीक्षणपरास्तेसंतिद्वित्रायदि॥१॥ साम्यश्रीना
तिनिःशंकंसतामपिहृदिस्थितिं॥ धत्तेमुनिश्चलध्यानसुधासंबंधवर्जितं॥२॥ यस्यध्यानंसुनिःकंपंसमत्वंतस्य
ध्यानसाम्ययोः
निश्चलं॥ नानयोर्विद्ध्यधिष्ठानमन्योन्यंस्याद्विभेदतः॥३॥ साम्यमेवंनसद्ध्यानात्स्थिरीभवतिकेवलं॥ शुद्ध्यत्यपि
आत्मा
कर्मौघकलंकीयंत्रवाहकः॥४॥ यदेवसंयमीसाक्षात्समत्वमवलंबते स्यात्तदेवपरंध्यानंतस्यकर्मौघघात
प्रसरित
प्र॥ अनादिविभ्रमोद्भूतंरागादितिमिरंघनं॥ स्फोटयत्याशुजीवस्यध्यानार्कःप्रविजृंभितः॥६॥ भवज्वलनसं
भूतःमहादाहप्रशांतये॥ शश्वद्ध्यानांबुधेर्धीरैरवगाहःप्रशस्यते॥७॥ ध्यानमेवापवर्गस्यमुख्यमेकंनिबंधनं॥
तदेवदुरितव्रातगुरुकक्षहुताशनं॥८॥ अपास्यखंडविज्ञानरसिकांपापवासनां॥ असद्ध्यानानिचोदयं

योगं॥तद्यथा॥ज्वलनवनविषास्त्रव्यालशार्दूलदैत्यैः स्थलजलबिलसत्वैर्दुर्जनारातिभूपैः॥स्वजनधनशरीरध्वं
सिभिस्तैरनिष्टैर्भवतियदिहयोगादाद्यमार्त्तंतदेतत्॥२६॥तथाचरस्थितैर्भावैरनेकैःसमुपस्थितैः॥अनिष्टैर्य
त्क्लिष्टंस्यादार्त्तंतत्प्रकीर्तितं॥२७॥श्रुतैर्दृष्टैःस्मृतैर्ज्ञातैःप्रत्यासत्तिंचसंश्रितैः॥योनिष्टार्थैर्मनःक्लेशः
॥२८॥प्रत्नोपांनिष्टसंयोगेतद्वियोगानुचिंतनं॥यत्स्यात्तदपितत्वज्ञैःपूर्वमार्त्तंप्रकीर्तितं॥२९॥प्रथमं॥
विनाशे
र्य्यकलत्रबांधवसुहृत्सौभाग्यभोगात्ययेचित्तप्रीतिकरप्रसन्नविषयप्रध्वंसभावेथवा॥सं
विभ्रशौर्यतिविद्यतेहृनितरांतत्स्यादिष्टवियोगजंतनुमतांध्यानंकलंकास्पदं॥३०॥दृष्टश्रुतानुभूतैस्तैः
श्चित्तरंजकैः॥वियोगेयन्मनःखिन्नंस्यात्तदार्त्तंद्वितीयकं॥३१॥मनोज्ञवस्तुविध्वंसेपुनस्तत्संगमार्थिभिः॥क्लि

तेयत्नदेवस्याद्द्वितीयार्त्तस्यलक्षणं॥३२॥द्वितीयं॥कासश्वासभगंदरोदरजरुकुष्टातिसारज्वरैः पित्तश्लेष्ममरुत्प्र
कोपजनितै रोगैः शरीरांतकैः॥स्याच्छश्वत्प्रबलैः प्रतिक्षणभवैर्यद्व्याकुलत्वंनृणांतद्रोगार्तमनिंदितैः प्रकटितं
दुर्वारदुःखाकरं॥३३॥अल्पानामपिरोगाणांमाभूत्स्वप्नेपिसंभवः ममेतियानृणांचिंतास्यादार्त्तंतृतीयकं॥३४
भोगाभोगीद्रसेव्यास्त्रिभुवनजयनीरूपसाम्राज्यलक्ष्मीराज्यंक्षीणारिचक्रंविजितसुरवधूलास्यलीलायुव
त्यः॥अन्यच्चानंदभूतंकथमिहभवतीत्यादिचिंतासुभाजांयात्तद्भोगार्तमुक्तंपरमगणधरैर्जन्मसंतानसूत्रं
३५॥पुन्यानुष्ठानजातैरभिलषतिपदंयज्जिनेंद्रामराणांयद्वातैरेवबांछत्यहितकुलकुजच्छेदमत्यंतकोपात्
पूजासत्कारलाभप्रभृतिकमथवायाचतेयद्विकल्पैः॥स्यादार्त्तंतन्निदानप्रभवमिहनृणांदुःखदावोग्रधाम॥३६॥

इष्टभोगादिसिद्ध्यर्थं रिपुघातार्थमेव वा । यन्निदानं मनुष्याणां स्यादार्त्तं तत्तुरीयकं ॥ चतुर्थं ॥ इत्थं चतुर्भिः
(विस्तारितैः) थितैर्विकल्पैरार्त्तं समासादिह हि प्रणीतं ॥ अनंतजीवाशयभेदभिन्नं ब्रूते समग्रं यदि वीरनाथः ॥३४॥ (अनिष्ट) ऊर्द्ध्व
मपि पर्यंते रम्यमप्यग्रिमक्षणे (प्रथम) ॥ विद्ध्यसद्ध्यानमेतद्धि षड्गुणस्थानभूमिकं ॥३५॥ संयतासंयतेष्वेतच्चतुर्भेदं प्र (पंचमगुणस्थानेषु श्रावकेषु)
(षष्ठगुणस्थानवर्त्तिमुनिषु) यतं ॥ प्रमत्तसंयतानां तु निदानरहितं त्रिधा ॥३६॥ कृष्णनीलाद्यसल्लेश्याबलेन प्रविजृंभते ॥ इदं दुरितदावा
र्चिः प्रसूतेरिंधनोपमं ॥३७॥ (आर्त्त) एतद्विनापि यत्नेन स्वयमेव प्रसूयते ॥ अनाद्यसत्समुद्भूतसंस्कारादेव देहिनां ॥३८॥
(आर्तस्य) अनंतदुःखसंकीर्णमस्य तिर्यग्गतेः फलं ॥ क्षायोपशमिको भावः कालश्चांतर्मुहूर्त्तकं ॥३९॥ शंकाशोक
मादकलहाश्चिंताभ्रमोद्भ्रांतय उन्मादो विषयोत्सुकत्वमसकृन्निद्रांगजाड्याश्रमाः मूर्छादीनि शरीरि

कथयिता

रतं लिंगानि बाह्यान्यलं आर्तोधिष्ठितचेतसां श्रुतधरैर्व्यावर्णितानि स्फुटं ॥४४॥ इत्याचार्यश्रीशुभचंद्रविरचिते
ज्ञानार्णवे योगप्रदीपाधिकारे आर्तध्यानप्रकरणम् ॥२५॥ छ ॥ रुद्राशयभवं भीममपि रौद्रं चतुर्विधं कीर्त्यमानं विदं
त्वार्याः सर्वसत्वाभिनंदकाः ॥१॥ रुद्रः क्रूराशयः प्राणी प्रणीतस्तत्वदर्शिभिः रुद्रस्य कर्म भावो वा रौद्रमित्यभि
धीयते ॥२॥ हिंसानंदान्मृषानंदाच्चौर्यात्संरक्षणात्तथा ॥ प्रभवत्यंगिनां प्राग्वद्रौद्रं चतुर्विधं ॥३॥ हिंसारौद्रं
॥ तद्यथा ॥ हते निपीडिते ध्वस्ते जंतुजाते कदर्थिते स्वेन चान्येन यो हर्षस्तद्धिंसारौद्रमुच्यते ॥४॥ अनारतं निःक
रुणस्वभावः स्वभावतः क्रोधकषायदीप्तः ॥ मदोद्धतः पापमतिः कुशीलः स्यान्नास्तिको यः स हि रौद्रधामा ॥
संगः
५॥ हिंसाकर्मणि कौशलं निपुणता पापोपदेशे भृशं दाक्ष्यं नास्तिकशासने प्रतिदिनं प्राणातिपाते रतिः ॥ संवास

महनिर्दयैर्विरतैर्नैसर्गिकी क्रूरता यत्स्याद्देहभृतां तदत्र गदितं रौद्रं प्रशांताशयैः ॥२॥ केनोपायेन घातो भव
तितनुमतां कः प्रवीणोत्र हंता हंतुं कस्यानुरागः कतिभिरिह दिनैर्हन्यते जंतुजातं ॥ हत्वा पूजां करिष्ये द्विजगु
नभचरस्थलचरजलचर
रुमरुतां पुष्टिशांत्यर्थमिष्टं यत्स्यादिंहिमानिनंदो जगति तनुभृतां तद्धि रौद्रं प्रणीतं ॥३॥ गगनवनधरित्रीचारि
जीवानां खल्वा
णां देहभाजां दलनदहनबंधच्छेदघातेषु यत्नं ॥ दृतिनखकरनेत्रोत्पाटने कौतुकं यत्तदिह गदितमुच्चै
रौद्रमिष्टं ॥४॥ अस्य घातो जयोन्यस्य समरे जायतामिति स्मरत्यंगी तदप्याहू रौद्रमध्यात्मवेदिन ॥५॥
प्रति
जंतुबधाद्युरुपराभवे यो हर्षस्तद्धि विज्ञेयं रौद्रं दुःखानलेंधनं ॥६॥ अहं कदा करिष्यामि पूर्ववैरस्य निः
वैरिण: इत्यवं
अस्याचित्रैर्वधैश्छेतिचिंता रौद्राय कल्पिता ॥७॥ किं कुर्मः शक्तिवैकल्याज्जीवत्यद्यापि विद्विषः तद्धमुत्र हनि

ध्यामः प्राप्य कालं तथा बलं ॥ २२॥ अनिलषति नितांतं यत्परस्यापकारं व्यसनविशिखभिन्नं वीक्ष्य यत्तोषमेति ॥
यदिह गुणगरिष्टां द्वेष्टि [द्वेषकरोति] दृष्ट्वान्यभूतिं भवति हृदि सशल्यः तद्धि रौद्रस्य लिंगं ॥ २३॥ हिंसानंदोद्भवं रौद्रं वकुं कस्या
स्ति कौशलं जगज्जंतुसमुद्भूतविकल्पशतसंभवं ॥ २४॥ हिंसोपकरणादानं क्रूरसत्वेष्वनुग्रहं ॥ निस्त्रिंशतादि
गानि रौद्रे बाह्यानि देहिनां ॥ २५॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे हिंसानंदः प्रथम
॥ छ ॥ असत्यकल्पनाजालकश्मलीकृतमानसः चेष्टते यज्जनस्तद्धि मृषारौद्रं प्रकीर्तितं ॥ १॥ तद्यथा ॥ विधा
य वंचकं शास्त्रं मार्गमुद्दिश्य निर्दयं प्रपात्य व्यसने लोकं भोक्ष्येऽहं [भोगयिष्यामि] वांछितं सुखं ॥ २॥ असत्यचातुर्यबलेन लो
द्वित्तं ग्रहिष्यामि बहुप्रकारं तथाश्वमातंगपुराकराणि कन्यादिरत्नानि च बंधुराणि ॥ ३॥ असत्यवाग्वंचनया

तं प्रवर्तयत्यत्र जनं वराकं स्वधर्ममार्गादतिवर्तनेन मदोद्धतो यः स हि रौद्रधामा ॥४॥ असत्यसामर्थ्यवशाद
तीन्नृपेण चान्येन च घातयामि। अदोषिणां दोषचयं विधाय चिंतेति रौद्राय मतां मुनींद्रैः ॥५॥ पातयामि जनं
मूढं व्यसनेनर्थसंकटे। वाक्कौशल्यप्रयोगेण वांछितार्थप्रसिद्धये ॥६॥ इमान्जडान्बोधविचारविच्युतान्
तारयाम्येष वचोभिरुन्नतैः ॥७॥ अमी प्रवर्त्स्यंति मदीयकौशलादकार्यवर्गेष्विति नात्र संशयः ॥७॥ अनेकासत्यसं
कल्पैर्यः प्रमोदः प्रजायते। मृषानंदात्मकं रौद्रं तत्प्रणीतं पुरातनैः ॥८॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञाना
र्णवे योगप्रदीपाधिकारे असत्यरौद्रं द्वितीयं ॥२॥ छ॥ चौर्योपदेशबाहुल्यं चातुर्यं चौर्यकर्मणि। यच्चौर्यै
तः स चौर्यानंद इष्यते ॥१॥ तद्यथा॥ यच्चौर्याय शरीरिणामहरहश्चिंता समुत्पद्यते कृत्वा चौर्यमपि प्रमोदमतुलं

कुर्वंति यत्संततं ॥ चौर्येण ॥ पिहिते परैः परधने यज्जायते संभ्रमस्तच्चौर्यप्रभवं वदंति निपुणा रौद्रं सुनिंदास्पदं ॥२
कृत्वा सहायं वरवीरसैन्यं तथाभ्युपायांश्च बहुप्रकारान् ॥ धनान्यलभ्यानि चिरार्जितानि सद्यो हरिष्यामि जन
स्य धात्र्याम ॥३॥ द्विपदस्चतुष्पदसारं धनधान्यवरांगनासमाकीर्णम् ॥ वस्तु परकीयमपि मे स्वाधीनं चौर्यसाम
र्थ्यात् ॥४॥ इत्थं चुरायां विविधप्रकारः शरीरिभिर्यः क्रियतेऽभिलाषः ॥ अपारदुःखार्णवहेतुभूतं रौद्रं तृतीयं त
दिह प्रणीतं ॥५॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे चौर्यानंदरौद्रं तृतीयं ॥ ३ ॥ छ ॥ ब
ह्वारंभपरिग्रहेषु नियतं रक्षार्थमभ्युद्यते यत्संकल्पपरंपरां वितनुते प्राणीह रौद्राशयः ॥ यच्चालंब्य महत्त्वमु
न्नतमना राजेत्यहं मन्यते तत्तुर्यं प्रवदंति निर्मलधियो रौद्रं भवाशंसिनां ॥१॥ तद्यथा ॥ आरोप्य चापं निशितैः

शत्रौघैर्निकृत्यैवेरिव्रजमुद्धतारं।दग्ध्वापुरग्रामवराकराणिप्राप्स्येहमैश्वर्य्यमनन्यसाध्यं॥२०॥प्राप्तिद्यगृह्य
धरांमदीयांकन्यानिरत्नानिधनानिनारीः॥येत्रात्रवःसंप्रतिलुप्तचित्तास्तेषांकरिष्येकुलकक्षदाहं॥२१॥सक
पूज्यंवीरवर्गोपसेव्यंस्वजनधनसमृद्धंरत्नरामाभिरामं॥अमितविभवसारंविश्वभोगाधिपत्यंप्रबल
लांतंहंतकृत्वामयाप्तं॥जित्वाभुवंजंतुकुलानिहत्वाप्रविश्यदुर्गाण्युदधीन्विलंघ्य॥कृत्वापदंमूर्द्धिमदोद्ध
तांमयाधिपत्यंकृतमभ्युदारं॥२४॥जलानलव्यालविषप्रयोगैर्विश्वासभेदप्रणिधिःप्रपंचैः॥उत्साद्यनिःशे
षानितिचक्रंस्फुरत्ययंमेप्रबलप्रतापः॥२५॥इत्यादिसंरक्षणसंनिबद्धंसंचिंतनंयत्क्रियतेमनुष्यैः॥संरक्षणानंद
भवंतदेतद्रौद्रंप्रणीतंजगदेकनाथैः॥२६॥इत्याचार्य्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेसंरक्ष

॥नंदरौद्रं च तुर्थकं॥४॥ कृष्णलेश्याबलोपेतं श्वभ्रपातफलांकितं॥ रौद्रमेतद्धि जीवानां स्यात्पंचगुणभूमिकं॥१॥ क्रूर
तादंडपारुष्यं वंचकत्वं कठोरता॥ निस्त्रिंशत्वं च लिंगानि रौद्रस्योक्तानि सूरिभिः॥२॥ विस्फुलिंगनिभे नेत्रे भ्रूव
क्रा भीषणाकृतिः॥ कंपस्वेदादिलिंगानि रौद्रे बाह्यानि देहिनां॥३॥ क्षायोपशमिको भावः कालश्चांतर्मुहूर्त्तिकः
दुष्टाशयवशादेतदप्रशस्तावलंबनं॥४॥ दहत्येव क्षणार्द्धेन देहिनामिदमुत्थितं॥ असद्ध्यानं त्रिलोकश्रीप्रसवं
धर्म्मपादपं॥५॥ इत्यार्त्तरौद्रे गृहिणामजस्रं ध्याने सुनिंद्ये भवतः स्वतोपि॥ परिग्रहारंभकषायदोषैः कलंकितेंत
करणे विशंकं॥६॥ क्वचित्क्वचिदमी भावाः प्रवर्त्तंते मुनेरपि॥ प्राक्कर्मगौरवाच्चित्रं प्रायः संसारकारणं॥७॥ स्वयमेव
प्रजायंते विना यत्नेन देहिनां॥ अनादिदृढसंस्कारादुर्ध्यानानि प्रतिक्षणं॥८॥ इति विगतकलंकैरर्चितं चित्रसं

दुरितकुरुहकंदं निंद्यदुर्ध्यानयुग्मं॥ कटुकतरफलाढ्यं सम्यगालोच्य धीरत्यज सपदि यदि त्वं मोक्षमार्गे प्र
वृत्तः॥४॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे आर्तरौद्रध्यानप्रकरणं॥ छ॥ अथ प्र
शममालंब्य विधाय स्ववशं मनः॥ विरज्य कामभोगेषु धर्मध्यानं निरूपय॥१॥ तदेव प्रक्रमायातं सविकल्पं स
मासतः॥ आरंभफलपर्यंतं प्रोच्यमानं विबुध्यतां॥२॥ ज्ञानवैराग्यसंपन्नः संवृतात्मा स्थिराशयः॥ मुमुक्षुरु
द्यतो ध्याता धीरः प्रशस्यते॥३॥ चतस्रो भावना धन्याः पुराणपुरुषाश्रिताः॥ मैत्र्यादयश्चिरं चित्ते विधेया
सिद्धये॥४॥ अथ मैत्री॥ क्षुद्रेतरविकल्पेषु चरस्थिरशरीरिषु॥ सुखदुःखाद्यवस्थासु संस्थितेषु यथायथं॥५॥
नायोनिगतेष्वेषु समत्वेनाविराधका॥ साध्वी महत्त्वमापन्ना मतिर्मैत्रीति पठ्यते॥६॥ जीवंतु जंतवः सर्वे क्लेशव्य

सनवर्ज्जिताः॥ प्राप्नुवंतुसुखंत्यक्त्वावैरंपापंपराभवं॥ अथकरुणा॥ दैन्यशोकसमुत्त्रासरोगपीडार्द्दितात्मसु
वधबंधनरुद्धेषुयाचमानेषुजीवितं॥ ७॥ क्षुत्तृट्श्रमाभिभूतेषुशीताद्यैर्व्यथितेषुच॥ अवरुद्धेषुनिस्त्रिंशैर्घा
तमानेषुनिर्द्दयं॥ ८॥ मरणार्त्तेषुभूतेषुयत्प्रतीकारवांछया॥ अनुग्रहमतिःसेयंकरुणेतिप्रकीर्त्तिता॥ १०॥
अथमुदिता॥ तपःश्रुतयमोद्युक्तचेतसांज्ञानचक्षुषां॥ विजिताक्षकषायाणांस्वतत्त्वाभ्यासशालिनां॥ १॥ ज
जगत्त्रयचमत्कारिचरणाधिष्ठितात्मनां॥ योगुणेषुप्रमोदःस्यात्सद्भिःसामुदितामता॥ २॥ अथोपेक्षा॥ क्रोधावि
द्धेषुसत्वेषुनिस्त्रंशक्रूरकर्मसु॥ मधुमांससुरान्यस्त्रीलुब्धेष्वत्यंतपापिषु॥ ३॥ देवागमयतिव्रातनिंदकेष्वा
त्मसंशिषु॥ नास्तिकेषुचमाध्यस्थ्यंयत्सोपेक्षाप्रकीर्त्तिता॥ ४॥ एताःमुनिजनानंदसुधास्पंदैकचंद्रिका॥ ध्व

त्तरागाद्युरुक्लेशालोकाग्रपददीपिका॥१५॥एतानिरनिशंयोगीश्रीउन्नत्यंतनिर्भरं॥सुखमात्मोत्थमत्यक्ष
मिहैवास्कंदति ध्रुवं॥१६॥भावनास्वासुसंलीनःकरोत्यध्यात्मनिश्चयं॥अवगम्यजगद्वृत्तंविषयेषुनमुह्य
॥१७॥योगनिद्रास्थितिंधत्तेमोहनिद्रापसर्पति॥आसुसम्यक्प्रणीतासुस्यान्मुनेस्तत्त्वनिश्चयं॥१८॥आभिर्यदा
विश्वंभावयत्यखिलंवशी॥तदौदासीन्यमापन्नश्चरत्यत्रैवमुक्तवत्॥१९॥रागादिवागुराजालंनिकृत्याचिं
त्यविक्रमः॥स्थानमाश्रयतेधन्योविविक्तंध्यानसिद्धये॥२०॥कानिचित्तत्रप्रास्यंतेदूष्यंतेकानिचित्पुनः॥
ध्यानसिध्यर्थंस्थानानिमुनिसत्तमैः॥२१॥विकीर्यतेमनःसद्यःस्थानदोषेणदेहिनां॥तदेवस्वस्थतांधत्ते
नमासाद्यबंधुरं॥२२॥म्लेच्छाधमजनैर्जुष्टंदुष्टभूपालपालितं॥पाषंडिमंडलाक्रांतंमहामिथ्यात्ववासितं॥२३॥कौ

लकापालिकावासंरुद्रक्षुद्रादिमंदिरं॥ उद्भ्रांतभूतवेतालंचंडिकाभवनाजिरं॥२४॥ पण्यस्त्रीकृतसंकेतंमंदचा
रित्रमंदिरं॥ क्रूरकर्माचिरार्ब्धंकुशास्त्राभ्यासवंचितं॥२५॥ म्लेच्छजातिकुलोत्पन्नशाक्तिस्वीकारदर्पितं॥ मिलिता
नेकदुःशीलकल्पितानेकसाहसं॥२६॥ द्यूतकारसुरापानविटबंदिव्रजान्वितं॥ पाकमल्लसमाक्रांतंनास्ति
कासारसेवितं॥२७॥ क्रव्यादकामुकाकीर्णंव्याधविध्वस्तश्वापदं॥ शिल्पिकारुकविक्षिप्तमस्थिजीविजनं
चितं॥२८॥ प्रतिपक्षशिरःशूलप्रत्यनीकावलंबितं॥ आत्रेयीखंडितव्यंगसंश्रितंचपरित्यजेत्॥२९॥ विद्रवंति
जनाःपापाःसंचरंत्यभिसारिकाः॥ क्षोभयंतीङ्गिताकारैर्यत्रनार्योप्यशंकिताः॥३०॥ किंचक्षोभायमोहायय
द्विकारायजायते॥ स्थानंतदपिमोक्तव्यंध्यानविध्वंसशंकितैः॥३१॥ तृणकंटकवल्मीकविषमोपलकर्दमैः॥ भ

स्मोच्छिष्टास्थिरक्ताद्यैर्दूषितां संत्यजेद्भुवं॥३२॥काकःकौशिकमार्जारखरगोमायुमंडलैः॥अवघुष्टं हि विघ्नाय
ध्यातुं कामस्य योगिनः॥३३॥ध्यानध्वंसनिमित्तानि तथान्यान्यपि भूतले॥न हि स्वप्नेपि सेव्यानि स्थानानि
निसत्तमे॥३४॥इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे विरुद्धस्थानप्रकरणं॥छ॥
लभ्यंगां
त्रेमहातीर्थे पुराणपुरुषाश्रिते॥कल्याणकलिते पुण्ये ध्यानसिद्धिःप्रजायते॥१॥सागरांते वनांते वा शै
तरे थवा॥पुलिने पद्मखंडांते प्राकारे शालसंकटे॥२॥सरितां संगमे द्वीपे प्रसन्ने तरुकोटरे॥जीर्णोद्याने श्मसा
वा गुहागर्भे विजंतुके॥३॥सिद्धकूटे जिनागारे कृत्रिमेऽकृत्रिमेऽपि च॥महर्द्धिकमहावीरयोगसंसिद्धवांछि
ते॥४॥मनःप्रीतिप्रदे प्रास्तपूंकाकोलाहलच्युते॥सर्वर्त्तुसुखदे रम्ये सर्वोपद्रववर्जिते॥५॥शून्यवेश्मन्यथ

भूगर्भेकदलीगृहे॥पुरोपवनवेद्यंतेमंडपेचैत्यपादपे॥६॥वर्षातपतुषारादिपवनासारवर्जिते॥स्थानेजागत
विश्रांतंयमीजन्मार्तिशांतये॥७॥यत्ररागादयोदोषाअजस्रंयांतिलाघवं॥तत्रैववसतिःसाध्वीध्यानकालेवि
शेषतः॥८॥दारुपट्टेशिलापट्टेभूमौवासिकतास्थले॥समाधिसिद्धयेधीरोविदध्यात्सुस्थिरासनं॥९॥पर्यंक
मर्द्धपर्यंकंवक्रवीरासनंतथा॥सुखारविंदपूर्वंचकायोत्सर्गश्चसंमतः॥१०॥येनायनसुखासीनाविदध्युर्नि
श्चलंमनः॥तत्तदेवविधेयंस्यान्मुनिभिर्बंधुरासनं॥११॥कायोत्सर्गश्चपर्यंकःप्रशस्तःकैश्चिदीरितः॥देहिनां
वीर्यवैकल्यात्कालदोषेणसंप्रति॥१२॥वज्रकायामहासत्वानिःकंपाःसुस्थिरासनाः॥सर्वावस्थास्वलंध्यात्वा
गताःप्राग्योगिनःशिवं॥१३॥उपसर्गैरपिस्फीतैर्देवदैत्यादिकल्पितैः॥स्वरूपालंबितंतेषांनचेतश्चाल्यतेक्वचित्॥

१४॥श्रूयंते संवृतस्वांताः स्वतत्त्वकृतनिश्चयाः॥ विपद्यो(ऽ)ग्रोपसर्गाग्निं ध्यानसिद्धं समाश्रिताः॥१५॥ केचिज्ज्वालाव
(लि)रि(सरि)न्निगजव्यालविध्वस्तदेहा॥ केचित्क्रूरारिदैत्यैरदयमभिहताश्चक्रशूलासिदंडैः॥ भूकंपोत्पातवातप्र
बलपविघनव्रातरुद्धास्तथान्ये॥ कृत्वा स्थैर्यं समाधौ सपदि शिवपदं निःप्रपंचं प्रपन्ना॥१६॥ तद्धीर्यं यमिनां मन्ये
संप्रति पुरातनं॥ अतः स्वप्नेपि तामास्थां प्राचीनां कर्तुमक्षमा॥१७॥ निःशेषविषयोत्तीर्णो निर्विण्णो जन्मसं ।
आत्माधीनमनाः शश्वत्सर्वदा ध्यातुमर्हति॥१८॥ अविक्षिप्तं यदा चेतः स्वतत्त्वाभिमुखं भवेत्॥ नैकं मुक्त्वा मुनेः सा
द्विक्षेपरहितं मनः॥१९॥ संविग्नः संवृतो धीरः स्थिरात्मा निर्मलाशयः॥ सर्वावस्थासु सर्वत्र सदैव ध्यातुमर्हति॥२०॥
जने जनसंकीर्णे सुस्थिते दुःस्थितेपि वा॥ यदि धत्ते स्थिरं चित्तं न तदास्ति निषेधनं॥२१॥ पूर्वाशाभिमुखः साक्षा

रान्मुखोथवा॥प्रसन्नवदनोध्याताध्यानकालेप्रशस्यते॥२२॥अथवा॥चरणज्ञानसंपन्नाजिताक्षावीतविभ्रमाः
प्रागनेकास्ववस्थासुसंप्राप्तायमिनःशिवं॥२३॥मुख्योपचारभेदेनद्वौमुनीस्वामिनौमतौ॥अप्रमत्तप्रमत्ताख्यौधर्मस्यै
तौयथायथं॥२४॥अप्रमत्तःसुस्थानोवज्रकायोवशीस्थिरः॥पूर्ववित्संवृतोधीरोध्यातासंपूर्णलक्षणः॥२५॥श्रुतेन
विकलेनापिस्वामीसूत्रेप्रकीर्तितः॥अधःश्रेण्याप्रवृत्तात्माधर्मध्यानस्यसुश्रुतः॥२६॥किंचकेचिच्चधर्मस्यचत्वा
रःस्वामिनःस्मृताः॥सदृष्टाद्यप्रमत्तांतायथायोग्येनहेतुना॥२७॥ध्यातारस्त्रिविधाज्ञेयास्तेषांध्यानान्यपित्रिधालेश्य
विशुद्धियोगेनफलसिद्धिरुदाहृता॥२८॥अथासनजयंयोगीकरोतुविजितेंद्रियः॥मनागपिनखिद्यंतेसमाधौसुस्थि
रासनाः॥२९॥आसनाभ्यासवैकल्याद्वपुःस्थैर्यंनविद्यते॥खिद्यतेत्वंगवैकल्यात्समाधिसमयेध्रुवं॥३०॥वातातपतुषा

राद्यैर्जंतुजातैरनेकधा॥ कृतासनजयो योगी खेदितोपि न खिद्यते॥ ३१॥ आसाद्याभिमतं रम्यं स्थानं चित्तप्रस
उद्भिन्नपुलकः श्रीमान्पर्यंकमधितिष्ठति॥ ३२॥ पर्यंकदेशमध्यस्थे प्रोत्तानेकरकुड्मले॥ करोत्युद्भिन्नराजीव
निभे च्युतचापले॥ ३३॥ नासाग्रदेशविन्यस्ते धत्ते नेत्रे सुनिश्चले॥ प्रसन्ने सौम्यतापन्ने निस्पंदे मंदतारके॥ ३४॥
भ्रूविक्रियाहीनं सुश्लिष्टाधरपल्लवं॥ सुप्तमत्स्यह्रदप्रायं विदध्यान्मुखपंकजं॥ ३५॥ अगाधकरुणांभोधौ मग्नः
विश्वमानसः॥ स्तंभावायतं वपुर्धत्ते प्रशस्तं पुस्तमूर्तिवत्॥ ३६॥ विवेकवार्द्धिकल्लोलैर्निर्मलीकृतमानसः॥ ज्ञानमंत्रो
द्धूताशेषरागादिविषमग्रहः॥ ३७॥ रत्नाकर इवागाधः सुराद्रिरिव निश्चलः॥ प्रशांतविश्वविस्पंदः प्रनष्टसकल
भ्रमः॥ ३८॥ किमयं लोष्टनिष्पन्नः किं वा पुस्तप्रकल्पितः॥ समीपस्थैरपि प्रायः प्राज्ञैर्ध्यानीति लक्ष्यते॥ ३९॥

जयः॥ सुनिर्नीतस्वसिद्धांतैः प्राणायामः प्रशस्यते॥ मुनिभिर्ध्यानसिद्ध्यर्थं स्थैर्यार्थं चांतरात्मनः॥ १॥ अतः साक्षात्
स विज्ञेयः पूर्वमेव मनीषिणा॥ मनागप्यन्यथा शक्यो न कर्तुं चित्तनिग्रहः॥ २॥ त्रिधा लक्षणभेदेन संस्मृतः पूर्व
सूरिभिः॥ पूरकः कुंभकश्चैव रेचकस्तदनंतरं॥ ३॥ तद्यथा॥ द्वादशांतात्समाकृष्य यः समीरः प्रपूर्यते॥ स पूरक इ
ति ज्ञेयो वायुविज्ञानकोविदैः॥ ४॥ निरुणद्धि स्थिरीकृत्य श्वसनं नाभिपंकजे॥ कुंभवन्निर्भरः सोयं कुंभकः परि
कीर्तितः॥ ५॥ निःसार्यतेतियत्नेन यः कोष्ठात् श्वसनः शनैः॥ स रेचक इति प्राज्ञैः प्रणीतः पवनागमे॥ ६॥ नाभिकं
दाद्विनिःक्रांतं हृत्पद्मोदरमध्यगं॥ द्वादशांते सुविश्रांतं तज्ज्ञेयं परमेश्वरं॥ ७॥ तस्य चारं गतिं बुद्ध्वा संस्थां चैवात्मनः
सदा॥ चिंतयेत्कालमायुश्च शुभाशुभफलोदयं॥ ८॥ अत्राभ्यासं प्रयत्नेन प्राप्ततंद्रः प्रतिक्षणं॥ कुर्वन् योगी विजान

पूरी रिणां ध्रुवं वामा॥ सपयतितदेव शश्वद्वहमाना दक्षिणा नाडी॥८४॥ संग्राम सुरत भोजन विरुद्धदुर्गेषु
क्षेमोष्टा॥ स्यात् अभ्युदयहृदयवांछितसमस्तप्राप्तेषु वामेवा॥८५॥ नेष्टघटने समर्थो राहुग्रहकालचंद्रस
र्याद्या॥ क्षितिवरुणौ त्वमृतगतौ समस्तकल्याणदौ ज्ञेयौ॥८६॥ पूर्णे पूर्वस्य जयो रिक्ते त्वितरस्य कथ्यते तज्ज्ञैः
भयोर्युद्धनिमित्ते दूतेनाशंसिते प्रश्ने॥८७॥ ज्ञातुर्नाम प्रथमं पश्चाद्यद्यातुरस्य गृह्णाति॥ दूतस्तदेष्टसिद्धि
स्तस्याद्विपर्यासात्॥८८॥ जयति समाक्षरनामा वामावाहुस्थितेन दूतेन॥ विषमाक्षरस्तु दक्षिणदिक्संस्थे
स्त्रसंपाते॥८९॥ भूतादिग्रहीतानां रोगार्तानां च सर्पदष्टानां॥ पूर्वोक्त एव च विधिर्बोधव्यो मंत्रिणां वश्यं॥९०॥
पूर्णा वरुणे प्रविशति यदि वामा जायते क्वचित्पुण्ये॥ सिध्यंत्यचिंतान्यपि कार्याण्यारभ्यमाणानि॥९१॥ जय

वितलाभाद्याः येर्थाः पूर्वंतुसूचिताः शास्त्रे स्युस्तेसर्वेप्यफलामृत्युस्थेमरुतिलोकानां॥९२॥अनिलमवबुध्यस
स्यकुपुष्पंहस्तात्सपातयेतज्ज्ञानी॥मृतजीवितविज्ञानेततः स्वयंनिश्चयंकुरुते॥९३॥वरुणेत्वरितोलाभश्चिरेण
भौमेतदर्थिनेवाच्यं॥तुछतरःपवनाख्येसिद्धोपिविनश्यतेवक्ता॥९४॥आयातिगतोवरुणेभौमेतत्रैवतिष्ठति
सुखेन॥यात्यन्यत्रश्वसनेमृतइतिवक्तासमादेश्यं॥९५॥घोरतरःसंग्रामोहुताशनोमरुतिभंगएवस्यात्॥गग
नेस्थेन्यविनाशंमृत्युर्वायुद्धपृछायां॥९६॥ऐंद्रेविजयःसमरेततोधिकोवांछितश्चवरुणेस्यात्॥संधिर्वारिपु
भंगात्स्वसिद्धिसंसूचनोपेतः॥९७॥वर्षतिभौमेमघवान्वरुणेतुमनोगतंतथाजस्रं॥दुर्दिनघनाश्चपवनेवह्नौ
वृष्टिःकियन्मात्रा॥९८॥सस्यानांनिःपत्तिःस्याद्वरुणेपार्थिवेचसुश्लाघ्या॥स्वल्पापिनचाग्नेयेवाय्वाकाशेतुमध्य

॥ज्ञानार्णव॥
॥९५॥

९९॥नृपतिगुरुबंधुवृद्धाअपरेप्यभिलषितसिद्धयेलोकाः॥पूर्णांगेकर्तव्याविदुषावीतप्रपंचेन॥१००॥वाद
नाज्ञानेषुदक्षैः पूर्णांगनिवेशितासुयोषासु॥क्रियतेचेतस्त्वरितंनातोन्यद्वश्यविज्ञानं॥१॥अरिरिणिकचौरदु
ष्टाअपरेप्युपसर्गविग्रहाद्याश्च॥रिक्तांगेकर्तव्याजयलाभसुखार्थिभिःपुरुषैः॥२॥रिपुशस्त्रसंप्रहारेरक्षतियः
पूर्णगात्रभूभागं॥बलिभिरपिवैरिवर्गैर्न्निहन्यतेतस्यसामर्थ्यं॥३॥वरुणमहेंद्रौशस्तौप्रश्नेगर्भस्यपुत्रदौ
इतरौस्त्रीजन्मकरौशून्यंगर्भस्यनाशाय॥४॥नासाप्रवाहदिग्भागेगर्भार्थ्यंयस्तुपृच्छति॥पुरुषःपुरुषादेशं
न्यभागेतथांगना॥५॥विज्ञेयःसन्मुखेषंढःसुषुम्नायामुभौपिशून्येगर्भहानिःसुसंक्रांतौसमेक्षेमंविनिर्दि
तूर्द्धेद्धायेत्तयदिनसम्यग्मरुत्तदोबिंदुभिःसनिश्चेय॥सितपीतारुणकृष्णैर्वरुणावनिदहनपवनोत्थैः॥७॥

कर्णाक्षिनासिकापुटमंगुष्ठप्रथममध्यमांगुलिभिः॥ द्वाभ्यांचपिधायमुखंकरणेनहिदृश्यतेबिंदुः॥८॥ दक्षि
णामथवावामांयोनिषेद्धुंसमीप्सति॥ तदंगंपीडयेदन्यांनामानाडींसमाश्रयेत्॥९॥ अग्रेवामविभागेचंद्र
क्षेत्रंवदंतितत्त्वविदः॥ पृष्ठेचदक्षिणांगेरवेस्तदेवाङ्कुराचार्याः॥१०॥ अवनिवनदहनमंडलविचलनशील
स्यतावदनिलस्य॥ गतिरन्तरेवमरुत्पुरविहारिणःमातिरश्वीना॥११॥ पवनःप्रवेशकालेजीवइतिप्रो
च्यतेमहामतिभिः॥ निःक्रमणेनिर्जीवःफलमपिचतयोस्तथाभूतं॥१२॥ जीवेजीवतिविश्वंमृतेमृतंस्मृ
तिःसमुद्दिष्टं॥ सुखदुःखजयपराजयलाभालाभादिमार्गीयं॥१३॥ संचरतियदावायुस्तत्त्वात्तत्त्वांतरंतदा॥
ज्ञेयं॥ यत्त्यजतितद्रिक्तंतत्पूर्णंयत्रसंक्रमति॥१४॥ ग्रामपुरयुद्धजनपदगृहराजकुलप्रवेशनिःकाशे॥ पूर्ण

॥ज्ञानार्णव॥
॥९६॥

पादमग्रे कृत्वा व्रजतोस्य सिद्धिः स्यात्॥१५॥अमृते प्रवहति नूनं केचित्प्रवदंति सूरयोत्यर्थं॥जीवंति विषाशक्ता
तितथान्यथाभूते॥१६॥यस्मिन्न सति म्रियते जीवति सति भवति चेतनाकलितः॥जी
तत्त्वविदः॥१७॥सुखदुःखजयपराजयजीवितमरणानि विघ्न इति केचित्॥वायुप्रपंचरचनामवे
मानः॥१८॥कुर्वीत पूरके सत्याकृष्टिं कुंभके स्तंभं॥उच्चाटनं च योगी रेचकविज्ञानसामर्थ्यात्॥१९॥इदम
त्रं श्वसनभवं सामर्थ्यं स्यान्मुनेर्ध्रुवं तस्य॥यो नाडिकाविशुद्धिं सम्यक्कर्तुं विजानाति॥२०॥यद्यपि समीरचारं
नतरं योगिभिः सुदुर्लक्ष्यः॥जानाति विगततंद्रस्तथापि नाड्याकृताभ्यासः॥२१॥नाडिकाशुद्धिः॥तद्यथा॥
चिंतयति नाभिकमले सुवंधुरं कर्णिकारूढं॥२२॥रेचयति ततः शीघ्रं पतं ॥९६॥

ग्मार्गेण भासुराकारं॥ज्वालाकलापकलितंस्फुलिंगमालाकराक्रांतं॥२३॥तरलतडिदुग्रवेगंधूमशिखावर्ते
द्ध्दिक्त्रं॥गच्छंतंगगनतलेदुर्द्धर्षंदेवदैत्यानां॥२४॥शारदिंदुधामधवलंगगनतलान्मंदमंदमवतीर्णं॥क्षरदमृ
तमिवसुधांशोः पूरयतिपथापुनःपुरतः॥२५॥आनीयनाभिकमलंनिवेश्यतस्मिन्पुनःपुनश्चैव॥अनलस
मनसाकार्यंप्रवेशनिःक्रमणमनवरतं॥२६॥अथनाभिपुंडरीकाच्छनैश्शनैर्हृदयकमलनालेन॥निःसारयति
समीरंपुनःप्रवेशयतिसोद्योगं॥२७॥नाडीशुद्धिंकुरुतेदहनपुरंदिनकरस्यमार्गेण॥निःक्रामद्विशदिंदोःपुर
मितरेणातिकेप्याकु॥२८॥इतिनाडिकाविशुद्धौपरिकलिताभ्यासकौशलोयोगी॥आत्मेच्छयैवघटयतिपुटयो
पवनंक्षणार्द्धेन॥२९॥एकस्यामयमास्तेकालंनाडीयुगद्वयंसार्द्धं॥तामुत्सृज्यततोन्यामधितिष्ठतिनाडिकामनिलः॥

३४॥षोडशप्रमितकेश्चिन्निर्णीतोवायुसंक्रमः॥अहोरात्रमितेकालेद्वयोर्नाड्योर्यथाक्रमं॥३५॥षट्शताभ्यधिका
न्याहुःसहस्राण्येकविंशतिः॥अहोरात्रेनरिस्वस्थेप्राणवायोर्गमागमः॥३६॥संक्रांतिमपिनोवेत्तियःसमीरस्यमु
ग्धधीः॥सतत्त्वनिर्णयंकर्तुंप्रवृत्तःकिंनलज्जते॥३७॥अथकौतूहलहेतोःकरोतिवेधंसमाधिसामर्थ्यात्॥सम्य
तपवनःशनैःशनैरर्कतूलेषु॥३८॥तत्रकृतनिश्चयोसौजातीवकुलादिगंधद्रव्येषु॥स्थिरलक्ष्यतयाशश्व
धंवितंज्ञात्वा॥३९॥कर्पूरकुंकुमागुरुमलयजकुष्ठादिगंधद्रव्येषु॥वरुणपवनेनवेधंकरोतिलक्ष्येकृताभ्यास
ढ्ये॥एतेषुलब्धलक्ष्यस्ततोतिसूक्ष्मेषुपत्रिकायेषु॥वेधंकरोतिवायुःप्रपंचयोजनचतुरः॥४०॥मधुकरपतंगप
त्रिषुतथांडजेष्वेषुमृगशरीरेषु॥संचरतिजातलक्ष्यस्त्वनन्यचित्तोवशीधीरः॥४१॥नरतुरगकरिशरीरेक्रमे

चरति निःसरत्येव॥ सुप्तोपलक्ष्यरूपेषु च यदृच्छया संक्रमं कुर्यात्॥ ४९॥ इति परपुरप्रवेशाभ्यासोत्थसमाधिसामर्थ्या

त्‌॥ विचरति यदृच्छया सौ मुक्त इवात्यंतनिर्लेप॥ ५०॥ अथ कौतुकमात्रफलोयं परपुरप्रवेशो महाप्रयासेन॥ सि

ध्यति न वा कथंचिन्महतामपि कालयोगेन॥ ५१॥ स्मरगरलमनोविजयं समस्तरोगक्षयं वपुःस्थैर्यं॥ पवनप्रचारच

तुरः करोति योगी न संदेह॥ ५२॥ जन्मशतजनितमुग्रं प्राणायामाद्विलीयते पापं॥ नाडीयुगलस्यांते यतेर्जिताक्ष

स्य धीरस्य॥ ५३॥ उक्तं च॥ जलबिंदुकुशाग्रेण मासे मासे तु यः पिबेत्॥ संवत्सरशतं साग्रं प्राणायामश्च तत्सम॥ ५४॥ ॥

॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे प्राणायामप्रकरणं॥ ॥ छ॥ समाकृष्येंद्रियार्थेभ्यः

साक्षं चेतः प्रशांतधीः॥ यत्र यत्रेच्छया धत्ते प्रत्याहारः स उच्यते॥ १॥ निःसंगः संवृतस्वांतः कूर्मवत्संवृतेंद्रियः॥ यमीसम

त्वमापन्नोध्यानतंत्रेस्थिरीभवेत्॥२॥किंच॥गोचरेभ्योहृषीकाणितेभ्यश्चित्तमनाकुलं॥पृथक्कृत्यवशीधत्ते
ललाटेत्यंतनिश्चलं॥३॥सम्यक्समाधिसिद्ध्यर्थंप्रत्याहारःप्रशस्यते॥प्राणायामेनविक्षिप्तंमनःस्वास्थ्यंन
दति॥४॥प्रत्याहृतंपुनःस्वस्थंसर्वोपाधिविवर्जितं॥चेतःसमत्वमापन्नंस्वस्मिन्नेवलयंव्रजेत्॥५॥वायोःसं
तुर्यमणिमाद्यंगसाधनं॥प्रायःप्रत्यूहबीजंस्यान्मुनेर्मुक्तिमभीप्सतः॥६॥किमनेनप्रपंचेनवीतरागस्ययो
न॥वशीकृताक्षवर्गस्यप्राणायामोनशस्यते॥७॥प्राणस्यायमनेपीडातस्यांस्यादार्त्तसंभवः॥तेनप्रच्याव्यते
नंज्ञाततत्त्वोपिलक्षतः॥८॥पूरणेकुंभकेचैवतथाश्वसननिर्गमे॥व्यग्रीभवंतिचेतांसिक्लिश्यमानानिवायु
भिः॥९॥किंच॥नातिरिक्तंफलंसूत्रेप्राणायामात्प्रकीर्तितं॥अतस्तदर्थमस्माभिर्नातिरिक्तंकृतःश्रमः॥१०॥निरु 
॥स्वसंदेहार्त्तजन्मना॥सुविचार्यैवतद्ग्रेयंयन्मुक्तेबीजमग्रिमं॥७॥संविग्नस्यप्रशांतस्य॥

ध्यकरणग्रामंसमत्वमवलंब्यच॥ललाटदेशसंलीनंविदध्यान्निश्चलंमनः॥१२॥अथवा॥नेत्रद्वंद्वेश्रवणयुगले
नासिकाग्रेललाटेवक्त्रेनाभौशिरसिहृदयेतालुनिभ्रूयुगांते॥ध्यानस्थानान्यमलमतिभिःकीर्तितान्यत्रदेहे
ष्वेकस्मिन्विगतविषयंचित्तमालंबनीयं॥१३॥स्थानेष्वेतेषुविश्रांतंमुनेर्लक्ष्यंवितन्वतः॥उत्पद्यंतेस्वसंवित्तेर्ब
हवोध्यानप्रत्ययाः॥१४॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपाधिकारेप्रत्याहारधारणाप्रकरणम्
॥छ॥अनंतगुणराजीवबंधुरप्यत्रवंचितः॥अहोभवमहाकक्षेप्रागहंकर्मवैरिभिः॥१॥स्वविभ्रमसमुद्भूतैरगाढ
तुलबंधनैः॥बद्धोविडंबितःकालमनंतंजन्मदुर्गमे॥२॥अद्यरागज्वरोनष्टोमोहनिद्राविनिर्गता॥ततःकर्मरिपुंह
न्मिध्याननिस्त्रिंशधारया॥३॥आत्मानमेवपश्यामिनिर्द्धूयाज्ञानजंतमः॥क्षोभयामितथाप्युग्रंकर्मेंधनसमुत्क
॥४॥

बलध्यानवज्रेणदुरितद्रुमसंक्षयं॥तथाकुर्मोयथादत्तेनपुनर्भवसंभवं॥५॥जन्मज्वरसमुद्भूतमहामूर्छा
प्लुषा॥चविज्ञानोद्भवःसाक्षात्मोक्षमार्गोनवीक्षितः॥६॥मयात्मापिनविज्ञातोविश्वलोकैकलोचनः॥अवि
विषमग्राहदंतचर्वितचेतसा॥७॥परमात्मापरंज्योतिर्जगज्ज्येष्ठोपिवंचितः॥आपातमात्ररम्यैस्तैर्विषयैरंतनीर
सैः॥८॥अहंचपरमात्माचद्वावेतौज्ञानलोचनौ अतस्तंज्ञातुमिच्छामितत्स्वरूपोपलब्धये॥१०॥ममप्रात्यागुण
ग्रामोव्यक्त्याचपरमेष्ठिनः॥१०॥तावानावयोर्भेदःप्राक्तिव्यक्तिस्वभावतः॥११॥नर्तकंच॥नासत्पूर्वाश्चपूर्वानोनिर्वि
शेषविकारजाः॥स्वाभाविकविशेषाढ्याभूतपूर्वास्ततद्गुणाः॥१२॥तावन्मांपीडयत्येवमहादाहोद्भवोद्भवः॥
नसुधांभोधेर्नावगाहःप्रवर्तते॥१३॥अहंननारकोनामनतिर्यग्वापिमानुषः॥नदेवःकिंतुसिद्धात्मासर्वोयं

जः क्रमः॥३॥ अनंतवीर्यविज्ञानदृगानंदात्मकोप्यहं॥ किंन प्रोन्मूलयाम्यद्य प्रतिपक्षविषद्रुमं॥४॥ अद्य साध्य
स्वसामर्थ्यं प्रविश्यानंदमंदिरं॥ नस्वस्वरूपाच्च्यविष्येहं वाह्यार्थेषु गतस्पृहः॥५॥ मयाद्यैव विनिश्चेयं स्वस्वरूपं हि वस्तु
तः॥ छित्वाप्यनादिसंभूतामविद्यां वैरिवागुरां॥६॥ इति प्रतिज्ञां प्रतिपद्य धीरः समस्तरागादिकलंकमुक्तः॥ आलंव्य
ते धर्ममचंचलात्मा॥ शुक्लं च यद्यस्ति वलं विशालं॥७॥ प्रतिज्ञा॥ ध्येयं वस्तु वदंति निर्मलधियस्तच्चेतनाचेतनं
स्थित्युत्पत्तिविनाशलक्षणयुतं मूर्तेतरं च क्रमात्॥ शुद्धध्यानविशीर्णकर्मकवचो देवश्च मुक्तेर्वरः सर्वज्ञः सक
लः शिवः स भगवान्सिद्धः परो निःकलः॥८॥ अमी जीवादयो भावाश्चिदचिल्लक्ष्मलांछिताः॥ तत्स्वरूपाविरोधे
न ध्येया धर्मे मनीषिभिः॥९॥ ध्याने ह्युपरते धीमान्मनः कुर्यात्समाहितं॥ निर्वेदपदमापन्नं मग्नं वा करुणांबुधौ॥१०॥

अथलोकत्रयीनाथममूर्त्तंपरमेश्वरं॥ध्यातुंप्रक्रमतेसाक्षात्परमात्मानमव्ययम्॥२१॥एकंचत्रिकालविषयं
साक्षाच्छक्तिव्यक्तिविवक्षया॥सामान्येननयेनैकंपरमात्मानमामनेत्॥२२॥साकारंनिर्गताकारंनिष्कलंप
क्षरं॥निर्विकल्पंचनिःकंपंनित्यमानंदमंदिरं॥२३॥विश्वरूपमविज्ञातस्वरूपंसर्वदोदितं कृतकृत्यंशिवंशांतं
निःकलंकरणच्युतं॥२४॥निःशेषभवसंभूतक्लेशद्रुमहुताशनं॥शुद्धमत्यंतनिर्लेपंज्ञानराज्येप्रतिष्ठितं॥२५॥
विशुद्धादर्शसंक्रांतंप्रतिबिंबसमप्रभं॥ज्योतिर्मयंमहावीर्यंपरिपूर्णंपुरातनं॥२६॥विशुद्धाष्टगुणोपेतंनि
र्गतामयं॥अप्रमेयंपरिच्छिन्नंविश्वतत्वव्यवस्थितं॥२७॥यदग्राह्यंबहिर्भावैर्ग्राह्यंचांतर्मुखैःक्षणात्॥तत्स्वभा
त्मकंसाक्षात्स्वरूपंपरमात्मनः॥२८॥अणोरपिचयःसूक्ष्मोमहानाकाशतोपिच॥जगद्वंद्यःससिद्धात्मानिष्प

त्यंत निर्वृतः॥२९॥ यस्यानुध्यानमात्रेण प्रीयंते जन्मजारुजाः॥ नान्यथा जन्मिनां सोयं जगतां प्रभुरच्युतः॥३०॥ वि
ज्ञातमपि निःशेषं यदज्ञानादपार्थकं॥ यस्मिन्नविदिते विश्वं ज्ञातमेव न संशयः॥३१॥ यत्स्वरूपापरिज्ञानान्नात्म
तत्त्वे स्थितिर्भवेत्॥ यं ज्ञात्वा मुनिभिः साक्षात्प्राप्तं तस्यैव वैभवं॥३२॥ स एव नियतं ध्येयः स विज्ञेयो मुमुक्षुभिः॥
अनन्यशरणीभूय तद्गतेनांतरात्मना॥३३॥ अवाग्गोचरमव्यक्तमनंतं शब्दवर्जितं॥ अजं जन्मभ्रमातीतं नि
र्विकल्पं विचिंतयेत्॥३४॥ यद्बोधानंतभागेपि द्रव्यपर्यायसंभृतं॥ लोकालोकं स्थितिं धत्ते स स्याल्लोकत्रयी
गुरुः॥३५॥ तत्स्वरूपाहितस्वांतस्तद्गुणग्रामरंजितः॥ योजयत्यात्मनात्मानं तस्मिंस्तद्रूपसिद्धये॥३६॥ इत्यजस्र
स्मरन्योगी तत्स्वरूपावलंबितः॥ तन्मयत्वमवाप्नोति ग्राह्यग्राहकवर्जितं॥३७॥ अनन्यशरणीभूय स तस्मि

द्धीयते तथा॥ ध्यातृध्यानोभयाभावे ध्येयेनैक्यं यथा व्रजेत्॥३७॥ सोयं समरसीभावस्तदेकीकरणं स्मृतं॥ अ
त्वेन यत्रात्मा लीयते परमात्मनि॥३८॥ अनन्यशरणस्तद्धि तत्संलीनैकमानसः॥ तद्गुणस्तत्स्वभावात्मा त
त्स्याच्च स एव मनः॥४०॥ उक्तं च॥ कटस्य कर्ताहमिति संबंधः स्याद्द्वयोर्द्वयो॥ ध्यानं ध्येयं यदात्मैव संबंधः क
प्रस्तदा॥४१॥ यद्ज्ञानाज्जन्मी भ्रमति नियतं जन्मगहनं विदित्वा यं सद्यस्त्रिदशगुरुतां याति गुरुतां॥ स विज्ञेय
मोक्षात्सकलभुवनानंदनिलयः परंज्योतिस्त्राता परमपुरुषोऽचिंत्यचरितः॥४२॥ इत्थं यत्रानवच्छिन्नभाव
निर्भवच्युतं॥ भावयत्यनिशं ध्यानी तत्सवीर्यं प्रकीर्तितं॥४३॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्ण
वे योगप्रदीपाधिकारे सवीर्यध्यानप्रकरणम्॥३७॥ अज्ञातस्वस्वरूपेण परमात्मा न बुध्यते॥ आत्मैव प्राग्विनिश्चेयो वि

न पुरुषैः परं॥१॥ किंच॥ आत्मतत्त्वानभिज्ञस्य न स्यादात्मन्यवस्थितिः॥ मुह्यत्यतः पृथक्कर्तुं स्वरूपं देहदेहिनोः॥२॥ सत
योर्भेदापरिज्ञानान्नात्मलाभः प्रजायते॥ तदभावात्स्वविज्ञानसूतिः स्वप्नेपि दुर्घटा॥३॥ अतः प्रागेव निश्चेयः सम्य
गात्मा मुमुक्षुभिः॥ अशेषपरपर्यायः कल्पनाजालवर्जितः॥४॥ तथाहि॥ त्रिःप्रकारः संभूतेषु सर्वेष्वात्मा व्यव
स्थितः॥ बहिरंतः परश्चेति विकल्पैर्वक्ष्यमाणकैः॥५॥ आत्मबुद्धिः शरीरादौ यस्यात्मन्यात्मनिश्चयः॥ सोंतरात्मा म
तस्तज्ज्ञैर्विभ्रमध्वांतभास्करैः॥६॥ निर्लेपो निःकलः शुद्धो (सिद्ध) निःष्पन्नो (सौख्यमयः) त्यंतनिर्वृतः॥ निर्विकल्पश्च शुद्धात्मा परमात्मे
ति वर्णितः॥७॥ कथं तर्हि पृथक्कृत्वा देहाद्यर्थकदंबकात्॥ आत्मानमभ्यसेद्योगी निर्विकल्पमतींद्रियं॥८॥ अपा
स्य बहिरात्मानं सुस्थिरेणांतरात्मना॥ ध्यायेद्विशुद्धमत्यंतं परमात्मानमव्ययं॥१०॥ तद्यथा॥ संयोजयति देहेन (सह)
॥यस्य स्यादात्मविभ्रमात्॥ बहिरात्मा स विज्ञेयो मोहनिद्रास्तचेतनः॥९॥ त्रुटि ४॥

शरीरात् आत्मानं
चिदात्मानं विमूढधीः॥ बहिरात्मा ततो ज्ञानी पृथक् पश्यति देहिनां॥११॥अक्षद्वारैरविश्रांतं स्वतत्वविमुखैर्भृशं
वेष्टित
तो बहिरात्मायं वपुरात्मेति मन्यते॥१२॥सुरं त्रिदशपर्यायैर्नृपर्यायैस्तथा नरं॥ तिर्यंचं च तदंगे स्वं न
आत्मस्वरूप
गेंचनारकं॥१३॥वेत्त्यविद्यापरिश्रांतो मूढस्तन्न पुनस्तथा॥ किंत्वमूर्तं स्वसंवेद्यं तद्रूपं परिकीर्तितं॥१४॥स्वशरीर
मिवान्विष्य परांगं च्युतचेतनं॥ परमात्मानमज्ञानी परबुद्ध्याध्यवस्यति॥१५॥स्वात्मेतरविकल्पैस्तैः शरीरेष्वबला
तं प्रवृत्तैर्वंचितं विश्वमनात्मन्यात्मदर्शिभिः॥१६॥ततः सोऽत्यंतभिन्नेषु पशुपुत्रांगनादिषु॥ आत्मत्वं
व्यापित आत्मत्व
दविद्याज्वरजिह्मितः॥१७॥साक्षात्स्वामेव निश्चित्य पदार्थांश्चेतनेतरान्॥ स्वस्यैव मन्यते मूढस्तन्नाशे
विषमग्रहेण
दिकं॥१८॥अनादिप्रभवः सोऽयमविद्याविषमग्रहः॥ शरीरादीनि पश्यंति येन स्वमिति देहिनः॥१९॥ध्रुव

रचयति आत्मान

विज्ञानं वपुषा घटयत्ययमात्मा स्वस्मिन्नात्मेति बोधस्तु निनत्यं गाच्छरीरिणाम् ॥२०॥ वपुष्यात्ममतिः सूते बंधुवि

पुद्गलेन

त्तादिकल्पनां स्वस्य संकल्पमेतेन मन्वानं मुषितं जगत् ॥२१॥ तेन चात्मेति यो भावः स स्याद्बीजं भवस्थिते ॥ बहिर्वी

ताक्षविक्षेपस्त्यक्त्वांतर्विशेत्तत ॥२२॥ अक्षद्वारैः स्वतश्च्युत्वां निमग्नो गोचरेष्वहं ॥ तानासाद्याहमित्येतन्न वि

सम्यगवेदिषं ॥२३॥ बाह्यात्मानमपास्यैवमंतरात्मा ततस्त्यजेत् ॥ प्रकाशयत्ययं योगः स्वरूपं परमेष्ठिनः ॥२४॥ ॥

यद्यद्दृश्यमिदं रूपं तत्तदन्यन्न चान्यथा ॥ ज्ञानवच्चव्यतीताक्षं मतः केनात्र वच्म्यहं ॥२५॥ यज्ज्ञैरपि बोध्योऽहं य

आत्मन

ज्जनान्बोधयाम्यहं ॥ तद्विभ्रमपदं यस्मादहं विध्वस्तकल्पनः ॥२६॥ यः स्वमेवं समादत्ते नादत्ते यः स्वतोऽपरं ॥ निर्विकल्पः

संविज्ञानी स्वसंवेद्योऽस्मि केवलः ॥२७॥ अज्ञातसर्पमतेर्यद्वच्छृंखलायां क्रियाभ्रमः ॥ तथैवमे क्रियापूर्वास्तत्वादौ स्वं

नपुंसक

तिभ्रमात्तारणाश्रृंखलायां यथा वृत्तिर्विचेष्टे भुजगभ्रमो तत्त्वादौ मे तथा वृत्तिर्नष्टात्मविभ्रमस्य वै ॥२१॥ एतदे
मि पुरुष १ २
षेष एकं द्वे बहूनीति धियः पदं ॥ नाहं यच्चात्मनात्मानं वेद्म्यात्मनि तदस्म्यहं ॥२२॥ यदबोधे मया सुप्तं यद्बोधे
हं स्थितं ॥ तद्रूपमयमत्यक्षं स्वसंवेद्यमहं किल ॥२३॥ ज्योतिर्मयं ममात्मानं पश्यतो त्रैव यांत्यमी ॥ क्षयं रागाद
यस्तेन नारिः कोपि प्रियो न मे ॥२४॥ अदृष्टमत्स्वरूपोयं जनो नारिर्न मे प्रियः ॥ साक्षात्सुदृष्टरूपोपि जनो नारिः
सुहृन्न मे ॥२५॥ इतः प्रभृति निःशेषं पूर्वं पूर्वं विचेष्टितं ॥ ममाद्य ज्ञाततत्त्वस्य भाति स्वप्नेंद्रजालवत् ॥२६॥ यो
प्रसिद्धात्मा परंज्योतिः सनातनः ॥ सोहं तस्मात्प्रपश्यामि स्वस्मिन्नात्मानमच्युतं ॥२७॥ बाह्यात्मानमपास्य
प्रसन्नेनांतरात्मनि ॥ विधूतकल्पनाजालं परमात्मानमामनेत् ॥२८॥ बंधमोक्षावुभावेतौ भ्रमेतरनिबंधनौ ॥ ॥१०३॥

अभ्यसेत्

धंश्च परसंबंधाद्भेदाभ्यामात्ततः शिवं ॥ ३७ ॥ अलौकिकमहो वृत्तं ज्ञानिनः केन वर्ण्यते ॥ अज्ञानी बध्यते यत्र ज्ञा
नी तत्रैव मुच्यते ॥ ३८ ॥ यज्जन्मगहने खिन्नं प्राज्ञ्या दुःखसंकुले ॥ तदात्मेतरयोर्नूनमभेदेनावधारणात् ॥ ३९ ॥ म आत्मनि
यि सत्यपि विज्ञानप्रदीपे विश्वदर्शिनि ॥ किं निमज्जत्ययं लोको वराको जन्मकर्दमे ॥ ४० ॥ आत्मन्येवात्मनात्मायं
स्वयमेवानुभूयते ॥ अतोन्यत्रैव मां ज्ञातुं प्रयासः कार्यनिष्फलः ॥ ४१ ॥ स एवाहं स एवाहमित्यभ्यस्यन्ननारतं ॥ बहिरात्मा
भावनां
वासनां दृढयत्नेन प्राप्नोत्यात्मन्यवस्थितिं ॥ ४२ ॥ स्याद्यद्यत्प्रीतये ज्ञस्य तत्तदेवापदास्पदं ॥ विभेत्ययं पुनर्य
स्मिंस्तदेवानंदमंदिरं ॥ ४३ ॥ सुसंवृत्तेंद्रियग्रामे प्रसन्ने चांतरात्मनि ॥ क्षणं स्फुरति यत्तत्त्वं तद्रूपं परमेष्ठिनः ॥ ४४ ॥ य
स्मिन्नात्मापरः सोहं यो हं स परमेश्वरः ॥ मदन्यो न मयोपास्यो मदन्येन तु नाप्यहं ॥ ४५ ॥ आकृष्य गोचरव्याघ्रमुख

शरीरात्
दात्मानमात्मना॥ स्वस्मिन्नहं स्थिरीभूतश्चिदानंदमये स्वयं॥४६॥ पृथगिच्छन् नमां वेत्ति यस्तनोर्वीतविभ्रमः॥
वर्द्धितं
कुर्वन्नपि तपस्तीव्रं न समुच्येत बंधनैः॥४७॥ स्वपरांतरविज्ञानसुधास्यंदाभिनंदितः॥ खिद्यते न तपः कुर्वन्नपि
क्लेशैः शरीरजैः॥४८॥ रागादिमलविश्लेषाद्यस्य चित्तं सुनिर्मलं॥ सम्यक्स्वं स हि जानाति नान्यः केनापि हेतु
ना॥४९॥ निर्विकल्पं मनस्तत्त्वं न विकल्पैरभिद्रुतं॥ निर्विकल्पमतः कार्यं सम्यक्तत्त्वप्रसिद्धये॥५०॥ अज्ञानविद्रु
आध्यं ते
तः स्वतत्त्वादपवर्तते॥ विज्ञानवासितं तद्विपश्यत्यंतः परप्रभु॥५१॥ मुनेर्यदि मनो मोहाद्रागाद्यैरभिभूयते॥
नं रागादीन् काये बहिरात्मा शरीरात् बुध्या
तन्नियोज्यात्मनस्तत्त्वे तानेव क्षिपति क्षणात्॥५२॥ यत्राज्ञात्मा रतः काये तस्माद्व्यावर्तितो धिया॥ चिदानं
देरूपे योजितः प्रीतिमुत्सृजेत्॥५३॥ आत्मविभ्रमोद्भवं दुःखं स्वज्ञानेनैव हीयते॥ तपसापि न तच्छेद्यमात्मवि

॥१०४॥

ज्ञानवर्जितैः॥४२॥ रूपायुर्बलविज्ञानादिसंपत्तिं स्वस्य वांछति। बहिरात्माथ विज्ञानी मोक्षात्तेभ्योऽपि विच्युतिं॥
प्राक्त्वाहं मतिमन्यत्र बध्नाति स्वं स्वतश्च्युतः। आत्मन्यात्ममतिं कृत्वान्यस्माज्ज्ञानी विमुच्यते॥४३॥ आत्मानं
वेत्त्यविज्ञानी त्रिलिंगीसंगतं वपुः। सम्यग्वेदी पुनस्तत्त्वं लिंगसंगविवर्जितं॥४४॥ समभ्यस्तं सुविज्ञानं निर्णी
तमपि तत्त्वतः। अनादिविभ्रमात्तत्त्वं प्रस्खलत्येव योगिनः॥४५॥ अचिद्दृश्यमिदं रूपं न चिद्दृश्यं ततो वृथा। म
म रागादयोऽर्थेषु स्वरूपं संश्रयाम्यतः॥४६॥ करोत्यज्ञो ग्रहत्यागौ बहिर्तस्तु तत्त्ववित्। शुद्धात्मा न बहिर्नांत
स्तौ विदध्यात्कथंचन॥४७॥ वाक्कायाभ्यां पृथक्कृत्वा मनसात्मानमभ्यसेत्। वाक्तनुभ्यां प्रकुर्वीत कार्यमन्य
न्न चेतसा॥४८॥ विश्वासानंदयोः स्थानं स्याज्जगदज्ञचेतसां। क्वानंदः क्व च विश्वासः स्वस्मिन्नेवात्मवेदिनां॥४९॥

॥ज्ञानार्णव॥
॥१०५॥

स्वबोधादपरं किंचिन्न स्वांते विभृयाच्चिरं॥ कुर्यात्कार्यवशात्किंचिद्वाक्कायाभ्यामनादृतः॥८३॥ यदक्षविषयं रूपं
मद्रूपात्तद्विलक्षणं॥ आनंदनिर्भरं रूपमंतर्ज्योतिर्मयं मम॥८४॥ अंतर्दुःखं बहिः सौख्यं योगाभ्यासोद्यतात्म
सुप्रतिष्ठितयोगानां विपर्यस्तमिदं पुनः॥८५॥ तद्विज्ञेयं तदाख्येयं तच्छ्राव्यं चिंत्यमेव वा॥ येन भ्रांतिमपास्योच्चै
स्यादात्मन्यात्मनः स्थितिः॥८६॥ विषयेषु न तत्किंचित्स्याद्धितं यच्छरीरिणां॥ तथाप्येषु वकुर्वंति प्रीतिमज्ञा
नयोगिनः॥८७॥ अनाख्यातमिवाख्यातमपि न प्रतिपद्यते॥ आत्मानं जडधीस्तेन वंध्यस्तत्र ममोद्यमः॥८८॥ त
हं यन्मया किंचित्प्रज्ञापयितुमिष्यते॥ योऽहं न सपरग्राह्यस्तन्मुधा बोधनोद्यमः॥८९॥ निरुद्धज्योतिरज्ञो
ऽतोऽन्यत्रैव तुष्यति॥ तुष्यत्यात्मनि विज्ञानी बहिर्विगतविभ्रमः॥९०॥ यावदात्मेच्छया देहे वाक्चित्तवपुषां ॥१०५॥

जन्मतावदमीषांतुभेदज्ञानाद्भवच्युतिः॥७१॥जीर्णेरक्तेघनेध्वस्तेनात्माजीर्णादिकःपटेएवंवपुषिजीर्णादौनां

भाति

पर्वतसम

त्माजीर्णादिकस्तथा॥७२॥चलमप्यचलप्रख्यंजगद्यस्यावभासते॥ज्ञानयोगक्रियाहीनंसएवास्कंदतिशिवं

औदारिक मिश्र कार्मण आत्मा कृतः

आच्छादित — ७अतनुत्रयावृतोदेहीज्योतिर्मयवपुःस्वयं॥नवेत्तियावदात्मानंकतावद्बंधविच्युतिः॥७४॥गलन्मिलदणुव्र — परमाणुसमूह

रचनाविशेषः

तसन्निवेशप्रयात्मकंवपुः॥वेत्तिमूढस्तदात्मानमनाद्युत्पन्नविभ्रमात्॥७५॥मुक्तिरेवमुनेस्तस्ययस्यात्मन्य

चलास्थितिः॥नतस्यास्तिध्रुवंमुक्तिर्नयस्यात्मन्यवस्थितिः॥७६॥दृढःस्थूलःस्थिरोदीर्घोजीर्णःशीर्णोलघु

असंयोजयत = जानीयात — र्गुरुः॥वपुषैवमसंबध्नन्स्वंविद्याद्वेदनात्मकं॥७७॥जनसंसर्गवाक्चित्तपरिस्पंदमनोभ्रमाः॥उत्तरोत्तरबीजा

निज्ञानीजनस्ततस्त्यजेत्॥७८॥नगग्रामादिषुस्वस्यनिवासंवेत्त्यनात्मवित्॥सर्वावस्थासुविज्ञानीत्वस्मि

वृत्तावृत्ते संयमात्

निबंधनं ॥ तदभावात्पुनर्मोक्षो मुमुक्षुस्तत्ततस्त्यजेत् ॥८७॥ प्रागसंयममुत्सृज्य संयमैकतरो भवेत् ॥ ततोपि
विरमेत्प्राप्य सम्यगात्मव्यवस्थितिम् ॥८८॥ जातिलिंगमिति द्वंद्वमंगमासाद्य वर्तते ॥ अंगात्मकश्च संसारस्तस्मा
जातिलिंग अज्ञानी
त्तद्द्वितयं त्यजेत् ॥८९॥ अभेदविद्यथा पंगोर्वेत्ति चक्षुरचक्षुषि ॥ अंगेपि च तथा वेत्ति संयोगाद्दृष्यमात्मनः ॥९०॥
ज्ञानी
भेदविन्न यथा वेत्ति पंगोश्चक्षुरचक्षुषि ॥ ज्ञातात्मानं तथा वेत्ति तं काये दृष्यमात्मनः ॥९१॥ मत्तोन्मत्तादिचेष्टा
अज्ञानी
सु यथाज्ञस्य स्वविभ्रमः ॥ तथा सर्वास्ववस्थासु नैकचित्तत्वदर्शिनः ॥९२॥ देहात्मदृष्टिर्मुच्येत चेज्जागर्ति पठत्यपि
स्वप्नोन्मत्तोपि मुच्येत स्वस्मिन्नुत्पन्ननिश्चयः ॥९३॥ आत्मानं सिद्धमाराध्य प्राप्नोत्यात्मापि सिद्धतां ॥ वर्तिः प्रदी
पमासाद्य यथाभ्येति प्रदीपतां ॥९४॥ आराध्यात्मानमेवात्मा परमात्मत्वमश्नुते ॥ यथा भवति वृक्षः स्वं स्वेनो
प्राप्यते

त्वंज्ञानिहि

रिकल्पयविशुद्धं स्वात्मनात्मानमेव ॥४॥ इति साधारणं ध्येयं ध्यानयोर्द्धर्मशुक्लयोः ॥ विशुद्धिस्वामिभेदेन भेदं
सूत्रे निरूपितः ॥१०५॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे शुद्धोपयोगप्रकर
णम् ॥ छ ॥ अनादिविभ्रमान्मोहादनभ्यासादसद्ग्रहात् ॥ ज्ञातमप्यात्मनस्तत्वं प्रचलत्येव योगिनः ॥१॥ अवि
द्यावासनावेशविशेषविवशात्मना ॥ योज्यमानमपि स्वस्मिन्न चेतः कुरुते रतिं ॥२॥ साक्षात्कर्तुमतः क्षिप्रं वि
श्वतत्वं यथास्थितं ॥ विशुद्धिं चात्मनः शश्वद्वस्तुधर्मे स्थिरीभवेत् ॥३॥ अलक्ष्यं लक्ष्यसंबंधात्स्थूलात्सू
क्ष्मं विचिंतयेत् ॥ सालंबाच्च निरालंबं तत्ववित्तत्वमंजसा ॥४॥ आज्ञापायविपाकानां क्रमशः संस्थितेः तथा
विचयो यः पृथक्तद्धि धर्मध्यानं चतुर्विधं ॥५॥ वस्तुतत्वं स्वसिद्धांतप्रसिद्धं यत्र चिंतयेत् ॥ सर्वज्ञाज्ञाभियोगेन त

१वस्तुतत्वं = उत्पादव्ययध्रौव्यस्वभावं

दाज्ञाविचयो मतः॥६॥ अनंतगुणपर्यायसंयुतं तत्त्रयात्मकं॥ त्रिकालविषयं साक्षाज्जिनाज्ञासिद्धमामनेत्॥७॥ उ

अवलोकयेत्

चं सूक्ष्मं जिनेंद्रवचनं हेतुभिर्यन्न हन्यते॥ आज्ञासिद्धं च तद्ग्राह्यं नान्यथावादिनो जिनाः॥८॥ इति॥ प्रमाणनयनि
क्षेपैर्निर्णीतं तत्त्वमंजसा॥ स्थित्युत्पत्तिव्ययोपेतं चिदचिल्लक्षणं स्मरेत्॥९॥ श्रीमत्सर्वज्ञदेवोक्तं श्रुतज्ञानं च निर्म

अविनश्वरं

लं शब्दार्थनिचितं तत्त्वमत्र चिंत्यमविप्लुतं॥१०॥ श्रुतज्ञानं तद्यथा॥ परिस्फुरति यत्रैतद्विश्वविद्याकदंबकं॥ द्रव्यभा
वन्निदांतद्विशब्दार्थज्योतिरग्रिमं॥११॥ अपारमतिगंभीरं पुण्यतीर्थं पुरातनं॥ पूर्वापरविरोधादिकलंकपरिवर्जितं
१२॥ नयोपनयसंपातगहनं गणिनिःसृतं॥ विचित्रमति चित्रार्थसंकीर्णं विश्वलोचनं॥१३॥ अनेकपदविन्यासै

विस्तारितं रचिते

ः प्रकीर्णकैः प्रसृतं तद्विभात्युच्चैः रत्नाकर इवापरः॥१४॥ मदमत्तोद्धतक्षुद्रशासनाशीविषांतकं॥ दुरंतघन

सूर्यमंडलं १ श्रुतज्ञानं १ श्रुतज्ञानेन

मिथ्यात्वध्वांतघर्मांशुमंडलं ॥१५॥ यत्पवित्रं जगत्यस्मिन्विशुध्यति जगत्त्रयी ॥ येन तद्धिमतां सेव्यं श्रुतज्ञानं चतु
र्विधं ॥१६॥ स्थित्युत्पत्तिव्ययोपेतं तृतीयं योगिलोचनं ॥ नयद्वयसमावेशान्साद्यनादिव्यवस्थितं ॥१७॥ निःशेषनय
वज्र पर्वत
निक्षेपनिकषग्रावसन्निभं ॥ स्याद्वादपविनिर्घातभग्नान्यमतभूधरं ॥१८॥ इत्यादिगुणसंदर्भनिर्भरं भव्यशुद्धिदं ॥ ध्ये
यं तु धीमतां श्रेष्ठाः श्रुतज्ञानमहार्णवं ॥१९॥ अथ जन्मज्वरघातकं त्रिभुवनाधीशैर्यदभ्यर्चितं यत्स्याद्वादमहाध्वजं न
यपुताकीर्णं च यत्संमतं ॥ उत्पादस्थितिभंगलांछनयुता यस्मिन्पदार्थाः स्थिताः तच्छ्रीवीरमुखारविंदगदितं दद्या
पुष्पार्कं च्छ्रुतं वः श्रियं ॥२०॥ वाग्देव्याः कुलमंदिरं बुधजनानंदैकचंद्रोदयं मुक्तेर्मंगलमग्रिमं शिवपथप्रस्थानदिव्यानकं
तत्त्वश्रुन्यस्थितपरमृगा सिंह
तत्त्वाभासकुरंगपंचवदनं भव्या विनेतुं क्षमं तच्छ्रोत्रांजलिभिः पिबंतु गुणिनः सिद्धांतवार्द्धेः पयः ॥२१॥ ये नैते निपत

सर्वज्ञाज्ञां पुरस्कृत्य सम्यगर्थान् विचिंतयेत् ॥ यत्र तद्ध्यानमाम्नातमाज्ञाख्यं योगिपुंगवैः ॥२३॥



वादिगिरयस्तुष्यंतियोगीश्वराभव्यायेनविदंतिनिर्वृत्तिपदंमुंचंतिमोहंबुधाः॥यद्बंधुर्यमिनांयदक्षयसुखस्या
धारभूतंनृणांतल्लोकद्वयशुद्धिदंजिनवचःपुष्याद्विवेकश्रियं॥२२॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयो
गप्रदीपाधिकारेआज्ञाविचयप्रकरणं॥छ॥अपायविचयंध्यानंतद्वदंतिमनीषिणः॥अपायःकर्मणांयत्रसोपा
यःस्मर्यतेबुधैः॥१॥तद्यथा॥श्रीमत्सर्वज्ञनिर्दिष्टंमार्गंरत्नत्रयात्मकं॥अनासाद्यभवारण्येचिरंनष्टाःशरीरिणः॥२॥
मज्जनोन्मज्जनंप्राप्ताश्चद्रजंतिभवसागरे॥वराकाःप्राणिनोप्राप्ययानपात्रंजिनेश्वरं॥३॥महाव्यसनसप्तार्चिःप्रदीप्त
न्मकानने॥भ्रमताद्यमयाप्राप्तंसम्यग्ज्ञानंबुधेस्तटं॥४॥अद्यापियदिनिर्वेदविवेकाग्रेंद्रमस्तकात्॥स्खले
वंजन्मांधःकूपपातोनिवारितः॥५॥अनादिभ्रमसंभूतंकथंनिर्वार्यतेमया॥मिथ्यात्वाविरतिप्रायंकर्मबंधनिबं

घनं दिसोऽहं शुद्धः प्रसिद्धात्मा दृग्बोधविमलेक्षणः ॥ जन्मपंके चिरं खिन्नः खंडमानः स्वकर्मणा ॥ ए(एकतः) कार्मणं

सैन्यमहमेकस्ततोऽन्यतः ॥ स्थातव्यमप्रमत्तेन मयास्मिन्नरिसंकटे ॥ निर्द्धूय कर्मसंघातं प्रबलध्यानवह्निना ॥

आत्मानं कदा स्वं शोधयिष्यामि धातुस्थमिव कांचनं ॥ किमुपेयो ममात्मायं किं वा विज्ञानदर्शने ॥ चरणं चापवर्गाय त्रि

आत्मा भिः सार्द्धं स एव वा ॥१०॥ कोऽहं ममास्रवः कस्मात् कथं बंधः क्व निर्जरा ॥ का मुक्तिः किं विमुक्तस्य स्वरूपं च निगद्यते ॥११॥

जन्मनः प्रतिपक्षस्य मोक्षस्यात्यंतिकं सुखं ॥ अव्याबाधं स्वभावोत्थं केनोपायेन लभ्यते ॥१२॥ मय्येव विदिते साक्षा

द्विज्ञातं भुवनत्रयं ॥ यतोऽहमेव सर्वज्ञः सर्वदर्शी निरंजनः ॥१३॥ उक्तं च ॥ एको (आत्मा) भावः सर्वभावः (पदार्थाः) स्वभावः सर्वे भावा ए

कभावस्वभावाः ॥ एको भावस्तत्त्वतो येन बुद्धः सर्वे भावास्तत्त्वतस्तेन बुद्धाः ॥१४॥ यावद्यावच्च संबंधो मम स्याद्बाह्यवस्तु

एकस्मिन्नात्मनि प्रतिबिंबिता.

निः॥तावत्तावत्सदास्वस्मिन्स्थितिःस्वप्नेपिदुर्घटा॥१५॥तथैवैतेनुभूयंतेपदार्थाःसूत्रसूचिताः॥अतोमार्गेत्रल
ग्नोहंप्राप्तोएवशिवास्पदं॥१६॥इत्युपायोविनिश्चेयोमार्गश्च्यवनलक्षणः॥कर्मणांचयथापायउपायश्चात्मसि
१७॥इतिनयशतलीलालंबीनिर्धूतदोषंच्युतसकलकलंकैःकीर्तितंध्यानमेतत्॥अविरतमनुपूर्वंध्या
प्रमादंस्फुरतिहृदिविशुद्धज्ञानभास्वत्प्रकाशं॥१८॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञानार्णवेयोगप्रदीपा
अपायविचयप्रकरणम्॥छ॥सविपाकइतिज्ञेयोयःस्वकर्मफलोदयः॥प्रतिक्षणसमुद्भूतश्चित्ररूपःशरीरिणां॥
१॥कर्मजातंफलंदत्तेविचित्रमिहदेहिनां॥आसाद्यनियतंनामद्रव्यादिकचतुष्टयं॥२॥तद्यथा॥स्रक्शय्यासन
यानवस्त्रवनितावादित्रमित्रांगजात्कर्पूरागुरुचंद्रचंदनवनक्रीडाद्रिसौधध्वजान्॥मातंगाश्व

पदार्थमया
रत्नत्रये
सूर्य
अनवरत
चतुर्थगुणस्थादि
द्रव्यक्षेत्रकालभाव

प्राप्य

भक्ष्यान्नपानानि वांछित्रादीन्युपगम्य वस्तुनिचयान् सौख्यं श्रयंते गिनः ॥ ॥ क्षेत्राणि रमणीयानि सर्वर्तुसुखदानि च

भाला खड्गा छुरा गज

कामभोगास्पदान्युच्चैः प्राप्य सौख्यं निषेव्यते ॥ ॥ प्रासासिक्षुरयंत्रपन्नगगरव्यालानलोग्रग्रहान् शीर्णांगं कृमि

कीच पाषाण बंदिग्रहान् बेडी किल्लक

कीटकंटकरजःक्षाराग्निपंकोपलान् ॥ कारान्दृष्टंखलपुंखकुकांडनिगडक्रूरारिवैरांस्तथा ज्व्याण्याप्य भजंति दुः

खमखिलं जीवा भवाब्धिस्थिताः ॥ ॥ निसर्गात्तिरोद्धाणि भयक्लेशास्पदानि च । दुःखमेवानुवंत्युच्चैः क्षेत्राण्यासा

द्य जंतवः ॥ ॥ अरिष्टोत्पातनिर्मुक्तो वातवर्षातिवर्जितः । शीतोष्णरहितः कालः स्यात्सुखाय शरीरिणां ॥ ॥ वर्षातप

कम्पण

तुषाराद्यैरुत्पातादिसंकुलः । कालः सदेव सत्वानां दुःखानलनिबंधनः ॥ ॥ प्रशमादिसमुद्भूतो भावः सौख्याय दे

हिनां । कर्मगौरवजः सोयं महाव्यसनमंदिरं ॥ ॥ मूलप्रकृतयस्तत्र कर्मणामष्ट कीर्तिताः । ज्ञानावरणपूर्वास्ताज

न्मिनांबंधहेतवः॥१०॥ज्ञानंवृत्तिकरंकर्मपंचभेदंप्रपंचितं॥निरुद्धंयेनजीवानांमतिज्ञानादिपंचकं॥११॥
कर्मदृगावरणासंज्ञकं॥रुध्यतेयेनजंतूनांशश्वद्दिष्टार्थदर्शनं॥१२॥वेदनीयंविदुःप्राज्ञाद्विधाकर्मशरीरिणां॥य
न्मधूल्किष्टतच्छक्तशास्त्रधारासमप्रभं॥१३॥सुरोरगनराधीशसेवितंश्रूयतेसुखं॥सातोदयवशात्प्राणीसंक
रोद्भवं॥१४॥असद्वेद्योदयाज्जीवंशरीरंमानसंद्विधा॥जीवैर्विषह्यतेदुःखंशश्वश्वभ्रादिभूमिषु॥१५॥दृष्टिमोहप्रकोपे
नदृष्टिःसाध्वीविलुप्यते॥तद्विलोपान्निमज्जंतिप्राणिनःश्वभ्रसागरे॥१६॥चारित्रमोहपाकेननांगिभिःप्राप्यतेक्षणं॥
भावशुद्धांस्वसात्कर्तुंचरणंस्वांतशुद्धिदं॥लब्ध्वापियत्प्रमाद्यंतियत्स्वलंत्यथसंयमात्॥सोपिचारित्रमोहस्य
कःपरिकीर्तितः॥१७॥सुरायुराजनककर्मपाकात्संभूयनाकेप्रथितप्रभावैः॥समर्थ्यतेदेहिभिरायुरग्र्यंसुखामृतां

दनलोलचित्तैः॥१९॥ नरायुषः कर्मविपाकयोगान्नरत्वमासाद्य शरीरभाजः। सुखासुखाक्रांतधियो नितांतं नयंति काल
बकुभिः प्रपंचैः॥२०॥ चरस्थिरविकल्पासु तिर्यग्गतिषु जंतुभिः। तिर्यगायुःप्रकोपेन दुःखमेवानुभूयते॥२१॥ नरका
युःप्रकोपेन नरके चिंत्यवेदने। निपतंत्यंगिनस्तूर्णं (शीघ्र) कृतार्तकरुणस्वराः॥२२॥ नामकर्मोदयः साक्षाद्धत्ते चित्राण्यं
नेकधा। नामानि गतिजात्यादिविकल्पानीह देहिनाम्॥२३॥ गोत्राख्यं जंतुजातस्य कर्म दत्ते स्वकं फलं। शस्ताश
स्तेषु गोत्रेषु जन्म निःपाद्य सर्वथा॥२४॥ निरुणद्धि स्वसामर्थ्याद्दानलाभादिपंचकं। विघ्नसंततिविन्यासैर्विघ्नकृ (अंतरायके)
त्कर्म देहिनाम्॥२५॥ मंदवीर्याणि जायंते कर्माण्यतिबलीन्यपि। अपक्वपाचनायोगात्फलानीव वनस्पतेः॥२६॥ अ
पक्वपाकः क्रियतेऽस्ततंद्रैस्तपोभिरुग्रैर्वरशुद्धियुक्तैः। क्रमाद्गुणश्रेणिसमाश्रयेण सुसंवृतांतःकरणैर्मुनींद्रैः॥२७॥

द्रव्याद्युत्कृष्टसामग्रीमासाद्योग्रतपोबलात्॥ कर्माणि घातयंत्युच्चैस्तुर्यध्यानेन योगिनः॥२८॥ विलीनाशेषक
र्माणं स्फुरंतमतिनिर्मलं॥ स्वं ततः पुरुषाकारं स्वांगगर्भगतं स्मरेत्॥२९॥ इति विविधविकल्पं कर्म चित्रस्वरूपं प्रति
समयमुदीर्णं जन्मवर्त्यंगभाजां॥ स्थिरचरविषयाणां भावयन्नस्ततंद्रो दहति दुरितकक्षं संयमी शांतमोहः॥
३०॥ इत्थं कर्मकटुप्रपाककलिताः संसारघोरार्णवे जीवा दुर्गतिदुःखवाडवशिखासंतानसंतापिताः॥ मृ
महोर्मिजालनिचिता मिथ्यात्ववातेरिताः॥ क्लिश्यंते तदिदं स्मरंतु नियतं धन्याः स्वसिद्ध्यर्थिनः॥३१॥ इ
र्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे विपाकविचयप्रकरणं॥ छ॥ अनंतानंतमाकाशं सर्व
सुप्रतिष्ठितं॥ तन्मध्ये यः स्थितो लोकः श्रीमत्सर्वज्ञवर्णितः॥१॥ स्थित्युत्पत्तिव्ययोपेतैः पदार्थैश्चेतनेतरैः॥ सं

(Interlinear glosses: शुक्लध्यानेन; आत्मानं; पापवन; पवने प्रेरिताः; स्वभावे स्थितं)

आकाश आकाशं पतितै

नादिमं सिद्धं कर्तृव्यापारवर्जितं ॥५॥ ऊर्द्ध्वाधोमध्यभागैर्यो बिभर्त्ति भुवनत्रयं ॥ अतः स एव सूत्रज्ञैस्त्रैलोक्याधार

घनोदधि

इष्यते ॥६॥ पर्युपरि संक्रांतैः सर्वतोपि निरंतरैः ॥ त्रिभिर्वायुभिराकीर्णो महावेगैर्महाबलैः ॥७॥ घनाब्धिः प्रथ

पवनानां घनवात धृत्वा

मस्तेषां ततोन्यो घनमारुतः ॥ तनुवातस्तृतीयोंते विज्ञेया वायवः क्रमात् ॥८॥ उद्धृत्य सकलं लोकं स्वशक्त्यै

अंतरहिते पवन स्थूलवादीर्घशरीरा

व व्यवस्थिता ॥ पर्यंतरहिते व्योम्नि मरुतः पांशुविग्रहाः ॥९॥ घनाब्धिवलये लोकस्तद्घनांते व्यवस्थितः ॥ तनुवात

घनोदधि घनवाते

तरे सोपि संचार्कां प्रोस्त्वयं स्थितिः ॥१०॥ अधो वेत्रासनाकारो मध्ये स्यात् झल्लरीनिभः ॥ मृदंगसदृशश्चाग्रे स त्रि

धेति व्यवस्थितः ॥११॥ अस्य प्रमाणमुन्नत्या सप्त सप्त च रज्जवः ॥ सप्तैकापंचैकाच मूलमध्यांतविस्तरे ॥१२॥ तत्राधो

भागमासाद्य संस्थिताः सप्तभूमयः ॥ यासु नारकषंढानां निवासाः संति भीषणाः ॥१३॥ काश्चिद्द्दशनलप्रख्याः कां

श्विच्छीतोष्मसंकुलाः॥तुषारबहुलाःकाश्चिद्भूमयोऽत्यंतभीतिदाः॥११॥उदीर्णानलदीप्तासुनिमग्नोष्मासु
मिषु॥मेरुमात्रोऽप्ययःपिंडः [लोहपिंड] क्षिप्तःसद्योविलीयते॥१२॥शीतभूमिष्वपिप्राप्तोमेरुमात्रोऽपिशीर्यते॥शातधामा
वयःपिंडःप्राप्यभूमिंक्षणांतरे॥१३॥हिंसास्तेयानृताब्रह्मबह्वारंभादिपातकैः॥विशंतिनरकंघोरंप्राणिनो
निर्दयाः॥१४॥मिथ्यात्वाविरतिक्रोधरौद्रध्यानपरायणाः॥पतंतिजंतवःश्वभ्रेकृष्णलेश्यावशंगताः॥१५॥
सिपत्रवनाकीर्णेप्रास्त्रशूलासिसंकुले॥नरकेऽत्यंतदुर्गंधेवसासृक्कृमिकर्दमे॥१६॥श्रिवाश्वव्या [स्यालणी]
मांसाशि [मांसभक्षी] विहगाचिते॥वज्रकंटकसंकीर्णेशूलशाल्मलिदुर्गमे॥१७॥स्वभूय [उत्पद्य] कुष्टिकामध्ये [सरावसंपुटमध्ये] ऊर्ध्वपादाव
धोमुखाः॥ततःपतंतिसाक्रंदंवज्रज्वलनभूतले॥१८॥अयःकंटककीर्णासुउद्धृतलोहाग्निवीथिषु [भूमिषु]॥छिन्नभि

सामस्तेन

विशीर्णांगा उत्पतंति पतंति च ॥१९॥ दुःसहा निःप्रतीकारा ये रोगाः संति केचन ॥ सा कल्पेनैव गात्रेषु नारका-

णां भवंति ते ॥२०॥ अदृष्टपूर्वमालोक्य तमत्यंत रौद्रं भयास्पदं ॥ दिशः सर्वाः समीक्षंते वराकाः शरणार्थिनः ॥२१॥

न तत्र सुजनः कोपि न मित्रं न च बांधवाः ॥ सर्वे ते निर्दयाः पापाः क्रूरा भीमोग्रविग्रहाः ॥२२॥ सर्वं च कुंडसंस्थान-

स्फुलिंगसदृशेक्षणाः ॥ विवर्द्धिताशुभध्यानाः प्रचंडाश्चंडशासनाः ॥२३॥ तत्राक्रंदरवैः सार्द्धं श्रूयते कर्कशः

स्वनाः ॥ दृश्यंते गृध्रगोमायुसर्प्पशार्दूलमंडलाः ॥२४॥ घ्रायंते पूतयो गंधाः स्पृश्यंते वज्रकंटकाः ॥ जलानि

पूतिगंधीनि नद्योस्त्रक्मांसकर्द्दमाः ॥२५॥ चिंतयंति तदा लोकपरोक्षमत्यंतशंकिताः ॥ केयं भूमिः क्व चानीताः के

वयं केन कर्मणा ॥२६॥ ततो विदुर्विभंगात्स्वं पतितं श्वभ्रसागरे ॥ कर्मणात्यंत रौद्रेण हिंसाद्यारंभजन्मना ॥२७॥

॥ज्ञानार्णव॥ ॥११४॥

ततः प्रादुर्भवत्युच्चैः पश्चात्तापोऽतिदुःसहः ॥ दहन्नविरतं चेतो वज्राग्निरिव निर्दयः ॥२८॥ मनुष्यत्वं समासाद्य
केश्चिन्महात्मभिः ॥ अपवर्गाय संविग्नैः कर्म पूज्यमनुष्ठितं ॥२९॥ विषयाशामपाकृत्य विध्याप्य दहनानलं
सावधाने आचरित
प्रमत्तैस्तपश्चीर्णं धन्यैर्जन्मार्तिशांतये ॥३०॥ उपसर्गाग्निपातेऽपि धैर्यमालंब्य चोन्नतैः ॥ तैः कृतं तदनुष्ठानं ये
सिद्धं समीहितं ॥३१॥ प्रमादमदमुत्सृज्य भावशुद्ध्या मनीषिभिः ॥ केनाप्यचिंत्यवृत्तेन स्वर्गमोक्षश्च साधितः
पृ अवगणिताः = शिवाभ्युदयदं मार्गं दिशंतोऽप्यतिवत्सलाः ॥ मयाऽवधीरिताः संतो निर्भर्त्स्य कटुकाक्षरैः ॥३२॥ अतस्मिन्नपि
ष्यत्वे परलोकैकशुद्धिदे ॥ मया तत्संचितं कर्म यज्जातं श्वभ्रसंबलं ॥३३॥ अविद्याक्रांतचित्तेन विषयांधीकृता
नां चरस्थिररांगिसंघातो निर्द्दोषोऽपि हतो मया ॥३५॥ परवित्तामिषासक्तः परस्त्रीसंगलालसः ॥ बहुव्यसनवि

२ नरकसामग्री

कारणाय = प्राय
घेतस्य = शोधनंदंडं

स्तोरोऽध्यानपरायणः॥ ७९॥ यत्स्थितः प्राक्चिरं कालं तस्यैतत्फलमागतं॥ अनंतयातनासारे दुरंते श्वभ्रसाग
रे॥ ७७॥ यन्मया वंचितो लोको वराको मूढमानसः॥ उपायैर्बहुभिर्निंद्यैः स्वाक्षसंतर्पणार्थिना॥ ७८॥ कृतः पर
भवो येषां धनभूस्त्रीकृते मया॥ घाताश्च ते त्र संप्राप्ताः कर्तुं तस्याद्य निःक्रयं॥ ७९॥ ये तदा त्राः शाकपायां मया बल
वता हता॥ ते त्र जाता मृगेंद्रा भा हंतुं मां विविधैर्वधैः॥ ८०॥ मनुष्येपि स्वतंत्रेण यत्कृतं नात्मनो हितं॥ तदद्य किं क
रिष्यामि दैवपौरुषवर्जितः॥ ८१॥ मदांधेनातिपापेन निस्त्रंपो नास्तबुद्धिना॥ विराध्याराध्यसंतानं कृतं कर्मा
ति निंदितं॥ ८२॥ यत्पुरग्रामविंध्येषु मयाक्षिप्तो कृताशनः॥ जलस्थलबिलौकाश्चारिणो जंतवो हताः॥ ८३॥ 
तं तिमम मर्म्माणि स्मर्यमाणान्यनारतं॥ प्राचीनान्यद्य कर्माणि क्रकचानीव निर्दयं॥ ८४॥ किं करोमि क्व गच्छामि

आत्माधीनेन (above मनुष्येपि स्वतंत्रेण)
हितं (above हितं)
निर्दयेन (above निस्त्रंपो)

२ मनुष्यभवे

१ पूर्वोपार्जितानी = 

करवतानीव

२ सागरोपमै

कर्मजाते पुरःस्थिते॥ शरणं किं प्रपद्यामि वराको दैववंचितः॥४५॥ यन्निमेषमपि सोढुं स्मर्तुं श्रोतुं न शक्यते॥ तद्दु
:खमत्र सोढव्यं वार्द्धिमानैः कथं मया॥४६॥ एतान्यदृष्टपूर्वाणि बिलानि च कुलानि च॥ यातनाश्च महाघोरा नारका
(अवलोकिताः) (कर्मणा)
णां मयेक्षिताः॥४७॥ विषज्वलनसंकीर्णं वर्द्धमानं प्रतिक्षणं॥ मममूर्द्धि विनिक्षिप्तं दुःखं दैवेन निर्दयं॥४८॥ न हि
(निमित्ते)
प्रपतैत्रते भृत्या न पुत्राः न च बांधवाः॥ येषां कृते मया कर्म कृतं स्वस्यैव घातकं॥४९॥ न कलत्राणि मित्राणि न पा
(निर्दृश्य = निर्दय)
पे प्रेरको जनः॥ पदमप्येकमायातो मया सार्द्धं गतत्रपः॥५०॥ आश्रयंति यथा वृक्षं फलितं पत्रिणः पुरा॥ फलापा
ये पुनर्यांति तथा ते स्वजना गताः॥५१॥ शुभाशुभानि कर्माणि यांत्येव सहदेहिनिः॥ त्वार्जितानीति यत्प्रोचुः संत ६ कथयंतिस्म
(धर्म)
स्तत्त्यतां गतं॥५२॥ धर्म एव समुद्धर्तुं प्रोक्तो श्वाभ्रसागरात्॥ न स स्वप्नेपि पापेन मया सम्यगुपार्जितः॥५३॥ स

हा यः को ऽपि कस्यापि नाभून्न च भविष्यति ॥ सुखैकं प्राकृतं कर्म सर्वसत्त्वाभिनंदकं ॥ ४४ ॥ तत्कुर्वंत्यधमाः कर्मजिह्वो
पस्थादिदंडिताः ॥ येन श्वभ्रेषु पच्यंते कृतार्तिकरुणास्वनाः ॥ ४५ ॥ चक्षुरुन्मेषमात्रस्य सुखस्यार्थे कृतं मया ॥ तत्त्वा
पं येन संपन्ना अनंता दुःखराशयः ॥ ४६ ॥ याति सार्द्धं ततः पाति [दुखात् रक्षति] करोति नियतं हितं ॥ हंति दुःखं सुखं दत्ते यः [धर्म] स बंधुर्न
पोषितः ॥ ४७ ॥ परिग्रहमहाग्राहसंग्रस्तेनार्तचेतसा ॥ न दृष्टा यमशार्दूलचपेटा जीवनाशिनी ॥ ४८ ॥ पातयित्वा म
हाघोरे मां श्वभ्रे चिंत्यवेदने ॥ क्व गतास्ते ऽधुना पापा मद्वित्तफलभोजिनः ॥ ४९ ॥ इत्यजस्रं सुदुःखार्त्ता विलापमुखरा
नना ॥ शोचंतः पापकर्माणो वसंति नरकालये ॥ ५० ॥ यावंति संति लोमानि [रोमानि] शरीरे देहधारिणः ॥ तावंतो नरके कल्पा
वसंति पिशिताशिनाः ॥ ५१ ॥ इति चिंतानलेनोच्चैर्दह्यमानस्य तैस्तदा ॥ धावंति शरशूलासिकराः क्रोधाग्निदीपिताः ॥ ५२ ॥

७ नारकाः

१३दीरयित्वा=पूर्ववैरं



२ मुशिषु=गात
यति

वैरंपराभवंपापंस्मारयित्वापुरातनं॥निर्भर्त्स्यकटुकालापैःपीडयंत्यतिनिर्दयं॥८३॥उत्पाटयंतिने
त्यस्थिसंचयंदारयंत्युदरंक्रुद्धाःस्फोटयंत्यंत्रमालिकां॥८४॥निःपीडयंतियंत्रेषुदलंतिविषमोपले॥आस्फाल्य
निघर्षंतिकुंभीषुक्वाथयंतिच॥८५॥असह्यदुःखसंतानदानदक्षाःकलिप्रियाः॥तीक्ष्णदंष्ट्राकरालास्याभि
न्नसमप्रभाः॥८६॥क्लिष्टकश्मलेप्योद्धताःपापारौद्रध्यानैकभाविताः॥भवंतिक्षेत्रदोषेणसर्वेतेनारकाःखलाः॥८७॥वै
जतुविकारे
क्रियिकशरीरत्वाद्विक्रियंतेयदृच्छया॥यंत्राग्निश्वापदाकारैस्तेहंतुंचित्रैर्वधैःपरान्॥८८॥नतत्रबांधवःस्वामी
भृत्योगनांगजाः॥अनंतयातनासारेनरकेत्यंतभीषणे॥८९॥तत्रताम्रमयाग्रध्रालोहतुंडाश्चवायसाः॥
भवमर्माणिचंचुभिर्नखरैःखरैः॥९०॥लोहमयःपूतिकुंडेषुवज्रसूचीसमाननाः॥नित्वाचमास्थिमांसानिपिबंत्याह

लोहितं॥११॥बलाद्विदार्य संदंशैर्वदनं क्षिप्यते क्षणात्॥विलीनं प्रज्वलं ताम्रं यैः पीतं मद्यमुद्धतैः॥१२॥परमांसा
नि यैः पापैर्भक्षितान्यत्र निर्दयैः॥स्वमूलपक्वानि मांसानि तेषां खादंति नारकाः॥१३॥यैः प्राक् परकलत्राणि सेवि
तान्यात्मवंचकैः॥योज्यंते प्रज्वलंतीभिः स्त्रीभिस्ते ताम्रजन्मभिः॥१४॥न सौख्यं चक्षुरुन्मेषमात्रमप्युपलभ्यते
नरके नारकैर्दीनैर्हन्यमानैः परस्परं॥१५॥किमत्र बहुनोक्तेन जन्मकोटिशतैरपि॥केनापि शक्यते वक्तुं न दुःखं न
रकोद्भवं॥१६॥विस्मृतं यदि केनापि कारणेन क्षणांतरं॥स्मारयंति तदाभ्येत्य पूर्ववैरं सुराधमाः॥१७॥बुभुक्षा जाय ५ आग
ते त्यर्थं नरके तत्र देहिनां॥यां न शामयितुं (तृप्तयितु) शक्तः पुद्गलप्रचयोऽखिलः॥१८॥तृष्णा भवति या तेषु वाडवाग्निरिवोल्ब ६ उत्कट
णा॥न सा शाम्यति निःशेषैः पीतैरप्यंबुराशिभिः॥१९॥बिंदुमात्रं न तैर्वारि प्राप्यते पातुमातुरैः॥तिलमात्रोपि नाहा

\\\

भ्रमितुं लभ्यते हितैः॥८०॥ तिलादप्यतिसूक्ष्माणि कृतखंडानि निर्दयैः। वपुर्मिलति वेगेन न पुनस्तेषां वि-
शातं॥८१॥ यातना [पीडा] रुक् [रोग] परीरीणं युर्लेपूयाद्दुःखभयादिकं। वर्द्धमानं विनिश्चेयं [ज्ञातव्य] मघोंधःश्वभ्रभूमिषु॥८२॥ मध्यभाग-
स्ततो मध्ये आस्ते सौम्ब्रुझरीनिभः। यत्र [मध्यलोके] द्वीपसमुद्राणां व्यवस्था वलयाकृतिः [गोलाकृति]॥८३॥ जंबूद्वीपादयो द्वीपा लवणोदा-
दयोर्णवाः। स्वयंभुरमणांतास्ते प्रत्येकं द्वीपसागराः॥८४॥ द्विगुणद्विगुणाभोगाः [विस्तारा] प्रावृत्यान्योन्यमास्थिताः [वेष्टनेन]।
भनामानो वलयाकारधारिणः॥८५॥ मानुषोत्तरशैलेंद्रमध्यस्थमतिसुंदरं। नरक्षेत्रं सरिच्छैलसुराचलवि- [हिमवतादि]
तं॥८६॥ तत्रार्यम्लेच्छखंडानि भूरिभेदानि तेषु [नरक्षेत्रेषु] भूमी। आर्यम्लेच्छा नराः संति तत्क्षेत्रजनितैर्गुणैः॥८७॥
नुषोपेतं क्वचिद्व्यंतरसंभृतं। क्वचिन्नागधराकीर्णं नरक्षेत्रं निरंतरं॥८८॥ ततो नभसि तिष्ठंति विमानानि दिवौ- [देवानां] ॥११७॥

१भेदानी

स्वर्गाः

कसां॥चरस्थिरविकल्पानिज्योतिष्काणांयथाक्रमं॥८७॥तदूर्ध्वंसंतिदेवेशाकल्पाःसौधर्मपूर्वकाः॥तेषोडश
च्युतास्वर्गपर्यंतानभसिस्थिताः॥८८॥तपर्युपरिदेवेशानिवासयुगलंक्रमात्॥अच्युतांतंततोप्यूर्ध्वमेकैकं
त्रिदशास्पदं॥८९॥निशादिनविभागोयंनयत्रत्रिदशास्पदे रत्नालोकःस्फुरत्युच्चैःसततंनेत्रसौख्यदः॥९०॥
वर्षातपतुषारादिसमयैःपरिवर्जितः॥सुखदःसर्वदासौम्यस्तत्रकालःप्रवर्तते॥९१॥उत्पातभयसंतापभंगवै
रारिविदूराः॥नहिस्वप्नेपिदृश्यंतेक्रुद्धसत्वाश्चदुर्जनाः॥९२॥तद्भूम्यः॥चंद्रकांतशिलानद्धाःप्रवालदलदंतु
राः॥वज्रेंद्रनीलनिर्माणाविचित्रास्तत्रभूमयः॥९३॥माणिक्यरोचिषांचक्रैःकर्बुरीकृतदिङ्मुखाः॥वाप्यःस
र्णोंबुजछन्नारत्नसोपानराजिताः॥९४॥सरांस्यमलवारीणिहंसकारंडमंडलैः॥वाचालैरुद्धतीर्थानिदिव्य

रात्रदिनभेद · प्रकाशः · कालैः · भयदाः · बद्धाः · दीप्ताना · रचित

७समूहे ७तटानि

नारीजनेनच ॥८९॥ भावः कामदुघाः सर्व्वाः कल्पवृक्षाश्चपादपाः ॥ चिंतारत्नानि रत्नानि स्वर्गलोके स्वभावतः
९०॥ ध्वजचामरछत्रांकैर्विमानैर्वनितासखाः ॥ संचरंति सुराः सारैः सेव्यमानाः सुरेश्वराः ॥९१॥ यक्षकिन्न
रीभिर्मंदारवनवीथिषु ॥ कांताश्लिष्टाभिः सानंदं गीयंते त्रिदशेश्वराः ॥९२॥ क्रीडागिरिनिकुंजेषु पुष्पशय्या
हेषु च ॥ रमंते त्रिदशा यत्र वरस्त्रीवृंदवेष्टिताः ॥९३॥ मंदारचंपकाशोकमालतीरेणुरंजिताः ॥ भ्रमंति यत्र
रुयागंधवाहाः शनैः शनैः ॥९४॥ लीलावनविहारैश्च पुष्पावचयकौतुकैः ॥ जलक्रीडादिविज्ञानैर्विलासा
स्तत्र योषितां ॥९५॥ वीणामादाय रत्यंते कलं गायंति योषितः ॥ ध्वनंति मुरजाधारं दिविदेवांगनाहताः ॥९६॥
किलाः कल्पवृक्षेषु चैत्यागारेषु योषितः ॥ विबोधयंति देवेशान्ललितैर्गीतनिस्वनैः ॥९७॥ नित्योत्सवयुतं

॥११७॥

२ वाप्य. २ वनमध्ये

सर्वाभ्युदयमंदिरं॥सुखसंपद्गुणाधारकैः स्वर्गमुपमीयते॥६॥पंचवर्णमहारत्ननिर्माणाः सप्तभूमिकाः॥प्रासा
दाः पुष्करिण्यश्च ज्ञाला वनांतरे॥७॥प्राकारपरिखावप्रगोपुरोत्तुंगतोरणैः॥चैत्यद्रुमसुरागारैर्नगर्यो रत्नरा
जिता॥८॥इंद्रायुधश्रियं धत्ते यत्र नित्यं नभस्तलं॥हर्म्याग्रलग्नमाणिक्यमयूखैः कर्बुरीकृतं॥९॥सप्तभिस्त्रि
दशानीकैर्विमानैरंगनान्वितैः॥कल्पद्रुमगिरींद्रेषु रमंते विबुधेश्वराः॥१०॥हस्त्यश्वरथपादातवृषान्गंधर्वन
र्तकीम्॥सप्तानीकानि संत्यस्य प्रत्येकं च महत्तरान्॥११॥शृंगारसारसंपूर्णा लावण्यवनदीर्घिकाः॥पीनस्तन
भराक्रांताः पूर्णचंद्रनिभानना॥१२॥विनीताः कामरूपिण्यो महर्द्धिमहिमान्विता॥हावभावविलासाढ्यानि
तंबभरमंथराः॥१३॥अनन्यशृंगारसर्वस्वमेकीकृत्य विनिर्मिताः॥स्वर्गवासिविलासिन्यः संति मूर्ता इव श्रियः॥१४॥

आलिंगनादि

तवादित्रविद्यासुश्रृंगाररसभूमिषु॥परिरंभादिसंगेषुस्त्रीणांदाक्ष्यंस्वभावतः॥१५॥सर्वेविषयवसं

काम देवसमानो — उच्चशरीरा

दिव्यलक्षणलक्षिताः॥अनंगप्रतिमाधीराःप्रसन्नाःप्रांशुविग्रहाः॥१६॥हारकुंडलकेयूरकिरीटांगदभू

प्रभुत्वउत्साह मंत्र ३

ताःमंदारमालतीगंधाअणिमादिगुणान्विताः॥१७॥प्रसन्नामलपूर्णेदुकांताःकांतजनप्रियाः॥प्राक्तित्र

क्रीडा

णोपेताःप्राप्तक्रीलावलंबिनः॥१८॥विज्ञानविनयोद्दामप्रीतिप्रसरसंभृताः॥निसर्गसुभगाःस्वर्गेभवंति

देवा.

दिवौकसः॥१९॥नतत्रदुःखितोदीनोवृद्धोरोगीगुणच्युतः॥विकलांगोगतश्रीकःस्वर्गलोकेविलोक्यते॥२०॥

देवाना निकटवर्ती परिवार

सभापति— भ्यसामानिकामात्यलोकपालप्रकर्णकाः॥मित्राद्यंनिमतस्तेषांपार्श्ववर्त्तीपरिग्रहः॥२१॥बंदिगायकपौ — अतिचतुरस्त्री

अतिमनोज्ञता

श्रीस्वांगरक्षापदातयः॥नटवेत्रिविलासिन्यःसुराणांसेवकोजनः॥२२॥तत्रातिभव्यताधारेविमाने

॥११९॥

मले उपपादशिलागर्भे संभवंति स्वयं सुराः ॥२३॥ सर्वाक्षसुखदे रम्ये नित्योत्सवविराजिते ॥ गीतवादित्रली
लाढ्ये जयजीवस्वनाकुले ॥२४॥ दिव्याकृतिसुसंस्थानाः सप्तधातुविवर्जिताः ॥ कायकांतिपयःपूरैः प्रसा
३ व्यापितदिक्षांतराः धितदिगंतराः ॥२५॥ शरीरसुकुमारांगाः पुण्यलक्षणलक्षिताः ॥ अणिमादिगुणोपेताः ज्ञानविज्ञानपारगा
४ चंद्रबिंबाभा — वात २६॥ मृगांकमूर्तिसंकाशाः शांतदोषाः शुभाशयाः ॥ अचिंत्यमहिमोपेताः भयक्लेशार्त्तिवर्जिताः ॥२७॥ वर्द्धम
पित्तश्लेष्मरहिताः नमहोत्साहा वज्रकाया महाबलाः ॥ अचिंत्यपुण्ययोगेन गृह्णंति वपुरूर्जितं ॥२८॥ सुखामृतमहांभोधेर्म ५ गारिष्ठं वः
ध्याद्दिव्यविनिर्गताः ॥ भवंति त्रिदशाः सद्यः क्षणेन नवयौवनाः ॥२९॥ किंच पुष्पफलाक्रांतैः प्रवालदलदंतुरैः ॥ ६ खचि
७ देवानां तेषां कोकिलवाचालैर्द्रुमैर्जन्म निगद्यते ॥३०॥ गीतवादित्रनिर्घोषैर्जयमंगलपावकैः ॥ विबोध्यंते शुभैः शब्दै

सुखसुप्ताइवस्वयं॥३१॥किंचिन्नूममपाकृत्यवीक्षतेसन्नशनैःशनैः॥यावदाशामुकुःस्निग्धैस्तदाकार्णितलोच
नैः॥३२॥इंद्रजालमथस्वप्नःकिंतुमायाभ्रमोनुकिं॥दृश्यमानमिदंचित्रंनायातिममनिश्चयं॥३३॥इदंरम्या
सेव्यमिदंश्लाघ्यमिदंहितं॥इदंप्रियमिदंभव्यमिदंचित्तप्रसादितं॥३४॥एतत्कंदलितानंदमेतत्कल्याणमं
एतन्नित्योत्सवाकीर्णमेतदत्यंतसुंदरं॥३५॥सर्वर्द्धिमहिमोपेतंमहर्द्धिकसुरार्चितं॥सप्तानीकान्वितंभातित्रि
प्रांङ्गसभाजिरं॥३६॥किंच॥मामेवोद्दिश्यसानंदःप्रवृत्तःकिमयंजनः॥पुण्यमूर्त्तिःप्रियःश्लाघ्योविनीतो
तवत्सलः॥३७॥अत्रैलोक्यनाथसंसेव्यःकोयंदेशःसुखाकरः॥अनंतमहिमाधारोविश्वलोकाभिनंदितः॥३८॥
पुरमतिस्फीतंवनोपवनराजितं॥अभिभूयजगत्कृत्यावलातीवध्वजांशुकैः॥३९॥प्राकलय्यतदाकूतंस

१ देव
१ दिशाः
१ तदाइतिचिंतयति
मनोज्ञ
स्थान
विकशितं
अंगण
अभिकृत्य
४ सप्तसेनास
विस्तीर्ण
अतिक्रम्य
नृत्यतीव
शीला
६ वर्द्धितः
७ तस्यइंद्रस्याभिप्रायं
सभापतय.

वा दिव्यचक्षुषः ॥ नतिपूर्वं प्रवर्त्तंते वक्तुं कालोचितं तदा ॥ प्रमादः क्रियतां देव नतानां स्वेच्छया दृशा ॥ श्रूय
तां च वचोस्माकं पौर्वापर्यप्रकाशकं ॥ १ ॥ तद्यथा ॥ अद्य नाथ वयं धन्याः सफलं चाद्य जीवितं अस्माकं यत्त्व
या स्वर्गः संभवेन पवित्रितः ॥ २ ॥ प्रसीद जय जीव त्वं देव पुण्यस्तवोद्भवः ॥ भव प्रभुः समग्रस्य स्वर्गलोकस्य
संप्रति ॥ ३ ॥ सौधर्मोयं महाकल्पः सर्वामरशतार्चितः ॥ नित्यानंदकल्याणवार्द्धिवर्द्धनचंद्रमाः ॥ ४ ॥ कल्प
सौधर्मनामायमीशानप्रमुखाः सुराः ॥ इहोत्पन्नस्य शक्रस्य कुर्वंति परमोत्सवं ॥ ५ ॥ पाठांतरं ॥ अत्र संकल्पि
ताः कामा नवं नित्यं च यौवनं ॥ अत्राविनश्वरी लक्ष्मीः सुखं चात्र निरंतरं ॥ ६ ॥ स्वर्विमानमिदं रम्यं कामगं कांत
दर्पनं ॥ पादांबुजनता चेयं तव त्रिदशमंडली ॥ ७ ॥ एते दिव्यांगनाकीर्णाश्चंद्रकांतमनोहराः ॥ प्रासादा रत्न

नम्रिभूतं अवसरयोग्य नम्रिभूतानां दृष्ट्या उत्पत्तने त्वं वांछित मनोज्ञ

प्रकाशं

प्यंश्चक्रीडानद्यश्चभूधराः॥४०॥सभाभवनमेतत्तेनतामरश्चाताचितं॥रत्नदीपकृतालोकंपुष्पप्रकरशोभितं॥
४१॥विनीतवेषधारिण्यःकामरूपाश्चस्त्रियः॥तवादेशंप्रतीक्ष्यंतेलास्यलीलारसोत्सुकाः॥४२॥
मिदंचहरिविष्टरं॥एतच्चचामरव्रातमेतेविजयकेतवः॥४३॥एताअग्रमहादेव्योवरस्त्रीवृंदवंदिताः॥तरुणी
गंधीशलावण्यैश्वर्यसंपदः॥४४॥शृंगारजलधेर्वेलाविलासोद्भासितभ्रुवः॥लीलालंकारसंपूर्णास्तवना
॥४५॥सर्वविषयविनिर्माणश्रीरसानोपमास्पदं॥यासांश्लाघ्यमलंस्निग्धपुष्पपाणप्रभवंवपुः॥४६॥अयमै
णोनामदेवदंतीमहामनाः॥४७॥धत्तेगुणाष्टकैश्वर्याद्धियंविश्वातिशायिनी॥४८॥इदंमत्तगजानीकमितोश्वी
वां॥एतेस्वर्णरथास्तुंगावल्गंत्येतेपदातयः॥४९॥एतानिसप्तसैन्यानिपालितान्यमरेश्वरैः॥नमंतितेपदद्वंद्वंवेत्ति

पूदेवानां =

अश्वसमूहं

२ तव

१ कथितेसति

त्तिपूर्वकं ॥४॥ तमग्र्यं स्वर्गसाम्राज्यं दिव्यभूत्योपलक्षितं ॥ पुण्यैस्ते संमुखीभूतं गृहाण प्रणतामरैः ॥५॥ इति वादिनि सु
स्निग्धे सचिवे त्यंतवत्सले ॥ अवधिज्ञानमासाद्य पौर्वापर्यं स बुध्यते ॥६॥ अहो तपः पुराचीर्णं मया न्यजनदुश्चरं
दर्शनज्ञानचारित्रतप
वितीर्णं चाभयं दानं प्राणिनां जीवितार्थिनां ॥७॥ आराधितं मनःशुध्या दृग्बोधादिचतुष्टयं ॥ देवश्च जगतां नाथः
सर्वज्ञः परमेश्वरः ॥८॥ निर्दग्धं विषयारण्यं स्मरवैरी निपातितः ॥ कषायतरवश्छिन्ना रागशत्रुर्नियंत्रितः ॥९॥ स
र्वसत्वप्रभावाय महं येनाद्य दुर्गतेः ॥ उद्धृत्य स्थापितः स्वर्गराज्ये त्रिदशवंदिते ॥१०॥ रागादिदहनज्वाला न प्रशाम्यंति
चारित्र
देहिनां ॥ सद्वृत्तवार्यसंसिक्ताः क्वचिज्जन्मशतैरपि ॥११॥ तन्नात्र सुलभं मन्ये तत्किं कुर्मो धुना वयं ॥ सुराणां स्वर्गलो
के स्मिन् दर्शनस्यैव योग्यता ॥१२॥ अतस्तत्वार्थश्रद्धां मे श्रेयसीं स्वार्थसिद्धये ॥ अर्हद्देवपदद्वंद्वे भक्तिं चात्यंतनिश्च

ला:॥ दृष्ट्वा यान्यत्र प्रतिबिंबानि स्वर्गलोके जिनेशिनां॥ विमानचैत्यवृक्षेषु मेर्वाद्युपवनेषु च॥६७॥ तेषां पूर्व
कृत्वा सद्द्रव्यैः स्वर्गसंभवैः॥ पुष्पचंदननैवेद्यैर्गंधदीपाक्षतोत्करैः॥६८॥ गीतवादित्रनिर्घोषैः स्तुतिस्तोत्रैर्मनो
हरैः॥ स्वर्गैश्वर्यं ग्रहीष्यामि ततस्त्रिदशवंदितं॥६९॥ इति सर्वज्ञदेवस्य कृत्वा पूजामहोत्सवं॥ स्वीकुर्वंति तदा
पट्टबंधादिलक्षणं॥७०॥ तस्मिन्मनोजवैर्यानैर्विचरंतो यदृच्छया॥ वनाद्रिसागरांतेषु दीव्यंति त्रिदिवौकसः
७१ संकल्पानंतरोत्पन्नैर्दिव्यभोगैः समर्पितं॥ सेव्यमानाः सुरानीकैः श्रयंति स्वर्गिणः सुखं॥७२॥ महाप्र
पन्नै महाभूत्योपलक्षिते॥ कालं गतं न जानंति निमग्नाः सौख्यसागरे॥७३॥ क्वचिद्गीतैः क्वचिन्नृत्यैः क्वचिद्वाद्यै
र्मनोहरैः॥ क्वचिद्विलासिनीव्रातक्रीडाशृंगारदर्शनैः॥७४॥ मद्यतूर्यग्रहज्योतिर्भूषाभोजनविग्रहाः॥ स्रग्दी

१ जिनबिंबाना — स्वर्गे — ४ क्रिडयंति — निश्चयानीत — इंद्रादिदेवाः — समूह — माद्यक वस्तु वाद्य — उद्योत आभूषण — पुष्पमाला

१ देवांगना　　१ कल्पवृक्षा　　१ स्वर्गवासिनः

त्रपात्रांगादशधा कल्पपादपाः ॥७५॥ दशांगभोगजैः सौख्यैर्लोल्यमानाः क्वचित्क्वचित् । वसंति स्वर्गिणः स्वर्गे
कल्पनातीतवैभवे ॥७६॥ यत्सुखं नाकिनां (देवानां) स्वर्गे तद्वक्तुं केन पार्यते । स्वभावजमनातंकं (निरोगं) सर्वाक्षप्रीणनक्षमं ॥७७॥
अशेषविषयोद्भूतं दिव्यस्त्रीसंगसंभवं । विनीतजनविज्ञानैर्ज्ञानाद्यैश्वर्यलांछितं ॥७८॥ सौधर्माद्यच्युतांतास्ते
कल्पाः षोडश वर्णिताः । कल्पातीतास्ततो (स्वर्गरहिताः) ज्ञेया देवा वैमानिकाः परे ॥७९॥ अहमिंद्राभिधानास्ते प्रवीचारविवर्जि
ताः । विवर्द्धितशुभध्यानाः शुक्ललेश्यावलंबिनः ॥८०॥ अनुत्तरविमानेषु श्रीजयंतादिपंचसु । संभूय (उत्पद्य) स्वर्गिणश्च्यु (देवा)
त्वा व्रजंति पदमव्ययं ॥८१॥ कल्पेषु च विमानेषु परतः परतोऽधिकाः । सुखलेश्यायुर्विज्ञानप्रभावैः स्वर्गिणः स्वयं
॥८२॥ ततोऽग्रे शाश्वतं धाम जन्मजातंकविच्युतं । ज्ञानिनां यदधिष्ठानं क्षीणनिःशेषकर्मणां ॥८३॥ चिदानंदगुणो

२ त्रिसुख

१ज्ञानपिंडात्मका. १ सिद्धत्वे

ता निष्ठिता र्थो विबंधना॥ यत्र संति स्वयंबुध्यः सिद्धाः सिद्धेः स्वयंवराः॥८४॥ समस्तोयं महालोकः केव॰
नगोचरः केवलज्ञानगोचरः॥ तं व्यस्तं वा समस्तं वा स्वप्राप्त्या चिंतयेद्यतिः॥८५॥ विलीनाशेषकर्माणं
मतिनिर्म्मलं॥ स्वं ततः पुरुषाकारं स्वांगगर्भगतं स्मरेत्॥८६॥ इति निगदितमुच्चैर्लोकसंस्थानमित्थं नियत
मनियतं वा ध्यायतः शुद्धबुद्धेः॥ भवति सततयोगाद्योगिनो निःप्रमादं नियतमनतिदूरे केवलज्ञा
८७॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे संस्थानविचयप्रकरणं॥३८॥ पिंडस्थं च प
स्थं रूपवर्जितं॥ चतुर्द्धा ध्यानमाम्नातं भव्यराजीवभास्करैः॥१॥ पिंडस्थे पंच विज्ञेया
र्णिताः॥ संयमी यास्व संमूढो जन्मपापान्निकृंतति॥२॥ पार्थिवी स्यात्तथाग्नेयी श्वसना वाथ वारुणी॥ तत्व



२आमोन= अमर्याद समदर्शि समीपे कथित पवनाख्या ७अथधारणा ७छेदयति ७धारणासु=दक्ष

१ धारणाः

पवतीचेतिविज्ञेयास्तायथाक्रमं।३।तत्र ध्या॥तिर्यग्लोकसमंयोगीस्मरतिक्षीरसागरं।निःशब्दंशांतकल्लो

क्षीरसागरस्य=निष्पन्नं अमर्यादभूत कमल

मौक्तिकहार= हारनीहारसंनिभं।४।तस्यमध्येसुनिर्माणंसहस्रदलमंबुजं।स्मरत्यमितभादीप्तंद्रुतहेमसमप्रभं।५।अब्ज

रागसमुद्भूतकेसरालीविराजितं।जंबूद्वीपप्रमाणंचचित्तभ्रमररंजकं।६।स्वर्णाचलमयींदिव्यंतत्रस्मरतिक २ कमले

पीतकृत कर्णिकायां

र्णिकां।स्फुरत्पिंगप्रभाजालपिशांगितदिगंतरं।७।शरच्चंद्रनिभंतस्यामुन्नतंहरिविष्टरं।तत्रात्मानंसुखा

सीनंप्रशांतमितिचिंतयेत्।८।रागद्वेषादिनिःशेषकलंकक्षपणक्षमं।उद्युक्तंचभवोद्भूतकर्मसंतानसात ५ छेदने:

६ योगी= ने।९।पार्थिवी॥ततोसौनिश्चलाभ्यासात्कमलंनाभिमंडले।स्मरत्यतिमनोहारिषोडशोन्नतपत्रकं।१०।प्रति

७ स्थित पत्रंसमासीनंस्वरमालाविराजितं।कर्णिकायांमहामंत्रंविस्फुरंतंविचिंतयेत्।११।रेफरुद्धंकलाबिंदुलांछि

७-चतुर्दशस्वरसंयुक्तं=

१ निर्गच्छंति

१ दिशा

तं शून्यमक्षरं॥ लसद्बिंदुच्छटाकोटिकांतिव्याप्तहरिन्मुखं॥१२॥ अर्हं॥ तस्य रेफाद्विनिर्यांतीं शनैर्धूमशिखां
ततः स्फुलिंगसंततिं पश्चाज्ज्वालालीं तदनंतरं॥१३॥ तेन ज्वालाकलापेन वर्द्धमानेन संततं। दहत्यविरतं धीर
कमल
पुंडरीकं हृदि स्थितं॥१४॥ तदष्टकर्मनिर्माणमष्टपत्रमधोमुखं। दहत्येव महामंत्रध्यानोत्थप्रबलानलः॥
१५॥ ततो बहिः शरीरस्य त्रिकोणं वह्निमंडलं। स्मरेज्ज्वालाकलापेन ज्वलंतमिव वाडवं॥१६॥ वह्निबीजसमा
५ मंडलं
मंडल
पर्यंते स्वस्तिकांकितं। ऊर्द्ध्ववायुपुरोद्भूतं निर्द्धूमं कांचनप्रभं॥१७॥ अंतर्द्दहति मंत्रार्च्चिर्बहिर्वह्निपुरं पुरं। ध
धगिति विस्फुरज्ज्वालाप्रचयभासुरं॥१८॥ भस्मभावमसौ नीत्वा शरीरं तच्च पंकजं। दाह्याभावात्स्वयं ॥१२
तिं वह्निः शनैः शनैः॥१९॥ आग्नेयी॥ विमानपथमापूर्य संचरंतं समीरणं। स्मरत्यविरतं योगी महावेगं महाब

७ आकाशं
२ योग

२ जगत्गृहे  १ मेरु  १ मेघसमूहं

चालयंतं सुरानीकं धुन्वंतं त्रिदशाचलां। दारयंतं घनव्रातं क्षोभयंतं महार्णवं॥२१॥ व्रजंतं भुवनाभोगे संचरंतं
दिशा  स्फेटयित्वा
हरिन्मुखे॥ विसर्पंतं जगन्नीडे निर्विशंतं धरातले॥२२॥ उद्धूय तद्रजः शीघ्रं तेन प्रबलवायुना॥ ततः स्थिरीकृ
मेघसमूह
ताभ्यासः समीरं शांतिमानयेत्॥२३॥ मारुती॥ वारुण्यां स हि पुण्यात्मा घनव्रातचितं नभः॥ इंद्रायुधतडि
घने  मेघ
र्ज्जिच्चमत्काराकुलं स्मरेत्॥२४॥ सुधांबुप्रभवैः सांद्रैर्बिंदुभिर्मौक्तिकोज्ज्वलैः॥ वर्षंतं तं स्मरेद्धीरः स्थूलस्थूलै
५ अमृतं = ५ बीजाक्षरं =
र्निरंतरैः॥२५॥ ततोर्द्धेंदुसमं कांतं पुरं वरुणलांछनं॥ ध्यायेत्सुधापयःपूरैः प्लावयंतं नभस्तलं॥२६॥ तेनाचिं  ५ अंबुना
त्यप्रभावेन दिव्यध्यानोत्थितांबुना॥ प्रक्षालयति निःशेषं तद्रजः कायसंभवं॥२७॥ वारुणी॥ सप्तधातुवि
दीप्ति
निर्मुक्तं पूर्णचंद्रामलत्विषं॥ सर्वज्ञकल्पमात्मानं ततः स्मरति शुद्धधीः॥२८॥ मृगेंद्रविष्टरारूढं दिव्यातिश
७ सर्वज्ञसदृशं

यसंयुतं ॥ कल्याणमहिमोपेतं देवदैत्योरगार्चितं ॥२९॥ विलीनाशेषकर्माणं स्फुरंतमतिनिर्मलं ॥ स्वं
:पुरुषाकारं स्वांगगर्भगतं स्मरेत् ॥३०॥ रूपवती ॥ इत्यविरतं स योगी पिंडस्थे जातनिश्चलाभ्यासः
वसुखमनन्यसाध्यं प्राप्नोत्यचिरेण कालेन ॥३१॥ इत्थं यत्रानवद्यं (ध्याने) स्मरति नवसुधासांद्रचंद्रांशुगौरं श्री
ज्ञकल्पं कनकगिरितटे (मेरुशिखरे) वीतविश्वप्रपंचं ॥ आत्मानं निर्विकल्पं त्रिदशगुरुगणैर् (इंद्रसमूहे) प्यचिंत्यप्रभावं तत्विं
ध्यं प्रणीतं जिनसमयमहांभोधिपारं प्रयाते ॥३२॥ विद्यामंडलयंत्रमंत्रकुहक (कंपटिमा) क्रूराभिचारक्रियाः सिं
हाशीविषदैत्यदंतिसरभा (शार्दूलाः) यांत्येव निःसारतां ॥ शाकिन्यो ग्रहराक्षसप्रभृतयो मुंचंत्यसद्वासनामेतं ध्यानध
(योगिन) सं निधिवशाज्ज्ञानोर्यथा कौशिका ॥३३॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे

॥१२

पवित्राणि क्रियते द्रव्यार्थिकपर्यायार्थिक

पिंडस्थध्यानप्रकरणं॥छ॥पदान्यालंब्यपुण्यानियोगिभिर्यद्विधीयते॥तत्पदस्थंमतंध्यानंविचित्रनयपारगैः॥१॥तद्यथा॥ध्यायेदनादिसिद्धांतप्रसिद्धांवर्णमातृकां॥निःशेषशब्दविन्यासजन्मभूमिंजगन्नुतां॥२॥द्विगुणाष्टदलांभोजेनाभिमंडलवर्तिनि॥भ्रमंतीचिंतयेद्ध्यानीप्रतिपत्रंस्वरावलीं॥३॥चतुर्विंशतिपत्राढ्यंहृदिकंजंसकर्णिकं॥तत्रवर्णानिमान्ध्यायेत्संयमीपंचविंशतिं॥४॥ततोवदनराजीवेपत्राष्टकविभूषिते॥परंवर्णाष्टकंध्यायेत्संचरंतंप्रदक्षिणं॥५॥इत्यजस्रंस्मरन्योगीप्रसिद्धांवर्णमातृकां॥श्रुतज्ञानांबुधेःपारंप्रयातिविगतभ्रमः॥६॥उक्तंच॥कमलदलोदरमध्येध्यायद्वर्णाननादिसंसिद्धान्॥नष्टादिविषयेबोधंध्यातासंपद्यतेकालात्॥७॥उक्तंच॥जाप्याज्जयेत्क्षयमरोचकमग्निमांद्यंकुष्टोदरामकसनश्वसनादिरोगान्॥प्राप्नोति

रचना कमले अष्टांगनिमित्तज्ञान

४ कमलं ६

अष्टशवाच्यागरिष्ठां = महत्पुरुषेभ्य·

तिमेवाममहतीं महद्भ्यः पूजां परत्र च गतिं पुरुषोत्तमां तां ॥९॥ अथ मंत्रपदाधीशं सर्वतत्त्वैकनायकं ॥ आदि
मध्यांतभेदेन स्वरव्यंजनसंभवं ॥१०॥ अर्हं ॥ अर्हं ॥ ऊर्द्धाधोरेफसंरुद्धं सकलं बिंदुलांछितं ॥ अनाहतयुतं तत्
त्वं मंत्रराजं प्रचक्षते (कथ्यते) ॥११॥ ॐ ॥१२॥ देवासुरनतं भीमं दुर्बोधध्वांतभास्करं ॥ ध्यायेन्मूर्द्ध(मस्तक)स्थचंद्रांशुकलापाक्रां
तदिङ्मुखं ॥१३॥ अपि च ॥ कनककमलगर्भे कर्णिकायां निषिष्णं (उपविष्ट) विगतमलकलंकं सांद्रचंद्रांशुगौरं ॥ गगन
मनुसरंतं संचरंतं हरित्सु (दिक्षु) स्मर जिनपतिकल्पं मंत्रराजं यतींद्र ॥१४॥ अत्र मतानि ॥ बुद्धः केचिद्वदंति जः केचिद्धरि
श्चिन्महेश्वरः ॥ शिवः सर्वस्तथेशानः सोऽयं वर्णः प्रकीर्तितः ॥१४॥ मंत्रमूर्तिं समादाय देवदेवः स्वयं जिनः
सर्वज्ञः सर्वगः शांतः सोऽयं साक्षाद्व्यवस्थितः ॥१५॥ ज्ञानबीजं जगद्वंद्यं जन्मज्वलनवारि(मेघ)चं पवित्रं मतिमान्

एकबार — २अंकुर=नुद्यते — मोक्षाय — सज्जीकृत

ध्यायेदिदंमंत्रंमहेश्वरं।१६।सकृदुच्चरितंयेनहृदियेनस्थिरीकृतं।तत्वंतेनापवर्गायपाथेयंप्रगुणीकृतं।१७

यदैवेदंमहातत्वंमुनेर्धत्तेहृदिस्थितिं।तदैवजन्मसंतानप्ररोहःप्रविशीर्यते।१८।स्फुरंतंभ्रूलतामध्येवि

शंतंवदनांबुजे।तालुरंध्रेणगच्छंतंस्रवंतममृतांबुभिः।१९।स्फुरंतंनेत्रपत्रेषुकुर्वंतमलिकेस्थितिं। २ ललाटके

भ्रमंतंज्योतिषांचक्रेस्पर्द्धमानंशितांशुना।२०।संचरंतंदिशामास्ये पद्रेण

छलंतंनभस्तले।छेदयंतंकलंकौघंस्फेटयंतंभवभ्रमं।२१।नयंतंपरमंस्थानंयोजयंतंशिवश्रियं।इति

मंत्राधिपंधीरःकुंभकेनविचिंतयेत्।२२।अर्हं।।अनन्यशरणःसाक्षात्तत्संलीनैकमानसः।तथास्मरत्य

सौध्यानीयथास्वप्नेपिनस्खलेत्।२३।इतिमत्वास्थिरीभूतंसर्वावस्थासुसर्वथा।नासाग्रेनिश्चलंधत्तेयदि

वाम्भूलतांतरे॥२४॥ तत्रकैश्चिच्चवर्णादिभेदैस्तत्त्वंप्रकल्पितं॥ मंत्रमंडलमुद्रादिसाधनैरिष्टसिद्धिदं॥२५॥ उक्तंच॥
कारादिहकारांतंरेफमध्यंसबिंदुकं॥ तदेवपरमंतत्त्वंयोजनानिमंतत्त्ववित्॥२६॥ सर्वावयववसंपूर्णं
विच्युतं॥ क्रमेणचिंतयेद्ध्यानीवर्णमात्रंशशिप्रभं॥२७॥ह॥ बिंदुहीनंकलाहीनंरेफद्वितयवर्जितं॥ अन
मापन्नमनुच्चार्यंचचिंतयेत्॥२८॥ अ॥ चंद्ररेखासमंसूक्ष्मंस्फुरंतंभानुभास्वरं॥ अनाहताभिधंदेवंदिव्यरूपं
विचिंतयेत्॥२९॥ अस्मिन्स्थिरीकृताभ्यासाः संतःशांतिसमाश्रिताः॥ अनेनदिव्यपोतेनतीर्त्त्वाजन्मोग्र
३०॥ तदेवचपुनःसूक्ष्मंक्रमाद्बालाग्रसन्निभं॥ ध्यायेदेकाग्रतांप्राप्यकर्तुंचेतःसुनिश्चलं॥३१॥ ततोपिगलितं
षविषयीकृतमानसः॥ अध्यक्षमीक्षतेसाक्षाज्जगज्ज्योतिर्मयंक्षणे॥३२॥ सिध्यंतिसिद्धयःसर्वाअणिमा

रेफकलाबिंदुरहितं

परित्यज्य—

श्रयः॥२३॥ सेवां कुर्वंति दैत्याद्या आज्ञैश्वर्यं च जायते॥ क्रमात्प्रच्याव्य लक्षेभ्यस्ततोऽलक्ष्ये स्थिरं मनः॥ दधतोऽस्य स्फु
रत्यंतर्ज्योतिरत्यक्षमक्षयं॥२४॥ इति लक्षानुसारेणालक्ष्याभावः प्रकीर्तितः॥ तस्मिन् स्थितस्य मन्येऽहं मुनेः सिद्धं
समीहितं॥२५॥ एतत्तत्त्वं शिवाख्यं वा समालंब्य मनीषिणः॥ उत्तीर्णा जन्मकांतारमनंतक्लेशसंकुलं॥२६॥ मंत्रराज
अनाहतं च॥ क्लीं॥ स्मरन् दुःखानलज्वालाप्रशांतेर्नवनीरदं (मेघं) प्रणवं (ॐकार) वाऽन्वयं ज्ञानप्रदीपं पुण्यशासनं॥२७॥ यस्माच्छ
ब्दात्मकं ज्योतिः प्रभूतमति निर्मलं॥ वाच्यवाचकसंबंधस्तेनैव परमेष्ठिनः (ॐकारः)॥२९॥ हृत्कंजकर्णिकालीनं स्वरव्यंजन
वेष्टितं स्फीतं (विस्तीर्णं) अत्यंतदुर्द्धर्षं (दुराधर्ष) देवदैत्येंद्रपूजितं॥३०॥ प्रक्षरन्मूर्द्धसंक्रांतं (गलत्, संक्रमित) चंद्रलेखामृतप्लुतं (संश्लिष्ट) महाप्रभावसंपन्नं क
र्मकक्षहुताशनं (वन)॥३१॥ महातत्त्वं महाबीजं महामंत्रं महत्पदं॥ शरच्चंद्रनिभं ध्यानी कुंभकेन विचिंतयेत्॥३२॥ सांद्र

अर्थशब्द—पंचपरमेष्ठी=

२ हृदयक

१ सुवर्णसमं =

सिंदूरवर्णाभंयदिवाविद्रुमप्रभं।।चिंत्यमानंजगत्सर्वंक्षोभयत्यतिसंगतं।।४२।।जांबूनदनिभंस्तंभेविद्वेषेकज्ज
त्विषं।।ध्येयंवश्यादिकेरक्तंचंद्राभंकर्म्मशातने।।४३।।ॐ।।पंचगुरुनमस्कारलक्षणंमंत्रमूर्जितं।।चिंतयेज्ज
गज्जंतुपवित्रीकरणक्षमं।।४४।।स्फुरद्विमलचंद्राभेदलाष्टकविभूषिते।।कंजेतत्कर्णिकासीनंमंत्रंसप्ताक्षरं
४५।।दिग्दलेषुततोन्येषुविदिक्पत्रेष्वनुक्रमात्।।सिद्धादिषुचतुष्कंचदृष्टिबोधादिकंतथा।।४६।।ॐणमोअ
णंणमोसिद्धाणंणमोआयरियाणं।।णमोउवज्झायाणंणमोलोएसव्वसाहूणं।।अपराजितमंत्रोयं।।दर्शनज्ञा
चारित्रतपांसि।।श्रियमात्यंतिकींप्राप्तायोगिनोयेत्रकेचन।।अमुमेवमहामंत्रंतेसमाराध्यकेवलं।।४७।।प्रभा
स्यंनिःप्रोपंयोगिनामप्यगोचरं।।अनभिज्ञोजनोब्रूतेयःसमन्येनिलार्द्दितः।।४८।।अनेनैवविशुध्यंतिजंतवः

अज्ञानी

७ वातपीडितः =

मंत्रः

पंकिताः ॥ अनेनैव विमुच्यंते भवक्लेशान्मनीषिणः ॥४९॥ अमावेव जगत्यस्मिन् भवव्यसनबांधवः ॥ अमुं विह
यसत्वानां नान्यः कश्चित्कृपाकरः ॥५०॥ पतद्व्यसनपाताले भ्रमत्संसारसागरे ॥ अनेनैव जगत्सर्वमुद्धृत्य विधृतं शि
वे ॥५१॥ कृत्वा पापसहस्राणि हत्वा जंतुशतानि च ॥ अमुं मंत्रं समाराध्य तिर्यंचोपि दिवं गताः ॥५२॥ शतमष्टोत्तरं चास्य
चतुर्थउपवासस्य फलं= विशुद्धा चिंतयेन्मुनिः ॥ भुंजानोपि चतुर्थस्य प्राप्नोत्यविकलं फलं ॥५३॥ स्मर मंत्रपदोद्भूतां महाविद्यां जगन्नुतां ॥ गु
रुपंचकनामोत्थां षोडशाक्षरराजितां ॥५४॥ अर्हत्सिद्धाचार्योपाध्यायसर्वसाधुभ्यो नमः ॥ षोडशाक्षरां विद्यां ॥ अ
स्याः शतद्वयं ध्यानी जपन्नेकाग्रमानसः ॥ अनिच्छन्नप्यवाप्नोति चतुर्थतपसः फलं ॥५५॥ विद्यां षड्वर्णसंभूतामं
जय्यां पुण्यशालिनीं ॥ जपन्प्रागुक्तमभ्येति फलं ध्यानी शतत्रयं ॥५६॥ अरहंत सिद्ध ॥ चतुर्वर्णमयं मंत्रं चतुर्वर्गफ

एकाक्षर= कमले चतुर्दशस्वराणां=

पिंकमात्रं॥ एकपत्रःप्रतिपत्रंतुतस्मिन्नेवनिवेशयेत्॥७२॥ स्वर्णगौरींस्वरोद्भूतांकेशरालींततःस्मरेत्॥ कर्णिकांच
सुधास्यंदबिंदुव्रजविभूषितां॥७३॥ प्रोद्यत्संपूर्णचंद्राभंचंद्रबिंबाच्छनैःशनैः॥ समागच्छत्सुधाबीजंमायावर्णं
चिंतयेत्॥७४॥ विस्फुरंतमतिस्फीतंप्रभामंडलमध्यगं॥ संचरंतंमुखांभोजेतिष्ठंतंकर्णिकोपरि॥७५॥ क्ष्वीं॥ भ्रमंतंप्र
तिपत्रेषुचरंतंवियतिक्षणे॥ छेदयंतंमनोध्वांतंस्रवंतममृतांबुभिः॥७६॥ व्रजंतंतालुरंध्रेणस्फुरंतंभ्रूलतांतरे॥
तिर्मयमिवाचिंत्यप्रभावंभावयेन्मुनिः॥७७॥ वाक्पथातीतमाहात्म्यंदेवदैत्योरगार्चितं॥ विद्यार्णवमहापोतंवि
तत्वप्रदीपकं॥७८॥ अमुमेवंमहामंत्रंभावयन्नत्रसंप्रायः॥ अविद्याव्यालसंभूतंविषवेगंनिरस्यति॥७९॥ इतिध्या
यन्नसौध्यानीतत्संलीनैकमानसः॥ वाङ्मनोमलमुत्सृज्यश्रुतांभोधिंविगाहते॥८०॥ ततोनिरंतराभ्यासान्मासैः

२ धर्मानुरागः — वैराग्य

वर्षपर्यंतं —

षड्भिः स्थिरात्मा यः मुखरंध्राद्विनिर्यांतीं धूमवर्तिं प्रपश्यति ॥८१॥ ततः संवत्सरं यावत्तत्रैवाभ्यासतो यदि । प्रपश्य
ति महाज्वालां निःसरंतीं मुखोदरात् ॥८२॥ ततोतिजातसंवेगो निर्वेदालंबितो वशी । ध्यायन्पश्यत्यविश्रांतं स
र्वज्ञमुखपंकजं ॥८३॥ अथाप्रतिहतानंदप्रीणितात्मा जितश्रमः । श्रीमत्सर्वज्ञदेवं स प्रत्यक्षमिव वीक्षते ॥८४॥ स
र्वातिशयसंपूर्णं दिव्यरूपोपलक्षितं । कल्याणमहिमोपेतं सर्वसत्वाभयप्रदं ॥८५॥ प्रभावलयमध्यस्थं भव्यरा
जीवरंजकं । ज्ञानलीलाधरं धीरं देवदेवं स्वयंभुवं ॥८६॥ ततो विधूततंद्रोसौ [सर्वज्ञे] तस्मिन्संजातनिश्चयः । भवभ्रममप
कृत्य लोकाग्रमधिरोहति ॥८७॥ स्मर सकलसिद्धविद्याप्रधानभूतां प्रसन्नगंभीरां । [चंद्रः] विधुबिंबनिर्गतामिव क्षर
त्सुधार्द्रां महाविद्यां ॥८८॥ अविचलमनसा ध्यायन्ललाटदेशस्थितामिमां देवीं । प्राप्नोति मुनिरजस्रं समस्तक

समूहं =

ललाट =



ल्याणनिकुरंबं॥८॥ अमृतजलधिगर्भान्निःसरंतीं सुदीप्तां मौलिकतलनिषण्णां चंद्रलेखां स्मरत्वं॥ अमृत
प्लाविकीर्णां प्लावयंतीं सुधाभिः परमपदधरित्र्यां धारयंतीं प्रभावं॥९॥ एतां विचिंतयन्नेवं त्तिमितेनांतरात्म
ना॥ जन्मज्वरजयं कृत्वा याति योगी शिवास्पदं॥१०॥ पदसाक्षात्समुद्विग्नो जन्मदावोग्रसंक्रमात्॥ तदास्म
दिमंत्रस्य प्राचीनं वर्णसप्तकं॥११॥ णमो अरहंताणं॥ यदत्र प्रणवं शून्यमनाहतमिति त्रयं॥ एतदेव विदुः प्रा
ज्ञास्त्रैलोक्यतिलकोपमं॥१२॥ नासाग्रदेशसंलीनं कुर्वन्नत्यंतनिश्चलं॥ ध्याता ज्ञानमवाप्नोति प्राप्य पूर्वं गुणा
कं॥१४॥ ॐऽह्रीं॥ ३ क्ष्मं चा॥ शेषेंदुः कुंदधवलां ध्याता देवास्त्रयो विधानेन॥ जनयंति सर्वविषयं बोधं कालेनानं
तानां॥१५॥ प्रणवयुगलस्य युग्मं पार्श्वे मायायुगं विचिंतयति॥ मूर्द्धस्थं हं सपदं कृत्वा व्यक्तं वित्तं ज्ञात्मा॥१६॥

निर्विग्नो ज्ञानं ह्रीं सोऽहं ६ सर्वपदार्थ गोचर ७ निरालस्य =

५मुने·

वेस्तार्थं तेमया किं

ॐ ह्रीँ ॥ ततो ध्यायेन्महाबीजं ह्रीकारं छिन्नमस्तकं ॥ अनाहतयुतं दिव्यं विस्फुरंतं मुखोदरे ॥ ७ ॥ ह्रीं ॥ श्रीवीर
वदनोद्भूतां विद्यां चाचिंत्यविक्रमां ॥ कल्पवल्लीमिवाचिंत्यफलसंपादनक्षमां ॥ ८ ॥ विद्या चा ॐ जोग्गे मग्गे तच्चे
भूए भव्वे भविस्से अरके परके जिणपार्श्वे स्वाहा ॥ ९ ॥ ॐ ह्रीँ श्री अर्हन्नमो ऽर्हतां णं ह्रीं नमः ॥ १० ॥ विद्यां जपतियः
देवमां निरंतरं शांतविस्पंदः [संकल्पविकल्प] ॥ अणिमादिगुणान् लब्ध्वा ध्यानी शास्त्रार्णवं तरति ॥ ११ ॥ त्रिकालविषयं साक्षाज्ज्ञानम
स्योपजायते ॥ विश्वतत्त्वप्रबोधश्च संततभ्यासयोगतः ॥ १२ ॥ शाम्यंति जंतवः क्रूरास्तथान्ये व्यंतरादयः ॥ ध्यान
विध्वंसकर्त्तारो येनंतदुःखप्रपंच्यते ॥ १३ ॥ दिग्दलाष्टकसंपूर्णराजीवे सुप्रतिष्ठितं ॥ स्मरत्यात्मानमत्यंतस्फुरच्छ्रीभ
र्कभास्वरं ॥ प्रणवाद्यस्य मंत्रस्य पूर्वादिषु प्रदक्षिणं ॥ विचिंतयति पत्रेषु वर्णैकैकमनुक्रमात् ॥ पूर्वे णमो अ

स्वीकृत्य= दलं=
रहंताणं॥ अधिकृत्य च्छदं पूर्वं मत्वाशासंमुखं परं॥ स्मरत्यष्टाक्षरं मंत्रं सहस्रैकं शताधिकं॥ ८॥ प्रत्यहं प्रतिप
पुमेहें शाद्यं नुक्रमात्॥ अष्टरात्रं जपेद्योगी प्रसन्नामलमानसः॥ तस्याचिंत्यप्रभावेन क्रूरा शायकलंकि
तां॥ त्यजंति जंतवो दर्प्पं सिंहत्रस्ता इव द्विपा॥ ९॥ अष्टरात्रे व्यतिक्रांते कमलस्यास्य वर्त्तिनः॥ निरूपयति प ३ स्थापयति=
२ पूर्वोक्तान्= त्रेषु वर्णानेतान्ननुक्रमात्॥ १०॥ आलंब्य प्रक्रियामेतां पूर्वं विघ्नौघशांतये॥ पश्चात्सप्ताक्षरं मंत्रं ध्यायेत्प्र २ पूर्वोक्तान्=
इहलोकार्थं
णववर्जितं॥ ११॥ मंत्रः प्रणवपूर्वोयं निःशेषाभीष्टसिद्धिदः॥ ऐहिकानेकधर्म्मार्थं मुक्तयर्थं प्रणवच्युतः॥ १२॥ पूर्वोक्तं=
णमो अरहंताणं॥ स्मर मंत्रपदं चान्यं जन्मसंघातघातकं॥ रागाद्युग्रतमस्तोमप्रध्वंसरविमंडलं॥ १३॥ श्री
वृषभादिवर्द्धमानांतेभ्यो नमः॥ मनः कृत्वा सुनिःकंपं तां विद्यां पापभक्षिणीं॥ स्मर सत्वोपकाराय यां

२ निर्मलता =

ड्रैः प्रकीर्तिता ॥१३॥ ॐ अर्हन्मुखकमलवासिनि पापात्मक्षयंकरि श्रुतज्ञानज्वालासहस्रप्रज्वलिते सरस्वति
मत्पापं हन हन दह दह क्षां क्षीं क्षूं क्षौं क्षः क्षीरवरधवले अमृतसंभवे वं वं हूं हूं स्वाहा ॥१५॥ पापभक्षिणी ॥
चेतः प्रसन्नतां धत्ते पापपंकः प्रलीयते ॥ आविर्भवति विज्ञानं मुनेरस्याः प्रभावतः ॥१६॥ मुनिभिः संजयंत
द्यैर्विद्यावादात्समुद्धृतं ॥ भुक्तिमुक्त्योः परं धाम सिद्धचक्राभिधं स्मर ॥१७॥ तस्य प्रयोजकं शास्त्रं तदाम्नायोप
देशतः ॥ ध्येयं मुनीश्वरैर्जन्ममहाव्यसनशांतये ॥१८॥ सिद्धचक्रं ॥ स्मर मंत्रपदाधीशं मुक्तिमार्गप्रदीपकं ॥
नाभिपंकजसंलीनमवर्णं विश्वतोमुखं ॥१९॥ अ ॥ सिवर्णं मस्तकांभोजे साकारं मुखपंकजे ॥ आकारं कंठ
कंजस्थं स्मरोंकारं हृदि स्थितं ॥२०॥ असिआउसा ॥ सर्वकल्याणबीजानि बीजान्यन्यान्यपि स्मरेत् ॥ यान्यार

ध्यं शिवं प्राप्ता योगिनः शीलसागराः॥२१॥ नमः सर्वसिद्धेभ्यः॥ श्रुतसिंधुसमुद्भूतमन्यद्वा पदमक्षरं॥ त
न्निर्ध्येयं स्यात्पदस्थप्रसिद्धये॥२२॥ एवं समस्तवर्णेषु मंत्रविद्यापदेषु च॥ कार्यः क्रमेण विश्लेषो लक्ष्य — २भिन्नत्व=
सिद्धये॥२३॥ अन्यद्वा यच्छ्रुतस्कंधबीजं निर्वेदकारणं॥ तत्तद्ध्यायन्नसौ ध्यानी नापवर्गपथे स्खलेत्॥२४॥ उक्तं
कथितजीवादिपदार्थविपर्ययाऽभावात्
२जीवापदार्थसमूहं= — च॥ ध्येयं स्याद्वीतरागस्य विश्ववर्त्यर्थसंचयं॥ तद्धर्मव्यत्ययाभावान्माध्यस्थ्यमधितिष्ठति॥२५॥ उक्तं च॥ वीत
रागो भवेद्योगी यत्किंचिदपि चिंतयेत्॥ तदेव ध्यानमाम्नातमतोऽन्ये ग्रंथविस्तराः॥२६॥ वीतरागस्य विज्ञेया ध्यान
६स्वभावविपरीतत — सिद्धिर्ध्रुवं मुनेः॥ क्लेश एव तदर्थं स्याद्रागार्तस्येह देहिनः॥२७॥ निर्मथ्य श्रुतसिंधुं तत्त्वधियः श्रीवीरचं
येन तत्त्वान्येवं समुद्धरंति मुनयो यत्नेन रत्नान्यतः॥ तान्येतानि हृदि स्फुरंति सुभगन्यासानि भव्यात्मनां येवां

५समुद्रात्= तत्त्वानि=

१आत्मानं =

त्यं निःशं विमुक्तिललनासंभोगसंभावनं ॥२७॥ विलीनाशेषकर्माणं स्फुरंतमतिनिर्मलं ॥ स्वं ततः पुरुषाकारं स्व
गगर्भगतं स्मरेत् ॥२८॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे पदस्थध्यानप्रकरणं ॥

समवशरणादिक =

॥छ॥ आर्हंत्यमहिमोपेतं सर्वज्ञं परमेश्वरं ॥ ध्यायेद्देवेंद्रचंद्रार्कसभांतस्थं स्वयंभुवं ॥१॥ सर्वातिशयसंपूर्णं सर्वल
क्षणलक्षितं ॥ सर्वभूतहितं देवं शीलशैलेंद्रशेखरं ॥२॥ सप्तधातुविनिर्मुक्तं मोक्षलक्ष्मीकटाक्षितं ॥ अनंतम

मुनिभि सेवितं त्रैलोक्य

हिमाधारं सयोगीपरमेश्वरं ॥३॥ अचिंत्यचरितं चारुचारित्रैः समुपासितं ॥ विचित्रनयनिर्णीतविश्वं विश्वैकबांधवं

मघ

॥४॥ निरुद्धकरणग्रामं निषिद्धविषयद्विषं ॥ ध्वस्तरागादिसंतानं भववज्वलनवार्मुचं ॥५॥ दिव्यरूपधरं धीरं विशुद्धज्ञा

वज्र पर्वतं

नलोचनं ॥ अपि त्रिदशयोगींद्रैः कल्पनातीतवैभवं ॥६॥ स्याद्वादपविनिर्घातभिन्नान्यमतभूधरं ॥ ज्ञानामृतपयः

पूरैः पवित्रितजगत्त्रयम् ॥७॥ अथवा सर्व ॥ इत्यादिगणनातीतगुणरत्नमहार्णवं देवदेवं स्वयंबुद्धं स्मराद्यं जिन
रां ॥८॥ अथवा ॥ जन्ममृत्युजराक्रांतं रागादिविषमूर्छितं ॥ सर्वसाधारणैर्दोषैर्दृष्टाज्ञेदपूरावृतं ॥९॥ अनेकव्य
संयमज्ञानविच्युतं ॥ संज्ञामात्रेण केचिच्च सर्वज्ञं प्रतिपेदिरे ॥१०॥ अन्यच्च ॥ इतरोऽपि नरः षड्भिः प्रमाणैर्वस्तुसंचयं ॥ म
२ जानन् = दन्मतः केश्चित्सर्वज्ञः सोऽपि नेष्यते ॥११॥ अतः सम्यक् सविज्ञेयः परित्यज्यान्यशासनं ॥ युक्त्यागमविभागेन ध्या
निराकृत्य चेष्टितं सर्वज्ञस्य
मनीषिभिः ॥१२॥ युक्त्यावृषभसेनाद्यैर्निर्धूयासाधुवल्गितं ॥ यस्य सिद्धिः सतां मध्ये लिखिता चंद्रमंडले ॥१३॥ तद्य
६ जिनस्य = था ॥ अनेकवस्तुसंपूर्णं जगद्यस्य चराचरं ॥ स्फुरत्यविकलं बोधविशुद्धादर्शमंडले ॥१४॥ स्वभावजमसंदिग्धं निर्दोषं
सर्वदोदितं ॥ यस्य विज्ञानमत्यक्षं लोकालोकं विसर्पति ॥१५॥ यस्य विज्ञानघर्मांशुप्रभाप्रसरपीडिताः क्षणादेव

३ प्रत्यक्ष । अनुमान । आगम उपमान । अर्थापत्ति । अभाव ॥ ६ प्रमाणसहित = वांछके:

यांतिखद्योताइवदुर्णयाः॥१६॥पादपीठीकृताशेषत्रिदशेंद्रसभाजिरं॥योगिगम्यंजगन्नाथंगुणरत्नमहार्णवं॥१७॥
पवित्रितधरापृष्ठंसमुद्धृतजगत्त्रयं॥मोक्षमार्गप्रणेतारमनंतंपुण्यशासनं॥१८॥प्रभामंडलनिरुद्धार्कचंद्रकोटिसम
८ दत्तं　इंद्रियसर्प　गरुडं
प्रभं॥शरण्यंसर्वगंशांतंदिव्यवाणीविशारदं॥१९॥अक्षोरगशकुंतेशंसर्वाभ्युदयमंदिरं॥दुःखार्णवपतत्सत्वादत्त
उत्कट
हस्तावलंबनं॥२०॥मृगेंद्रविष्टरारूढंमारमातंगघातकं॥इंदुत्रयसमोद्दामछत्रत्रयविराजितं॥२१॥हंसालीपातलील　हंसपंक्ति=
रूपचामरव्रजवीजितं॥वीतदोषंजगन्नाथंवरदंविश्वरूपिणं॥२२॥दिव्यपुष्पानकाशोकराजितंरागवर्जितं॥प्राति
हार्यमहालक्ष्मीलक्षितंपरमेश्वरं॥२३॥नवकेवललब्धिश्रीसंभवंस्वात्मसंभवं॥तुर्यध्यानमहावज्रौकृतकर्मेंधनं
कं॥२४॥रत्नत्रयसुधास्यंदमंदीकृतभवभ्रमं॥वीतरागंजितद्वैतंशिवंशांतंसनातनं॥२५॥अर्हंतमजमव्यक्तंकामदं
७ अविनश्वरं =

कामघातकं॥पुराणपुरुषंदेवंदेवदेवंजिनेश्वरं॥२६॥विश्वचक्षुर्जगद्वंद्यंयोगिनाथंमहेश्वरं॥ज्योतिर्मयमना
त्रातारंभुवनेश्वरं॥२७॥योगीश्वरंतमीशानमादिदेवंचतुर्मुखं॥अनंतमच्युतंशांतंभास्वंतंभूतनायकं॥२८॥सन्म
तिंसुगतंसिद्धंजगज्ज्येष्ठंपितामहं॥महावीरंमुनिश्रेष्ठंपवित्रंपरमाक्षरं॥२९॥नित्यमव्ययमव्यक्तंपरिपूर्ण
नं॥इत्यादिसान्वयानेकपुण्यनामोपलक्षितं॥३०॥सान्वयानीकयोगींद्रवंद्यनामोपलक्षितं॥स्मरसर्वगतं
वीरममरनायकं॥३१॥अनन्यशरणःसाक्षात्तत्संलीनैकमानसः॥तत्स्वरूपमवाप्नोतिध्यानीतन्मयतांगतः
आत्मानं
॥३२॥यमाराध्यशिवंप्राप्तायोगिनोजन्मनिःस्पृहाः॥यंस्मरंत्यनिशंभव्याःशिवश्रीसंगमोत्सुकाः॥३३॥य
गमृतस्यैकामासाद्यकणिकामपि॥शाश्वतंपथितिष्ठंतिप्राणिनःप्रास्तकल्मषाः॥३४॥देवदेवःसईशानोभव्यां

परमात्मनि

जैकभास्करः॥ ध्येयः सर्वात्मना धीरैर्निश्चलीकृतमानसैः॥ तस्मिन्निरंतराभ्यासवशात्संजातनिश्चयाः॥ सर्वाव
स्थासु पश्यंति तमेव परमेष्ठिनं॥ ३॥ उद्धांतदोलं व्यपरंज्योतिस्तद्गुणग्रामरंजितः॥ अविक्षिप्तमना योगी तत्स्वरूपमु
प्राप्यते
पाश्नुते॥ ३७॥ इत्थं तद्भावनानंदसुधास्यंदाभिनंदितः॥ न हि स्वप्नाद्यवस्थासु ध्यायन्प्रच्यवते मुनिः॥ ३८॥ अथ
स्खलते सहितानां
वा॥ तस्य लोकत्रयैश्वर्यं ज्ञानराज्यं स्वभावजं॥ ज्ञानत्रययुषामन्येयोगिनामप्यगोचरः॥ ३९॥ किंच॥ साक्षान्नि
र्विषयं कृत्वा साक्षं चेतः ससंयमी॥ नियोजयत्यविश्रांतं तस्मिन्नेव जगद्गुरौ॥ ४०॥ तद्गुणग्रामसंलीनमानसस्त
द्गताशयः॥ तद्भावभावितो योगी तन्मयत्वं प्रपद्यते॥ ४१॥ तथा हि॥ यदाभ्यासवशात्तस्य तन्मयत्वं प्रजायते॥ त ६ परमात्मस्य
दात्मानमसौ ध्यानी सर्वज्ञीभूतमीक्षते॥ ४२॥ एष देवः स सर्वज्ञः सोहं तद्रूपतां गतः॥ तस्मात्स एव नान्योहं विश्व

१ संबंधंकरोति = आत्मा = १ स्फटिकमणिः =

॥ज्ञानार्णव॥ ॥१३६॥

दर्शीतिमन्यते॥४३॥उक्तंच॥येनयेनहिभावेनयुज्यतेयंत्रवाहकः॥तेनतन्मयतांयातिविश्वरूपोमणिर्यथा॥
४४॥अथवा॥भव्यस्यैवहिभूतानांसाक्षान्मुक्तेर्निबंधनं॥अतःसर्वज्ञताभव्येभवंतीनात्रशंक्यते॥४५॥अयमात्मा
स्वसामर्थ्याद्विश्रुध्यातिनकेवलं॥चालयत्यपिसंक्रुद्धोभुवनानिचतुर्दश॥४६॥त्रैलोक्यानंदबीजंजननजल
धेर्यानपात्रंपवित्रंलोकालोकप्रदीपंस्फुरदमलशरच्चंद्रकोटिप्रभाढ्यं॥कस्यामप्यग्रकोटौजगदखिलमति
म्यलब्धप्रतिष्ठंदेवंविश्वैकनाथंशिवमजमनघंवीतरागंभजस्व॥४७॥इत्याचार्यश्रीशुभचंद्रविरचितेज्ञाना
र्णवेयोगप्रदीपाधिकारेरूपस्थध्यानप्रकरणं॥छ॥वीतरागंस्मरन्योगीवीतरागोविमुच्यते॥रागीसरागमालं
क्रूरकर्माश्रितोभवेत्॥मंत्रमंडलमुद्रादिप्रयोगैर्ध्यातुमुद्यतः॥सुरासुरनरव्रातंक्षोभयत्यखिलंक्षणात्॥२॥क्रु ॥१३६॥

४ परिज्ञानोत्कृष्टेज्ञाति सति =

३ नरक भवनवासी नरक ल्पवासी ज्योतिष्क ग्रीवेयक नवोत्तर पंचोत्तर =

१ जीवस्य =    २ आत्मा =

स्यापस्यसामर्थ्यमचिंत्यं त्रिदशैरपि ॥ अनेकविक्रियासारध्यानमार्गावलंबिनः ॥३॥ बहूनि कर्माणि मुनिप्रवीरै

विद्यानुवादात्प्रकटीकृतानि ॥ असंख्यभेदानि कुतूहलार्थं कुमार्गकुध्यानगतानि संति ॥४॥ असावनंतप्रथित    २ विख्यात =

आत्मा

प्रभावः स्वभावतो यद्यपि यंत्रनाथः ॥ नियुज्यमानः स पुनः समाधौ करोति विश्वं चरणाग्रलीनं ॥५॥ अथवा ॥ स्व

रत्नत्रयात्

प्नेपि कौतुकेनापि नासध्यानानि योगिभिः ॥ सेव्यानि यांति बीजत्वं यतः सन्मार्गहानये ॥६॥ सन्मार्गात्प्रच्युतं चेतः

पुनः वर्षशतैरपि ॥ प्राकृतेन हि केनापि व्यवस्थापयितुं पथि ॥७॥ असध्यानानि जायंते स्वनाशायैव केवलं ॥ रा

परिपूर्ण    समूह    पुरुषः

गाद्यसद्ग्रहावेशात्कौतुकेन कृतान्यपि ॥८॥ निर्भरानंदसंदोहपदसंपादनक्षमं ॥ मुक्तिमार्गमतिक्रम्य कः कुमार्गे

प्रवर्तते ॥९॥ क्षुद्रध्यानप्रपंचचतुराः रागानलोद्दीपिता मुद्रामंडलमंत्रयंत्रकरणैराराधयंत्यादृताः ॥ कामक्रोध    ७ आदरपराः =

 वशीकृतान्निहंसुरान् संसारसौख्यार्थिनो दुष्टान्प्राग्निहतान् पतंति नरके भोगार्थिनो वंचिताः॥१०॥ तद्ध्येयं तदनु
 यं तद्धि चिंत्यं मनीषिभिः॥ यज्जीवकर्मसंबंधविध्वंसायैव जायते॥११॥ स्वयमेव हि सिध्यंति सिद्धयः शांतचेत
अनेकफलसंपूर्णा मुक्तिमार्गावलंबिनां॥१२॥ संभवंति न चाभीष्टसिद्धयः क्षुद्रयोगिनां॥ भवत्यैव पुनस्तेषां
निर्ग्रंथको मुनय
ध्यानभ्रंशो निवारितः॥१३॥ भवप्रभवसंबंधे निरपेक्षा मुमुक्षवः॥ नहि स्वप्नेपि विक्षिप्तं मनः कुर्वंति योगिनः॥१४॥ अ
उद्यमं कुरुते
५ स्वस्वरूपे— रूपे स्थिरीभूतचित्तः प्रक्षीणविभ्रमः॥ अमूर्तमजमव्यक्तं ध्यातुं प्रक्रमते ततः॥१५॥ चिदानंदमयं शुद्धममू
अथ
र्त्तं परमाक्षरं॥ स्मरेद्यत्रात्मनात्मानं तद्रूपातीतमीक्ष्यते॥१६॥ वदंति योगिनो ध्यानं चित्तमेवमनाकुलं॥ कथं शिव
तद्यथा
पन्नमात्मानं संस्मरेन्मुनिः॥१७॥ विविच्य तद्गुणग्रामं तत्स्वरूपं निरूप्य च॥ अनन्यशरणो ज्ञानी तस्मिन्नेव ल 
८ विचार्य—

व्रजेत्॥१८॥ तद्गुणग्रामसंपूर्णं तत्स्वभावैकभावितं॥ कृत्वात्मानं ततो ध्यानी योजयेत्परमात्मनि॥१९॥ द्वयोर्गुणैर्म
तं साम्यं व्यक्तिशक्तिव्यपेक्षया॥ विशुद्धेतरयोः स्वात्मतत्त्वयोः परमागमे॥२०॥ किंच॥ यः प्रमाणनयैर्नूनं स्वतत्त्व
मवबुध्यते॥ बुध्यते परमात्मानं स योगी वीतविभ्रमः॥२१॥ व्योमाकारमनाकारं निष्पन्नं शांतमच्युतं॥ चरमांगा
त्कियदूनं स्वप्रदेशैर्घनैः स्थितं॥२२॥ लोकाग्रशिखरासीनं शिवीभूतमनामयं॥ पुरुषाकारमापन्नमर्थमूर्तं वि
(नीरोगं) (निःशरीरस्य)
चिंतयेत्॥२३॥ तथा हि॥ निःकलस्य विशुद्धस्य निष्पन्नस्य जगद्गुरोः॥ चिदानंदमयस्योच्चैः कथं स्यात्पुरुषाकृ
तिः॥२४॥ तद्यथा॥ विनिर्गतमधूच्छिष्टप्रतिमे मूषिकोदरे॥ यादृग्गगनसंस्थानं तदाकारं स्मरेद्विभुं॥२५॥ सर्वावय
वसंपूर्णं सर्वलक्षणलक्षितं॥ विशुद्धादर्शसंक्रांतप्रतिबिंबसमप्रभं॥२६॥ इत्यसौ सतताभ्यासवशात्संजातनिश्च॥

अपि स्वप्नाद्यवस्थासु तमेवाध्यक्षमीक्षते ॥२७॥ सोऽहं सकलवित्सार्वः सिद्धः साध्यो भवच्युतः ॥ परमात्मा परं
तिर्विश्वदर्शी निरंजनः ॥२८॥ तदासौ निश्चलोऽमूर्तो निष्कलंको जगद्गुरुः ॥ चिन्मात्रो विस्फुरत्युच्चैर्ध्यान
विवर्जितः ॥२९॥ पृथग्भावमतिक्रम्य तथैक्यं परमात्मनि ॥ प्राप्नोति स मुनिः साक्षाद्यथान्यत्वं न विद्यते ॥३०॥
॥उक्तं च॥ निष्कलः परमात्माहं लोकालोकावभासकः ॥ विश्वव्यापी स्वभावस्थो विकारपरिवर्जितः ॥३१॥ इ
विगतविकल्पं क्षीणरागादिदोषं विदितसकलवेद्यं त्यक्तविश्वप्रपंचं ॥ शिवमजमनवद्यं विश्वलोके
पं परमपुरुषमुच्चैर्भावशुद्ध्या भजस्व ॥३२॥ इत्याचार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे
रूपातीतप्रकरणं ॥ छ ॥ प्रसीद शांतिं व्रज संनिरुध्यतां दुरंतजन्मज्वरविप्लुतं मनः ॥ अगाधजन्मार्णव

व्यापित —

प्रसह्याना—

पारवर्तिनांयदिश्रियंवांछसिविश्वदर्शिनां॥१॥यदिरोद्धुंनशक्नोतितुछवीर्योमुनिर्मनः॥तद्वारागेतरध्वं
संछत्वाकुर्यात्सुनिश्चलं॥२॥अनुप्रेक्षाश्चधर्मस्यस्युःसदैवनिबंधनं॥चित्तभूमौस्थिरीकृत्यताःस्वरूपं
निरूपय॥३॥स्फेटयत्याशुनिःकंपोयथादीपोघनंतमः॥तथाकर्मकलंकौघंमुनेर्ध्यानंसुनिश्चलं॥४॥अ
थवा॥चलत्येवाल्पसत्वानांक्रियमाणमपिस्थिरं॥चेतःशरीरिणांशश्वद्विषयैर्व्याकुलीकृतं॥५॥नस्वा
परमपुरुषैः
त्वमतःप्रोक्तेविद्यतेत्यल्पचेतसां॥आद्यसंहननस्यैवतत्प्रणीतंपुरातनैः॥६॥उक्तंच॥छिन्नेभिन्नेहतेदग्धे
विभिन्ने — घ्राणेति
देहेस्वमिवदूरगं॥प्रपश्यन्वर्षवातादिदुःखैरपिनकंपते॥१॥नपश्यतितदाकिंचिन्नशृणोतिनजिघ्रति॥स्पृ
ष्टंकिंचिन्नजानातिसाक्षान्निर्वृत्तलेपवत्॥२॥आद्यसंहननोपेतानिर्वेदपदवीश्रिताः॥कुर्वंतिनिश्चलंचेतःशु
निष्पन्नः

२ परित्यज्य— १ भाता पुरुषस्य मुनेः २ संयोगं न करोति १ आद्यसंहनन चतुर्दशपूर्वयो

क्षध्यानक्षमं नराः॥७॥ सामग्र्योरुभयोर्ध्यातुर्ध्यानं बाह्यांतरंगयोः॥ पूर्वयोरेव शुक्लं स्यान्नान्यथा जन्मकोटिषु॥१०॥
अतिक्रम्य शरीरादिसंगानात्मन्यवस्थितः॥ नैवाक्षमनसोर्योगं करोत्येकाग्रतां श्रितः॥११॥ असंख्येयमसंख्येयं
(समूहं) (उपशमकस्य)
द्विगुणे द्विहि क्षीयते क्षपकस्यैव कर्मजातमनुक्रमात्॥१२॥ शमकस्य क्रमात्कर्म शांतिमायाति पूर्ववत्॥ प्राप्नोति नि
तांतं कं समोत्कर्षं समलक्षणं॥१३॥ धर्मध्यानस्य विज्ञेया स्थितिरांतर्मुहूर्तिकी॥ क्षायोपशमिको भावो लेश्या शुक्लैव
शाश्वती॥१४॥ इदमत्यंतनिर्वेदविवेकप्रशमोद्भवं॥ स्वात्मानुभवमत्यक्षं योजयत्यंगिनां सुखं॥१५॥ तथा चोक्तं॥ अ
(प्रसन्न- शब्द) (मुने)
लौल्यमारोग्यमनिष्ठुरत्वं गंधः शुभो मूत्रपुरीषमल्पं॥ कांतिः प्रसादः स्वरसौम्यता च योगप्रवृत्तेः प्रथमं हि चिह्नं॥१६॥
पर्यवसाने स्वतनुं विहाय ध्यानेन संन्यस्तसमस्तसंगाः॥ ग्रैवेयकानुत्तरपुण्यवासे सर्वार्थसिद्धौ प्रभवंति भव्याः॥१७॥

परित्यक्तसंगाः परिग्रहाः

२ कामज्वरपीडारहित =

माला भूषण आभरण २ देव

त्रांचिंत्यमहाप्रभावकलितं लावण्यलीलान्वितं स्रग्भूषांबरदिव्यलांछनयुतं चंद्रावदातं वपुः॥ संप्राप्यो नंतवीर्य
बोधप्रभुभगं कामज्वरार्तिच्युतं सेवंते विगतांतरायमतुलं सौख्यं चिरं स्वर्गिणः॥१०॥ ग्रैवेयकानुत्तरवासभाजां वीचा
रहीनं सुखमत्युदारं॥ निरंतरं पुण्यपरंपराभिर्विवर्द्धितं वार्द्धिरिवेंदुपादैः॥११॥ देवराज्यं समासाद्य यत्सुखं स्वर्गवासि
नः॥ निर्विघ्नं प्रतितन्वतो नंतं सौख्यं कल्पातिवर्तिनां॥१२॥ संभवं त्यथ कल्पेषु ते घ्रचिंत्यविभूतिजां॥ प्राप्नुवंति परं सौख्यं सु
राः स्त्रीभोगलांछितं॥१३॥ दशांगभोगसंभूतं महाष्टगुणवर्द्धितं॥ यत्कल्पवासिनां सौख्यं तद्वक्तुं केन पार्यते॥१४॥ सर्वदं
द्वविनिर्मुक्तं सर्वाभ्युदयभूषितं॥ नित्योत्सवयुतं दिव्यं दिवि सौख्यं दिवौकसां॥१५॥ प्रतिसमयमुदीर्णं स्वर्गसाम्राज्य
रूढं सकलविषयबीजं क्षांतदत्ताभिनंदं॥ ललितयुवतिलीलालिंगनादिप्रसूतं सुखमतुलमुदारं स्वर्गिणो निर्विशंति॥
।२४।

अखंड — उत्कट — भुंजंति — संयुक्तं — कल्पवृक्षैः — अणिमादि — स्वर्गे — देवानां

४ ग्रैवेयकादिनां =

२ क्लिष्टसौख्यहीनं = २ चंद्रकिरणैः = ५ समर्थ्यते = क. हर हितं = ७ भुंजंति =

उत्तम



सर्वाभिमतभावोत्थं निर्विघ्नं स्वःसुखामृतं॥ सेव्यमानां न बुध्यंते गतं जन्म दिवौकसः॥२५॥ तस्माच्च्युत्वा त्रिदिव
टला द्दिव्यभोगावसाने कुर्वंत्यस्यां भुवि नरनुते पुण्यवंशेऽवतारं॥ तत्रैश्वर्यं च रम्यवपुषां प्राप्य देवोपनीतै भोगै
र्नित्योत्सवपरिणतैर्लाल्यमाना वसंति॥२६॥ ततो विवेकमालंब्य विरज्य जननभ्रमात्॥ त्रिरत्नशुद्धिमासाद्य तपः
कृत्वान्यदुःकरं॥२७॥ धर्मध्यानं च शुक्लं च स्वीकृत्यानंतवीर्यतः॥ घातिकर्मक्षयं कृत्वा व्रजंति पदमव्ययं॥२८॥ इत्या
चार्यश्रीशुभचंद्रविरचिते ज्ञानार्णवे योगप्रदीपाधिकारे धर्मध्यानफलप्रतिपादनप्रकरणं॥ छ॥ रागाद्युग्ररुजा
लापकलितं संदेहदोलायितं विक्षिप्तं सकलेंद्रियार्थगहने कृत्वा मनो निश्चलं॥ संसारव्यसनप्रबंधविलयं मुक्ते
र्विनोदास्पदं धर्मध्यानमिदं विदंतु निपुणा अत्यक्षसौख्यार्थिनः॥१॥ आत्मार्थं श्रय मुंच मोहगहनं मित्रं विवेकं

२ धर्मध्यानं = परित्यक्तः

मध्ये = २ शुक्लं आरभ्यते

कुरु वैराग्यं भज भावय स्वं नियतं भेदं शरीरात्मनः। धर्मध्यानसुधासमुद्रकुहरे कृत्वावगाहं परं पश्यानंतसुख
स्वभावकलितं मुक्तेर्मुखांभोरुहं ॥ (कमलं) अथ धर्ममतिक्रांतः शुद्धिं चात्यंतिकीं श्रितः । ध्यातुमारभते धीरः शुक्लमत्यंत
निर्मलं ॥१॥ निःक्रियं करणातीतं ध्यानधारणवर्जितं । अंतर्मुखं च यच्चित्तं तच्छुक्लमिति पठ्यते ॥२॥ आदिसंहननो
पेतः पूर्वज्ञः पुण्यचेष्टितः । चतुर्विधमपि ध्यानं स शुक्लं ध्यातुमर्हति ॥३॥ उक्तं च ॥ शुचिगुणयोगाच्छुक्लं कषायरज
सः क्षयादुपशमाद्वा । वैडूर्यमणिशिखामिव सुनिर्मलं निःप्रकंपं च ॥ छ ॥ कषायमलविश्लेषात्प्रशमाद्वा प्रसूयते । य
तः पुंसामतस्तज्ज्ञैः शुक्लमुक्तं निरुक्तिकं (यथार्थक) ॥४॥ छद्मस्थयोगिनामाद्ये द्वे शुक्ले परिकीर्तिते । द्वे चांते क्षीणदोषाणां के
वलज्ञानचक्षुषां ॥५॥ श्रुतज्ञानार्थसंबंधाच्छ्रुतालंबनपूर्वके । पूर्वे परे जिनेंद्रस्य निःशेषालंबनच्युते ॥६॥ सवितर्क

२ वज्रवृषभनाराच संहनन =
४ चतुर्दश पूर्वज्ञ
शुक्लध्यानज्ञाते =

२ अपतनशीलं =

सवीचारं सपृथक्त्वं च कीर्तितं ॥ शुक्लमाद्यं द्वितीयं तु विपर्यस्तमतः परं ॥१०॥ सवितर्कमवीचारमेकत्वपदलां
छितं ॥ कीर्तितं मुनिभिः शुक्लं द्वितीयमतिनिर्मलं ॥११॥ सूक्ष्मक्रियाप्रतिपाति तृतीयं सार्थनामिकं ॥ समुच्छिन्न
यं ध्यानं तुर्यमार्यैर्निवेदितं ॥ तत्र त्रियोगिनामाद्यं द्वितीयं त्वेकयोगिनां ॥ तृतीयं तनुयोगानां स्यात्तुरीयमयो ४सूक्ष्मयोगकाययोगानां =
भिन्नत्वेन
॥१३॥ तद्यथा ॥ पृथक्त्वेन वितर्कस्य वीचारो यत्र विद्यते ॥ सवितर्कं सवीचारं सपृथक्त्वं तदिष्यते ॥१४॥ अवीचारो
वितर्कस्य यत्रैकत्वेन संस्थितः ॥ सवितर्कमवीचारं तदेकत्वं विदुर्बुधाः ॥१५॥ पृथक्त्वं तत्र नानात्वं वितर्कः श्रुत
नानाभेद
मुच्यते ॥ अर्थव्यंजनयोगानां वीचारः संक्रमः स्मृतः ॥१६॥ अर्थादर्थांतरापत्तिरर्थसंक्रांतिरिष्यते ॥ ज्ञेयाव्यं
क्रांतिर्व्यंजनाद्व्यंजने स्थितिः ॥१७॥ स्यादेवं योगसंक्रांतिर्योगाद्योगांतरे गतिः ॥ विशुद्धध्यानसामर्थ्यात्क्षीण